ಹೀಗೆ ಮನುಷ್ಯೋತ್ತಮರಿಗೆ ಮೋಕ್ಷದಲ್ಲಿ ಆಗುವ ನೂರು ಆನಂದವು ಮುಕ್ತಮನುಷ್ಯಚಕ್ರವರ್ತಿಗಳ ಒಂದು ಆನಂದಕ್ಕೆ ಸಮಾನವಾಗಿರುತ್ತದೆ.

ಮುಕ್ತಮನುಷ್ಯಚಕ್ರವರ್ತಿಗಳಿಗೆ ಮೋಕ್ಷದಲ್ಲಿ ಆಗುವ ನೂರು ಆನಂದವು ಮುಕ್ತಮನುಷ್ಯಗಂಧರ್ವರ ಒಂದು ಆನಂದಕ್ಕೆ ಸಮಾನವಾಗಿರುತ್ತದೆ.

ಮುಕ್ತಮನುಷ್ಯಗಂಧರ್ವರಿಗೆ ಮೋಕ್ಷದಲ್ಲಿ ಆಗುವ ನೂರು ಆನಂದವು ಮುಕ್ತದೇವಗಂಧರ್ವರ ಒಂದು ಆನಂದಕ್ಕೆ ಸಮಾನವಾಗಿರುತ್ತದೆ.

ಮುಕ್ತದೇವಗಂಧರ್ವರಿಗೆ ಮೋಕ್ಷದಲ್ಲಿ ಆಗುವ ನೂರು ಆನಂದವು ಪಿತೃಗಳ ಒಂದು ಆನಂದಕ್ಕೆ ಸಮಾನವಾಗಿರುತ್ತದೆ.

ಮುಕ್ತಪಿತೃಗಳಿಗೆ ಮೋಕ್ಷದಲ್ಲಿ ಆಗುವ ನೂರು ಆನಂದವು ಆಜಾನದೇವತೆಗಳ ಒಂದು ಆನಂದಕ್ಕೆ ಸಮಾನವಾಗಿರುತ್ತದೆ.

ಮುಕ್ತ ಆಜಾನದೇವತೆಗಳಿಗೆ ಮೋಕ್ಷದಲ್ಲಿ ಆಗುವ ನೂರು ಆನಂದವು ಕರ್ಮಜದೇವತೆಗಳ ಒಂದು ಆನಂದಕ್ಕೆ ಸಮಾನವಾಗಿರುತ್ತದೆ.

ಮುಕ್ತ ಕರ್ಮಜದೇವತೆಗಳಿಗೆ ಮೋಕ್ಷದಲ್ಲಿ ಆಗುವ ನೂರು ಆನಂದವು ತತ್ತ್ವಾಭಿಮಾನಿದೇವತೆಗಳ ಒಂದು ಆನಂದಕ್ಕೆ ಸಮಾನವಾಗಿರುತ್ತದೆ.

ಮುಕ್ತ ತತ್ತ್ವಾಭಿಮಾನಿದೇವತೆಗಳಿಗೆ ಮೋಕ್ಷದಲ್ಲಿ ಆಗುವ ನೂರು ಆನಂದವು ಮುಕ್ತ ದಕ್ಷಪ್ರಜಾಪತಿಯ ಒಂದು ಆನಂದಕ್ಕೆ ಸಮಾನವಾಗಿರುತ್ತದೆ.

ಮುಕ್ತದಕ್ಷಪ್ರಜಾಪತಿಗೆ ಮೋಕ್ಷದಲ್ಲಿ ಆಗುವ ನೂರು ಆನಂದವು ಇಂದ್ರನ ಒಂದು ಆನಂದಕ್ಕೆ ಸಮಾನವಾಗಿರುತ್ತದೆ.

ಮುಕ್ತ ಇಂದ್ರನಿಗೆ ಮೋಕ್ಷದಲ್ಲಿ ಆಗುವ ನೂರು ಆನಂದವು ಶೇಷದೇವರ ಒಂದು ಆನಂದಕ್ಕೆ ಸಮಾನವಾಗಿರುತ್ತದೆ.

ಮುಕ್ತಶೇಷದೇವರಿಗೆ ಮೋಕ್ಷದಲ್ಲಿ ಆಗುವ ನೂರು ಆನಂದವು ಚತುರ್ಮುಖನ ಒಂದು ಆನಂದಕ್ಕೆ ಸಮಾನವಾಗಿರುತ್ತದೆ.

ಹೀಗೆ ಆನಂದತಾರತಮ್ಯವನ್ನು ಹೇಳಿ ಇದರಂತೆ ಜ್ಞಾನ-ವಿಷ್ಣುಭಕ್ತಿ ಮೊದಲಾದ ಎಲ್ಲ ಗುಣಗಳಲ್ಲಿಯೂ ತಾರತಮ್ಯವನ್ನು ತಿಳಿಯಬೇಕು. ಪರಿಮಾಣದ ದೃಷ್ಟಿಯಿಂದ ನೂರು ಪಾಲು ಹೆಚ್ಚು ಎಂದು ಹೇಳಿದ್ದರೂ ಆನಂದಾದಿಗಳ ಸ್ಪಷ್ಟತೆಯ ದೃಷ್ಟಿಯಿಂದ ಅನಂತಪಾಲು ಮಿಗಿಲಾದವರು ಎಂದು ತಿಳಿಯುವದು.

## ಅಥ ಭೃಗುವಲ್ಲಿ

ಬ್ರಹ್ಮವಲ್ಲಿಯಲ್ಲಿ ಭಗವಂತನ ಅನ್ನಮಯಾದಿಪಂಚರೂಪಗಳನ್ನು ತಿಳಿಸಿ ಆ ವಿಷಯದಲ್ಲಿ ಸಮಾಖ್ಯರೂಪವಾದ ಭೃಗು-ವರುಣಸಂವಾದರೂಪವಾದ ಆಖ್ಯಾಯಿಕೆಯನ್ನು ಭೃಗುವಲ್ಲಿಯಲ್ಲಿ ನಿರೂಪಿಸಲಾಗಿದೆ.

ಭೃಗುವು ತನ್ನ ತಂದೆಯಾದ ವರುಣನ ಬಳಿಗೆ ಹೋಗಿ ಪರಬ್ರಹ್ಮನನ್ನು ಉಪದೇಶಿಸು ಎಂದು ಪ್ರಾರ್ಥಿಸಿದ. ಭೃಗುವಿನ ಪ್ರಾರ್ಥನೆಗೆ ವರುಣ ನೀಡಿದ ಉಪದೇಶ ಈ ಕೆಳಗಿನಂತಿದೆ.

ಅನ್ನ-ಪ್ರಾಣ-ಚಕ್ಷು-ಶ್ರೋತ್ರ-ಮನಸ್ಸು-ವಾಕ್-ವಿಜ್ಞಾನ-ಆನಂದ ಮೊದಲಾದವುಗಳು ಭಗವಂತನ ಹೆಸರುಗಳೇ ಆಗಿವೆ. ಯಾರಿಂದ ಎಲ್ಲ ಜೀವರು ಜನ್ಮವನ್ನು ಪಡೆದು ಕ್ರಿಯಾಶೀಲರಾಗುವರೋ ಪ್ರಳಯಕಾಲದಲ್ಲಿ ಎಲ್ಲರೂ ಯಾರಲ್ಲಿ ಲಯ ಹೊಂದುವರೋ ಅವನನ್ನೇ ಬ್ರಹ್ಮ ಎಂದು ತಿಳಿದು ಮನನ-ನಿಧಿಧ್ಯಾಸನಗಳನ್ನು ಮಾಡು ಎಂದು.

ಭೃಗು ವರುಣನ ಉಪದೇಶದಂತೆ ಮೊದಲು ಅನ್ನನಾಮಕ ಭಗವಂತನನ್ನು ಕುರಿತು ತಪಸ್ಸನ್ನು ಆಚರಿಸಿದನು.ಅನ್ನನಾಮಕ ಅನಿರುದ್ಧನನ್ನು ಬ್ರಹ್ಮನೆಂದು ಸಾಕ್ಷಾತ್ಕಾರ ಮಾಡಿಕೊಂಡನು.

### ... ಅನ್ನನ ಮಹಿಮೆ ...

ಅನ್ನನಾಮಕ ಭಗವಂತನಿಂದಲೇ ಈ ಎಲ್ಲ ಜಗತ್ತು ಹುಟ್ಟಿ ಕ್ರಿಯಾಶೀಲತೆಯನ್ನು ಪಡೆದು ಕೊನೆಗೆ ಪ್ರಳಯದಲ್ಲಿ ಅನ್ನನಾಮಕ ಭಗವಂತನ ಉದರದಲ್ಲಿ ಲಯವನ್ನು ಹೊಂದುತ್ತದೆ.ಮುಂದೆ ಅವನ ಅನುಗ್ರಹದಿಂದಲೇ ಮೋಕ್ಷದಲ್ಲಿ ಆನಂದವನ್ನು ಹೊಂದುತ್ತದೆ.

ಹೀಗೆ ಭೃಗುವು ಅನ್ನನಾಮಕ ಭಗವಂತನನ್ನು ಸಾಕ್ಷಾತ್ಕಾರಮಾಡಿಕೊಂಡ. ಮತ್ತೆ ವರುಣನ ಬಳಿ ಬಂದ ಭೃಗುವಿಗೆ ವರುಣ ಅಷ್ಟರೂಪಿಯಾದ ಭಗವಂತನನ್ನು ಉಪದೇಶಿಸಿದನು.

ಏಕಕಾಲದಲ್ಲಿ ಆ ಎಲ್ಲ ರೂಪಗಳನ್ನು ಸಾಕ್ಷಾತ್ಕರಿಸಿ ಕೊಳ್ಳುವದು ಅಶಕ್ಯವಾದ್ದರಿಂದ ಮೊದಲು ಅನ್ನಮಯನ ಸಾಕ್ಷಾತ್ಕಾರವನ್ನು ಪಡೆದನು. ತಾನು ಪಡೆದ ವಿದ್ಯೆಯನ್ನು ಗುರುಗಳಿಗೆ ನಿವೇದಿಸಲು ಗುರುಗಳ ಬಳಿ ತೆರಳಿದ. ಮೊದಲು ಪಡೆದ ವಿದ್ಯೆಯನ್ನು ಗುರುಗಳಲ್ಲಿ ಒಪ್ಪಿಸಿದ. ಮತ್ತೊಂದು ಭಗವದ್ರೂಪದ ಸಾಕ್ಷಾತ್ಕಾರಕ್ಕಾಗಿ ಪುನಃ

ಪ್ರಾರ್ಥಿಸಿದ.ವರುಣ ಉಪದೇಶಿಸಿದ. ಹೀಗೆ ಅನ್ನ-ಪ್ರಾಣ-ಚಕ್ಷುಷ್-ಶ್ರೋತ್ರ-ಮನಸ್ಸು-ವಾಕ್-ವಿಜ್ಞಾನ-ಆನಂದ ಎಂಬ ಅಷ್ಟರೂಪಿಯಾದ ಭಗವಂತನನ್ನು ಭೃಗುವು ಮತ್ತೆ ಮತ್ತೆ ಬಂದು ವರುಣನಿಂದ ಉಪದೇಶ ಪಡೆದ. ಮನನನಿಧಿಧ್ಯಾಸನಗಳಿಂದ ಆ ಆ ರೂಪಗಳನ್ನು ಸಾಕ್ಷಾತ್ಕರಿಸಿಕೊಂಡನು.

ಇದು ವರುಣ ಉಪದೇಶಿಸಿದ ವಿದ್ಯೆ. ಇಲ್ಲಿ ಸರ್ವವ್ಯಾಪ್ತನಾದ ಭಗವಂತನನ್ನು ವರ್ಣಿಸಲಾಗಿದೆ.ವರುಣ ಉಪದೇಶಿಸಿದಂತೆ ಅನ್ನ ಮೊದಲಾದ ಅಷ್ಟರೂಪಿಯಾದ ಭಗವಂತನನ್ನು ಯಾರು ತಿಳಿಯುವರೋ ಅವನು ಮುಕ್ತನಾಗಿ ಭಗವಂತನನ್ನು ಹೊಂದುತ್ತಾನೆ. ಅಂದರೆ ಭಗವದನುಗ್ರಹರೂಪವಾದ ಮೋಕ್ಷವನ್ನು ಹೊಂದಿ ಅಲ್ಲಿ ಮತ್ತೆ ಮಹತ್ತರವಾದ ಆನಂದವನ್ನು ಹೊಂದುತ್ತಾನೆ.ಇಹ ಲೋಕದಲ್ಲಿ ಶ್ರೇಷ್ಠವಾದ ಸಂತತಿ.ಪಶು ಮೊದಲಾದ ಐಶ್ವರ್ಯಗಳನ್ನು ಪಡೆದು ಸುಖವಾಗಿ ಸಂಸಾರನೌಕೆಯನ್ನು ತರಣಮಾಡುತ್ತಾನೆ.

ಶೀಕ್ಷಾವಲ್ಲಿ ಬ್ರಹ್ಮವಲ್ಲಿಗಳಲ್ಲಿ ಭಗವಂತನ ರೂಪಗಳು ಹಾಗು ಸ್ಥಾನಗಳನ್ನು ತಿಳಿಸಿದರೂ ಉಪಾಸನೆಯ ವೈವಿಧ್ಯತೆಯ ಫಲಗಳನ್ನು ಈ ಭೃಗುವಲ್ಲಿಯಲ್ಲಿ ನಿರೂಪಿಸಿದ್ದಾರೆ.

ಈ ಉಪನಿಷತ್ತಿನಲ್ಲಿ ತಿಳಿಸಿದ ಭಗವಂತನ ಎಲ್ಲ ರೂಪಗಳ ಸಾಕ್ಷಾತ್ಕಾರವನ್ನು ಚತುರ್ಮುಖಬ್ರಹ್ಮದೇವರು ಪಡೆದಿರುತ್ತಾರೆ.ಆದ್ದರಿಂದ ಸಕಲಭೋಗಗಳನ್ನು ಅನುಭವಿಸುತ್ತಾ ಹಾ3 ಹು3 ಎಂಬ ಸಾಮಗಾನದ ಉದ್ಗಾರವನ್ನು ಮಾಡುತ್ತಾ ಸುಖಾತಿಶಯವನ್ನು ಹೊಂದುತ್ತಾರೆ. ಇಂತಹ ಚತುರ್ಮುಖಬ್ರಹ್ಮದೇವರಿಗೂ ಭಗವಂತ ನಿಯಾಮಕನಾಗಿದ್ದಾನೆ. ಇಂತಹ ರಹಸ್ಯವಿದ್ಯೆಯನ್ನು ವರುಣನು ಭೃಗುವಿಗೆ ಉಪದೇಶಿಸಿದ್ದಾನೆ. ಅವುಗಳೇ ಈ ತೈತ್ತಿರೀಯೋಪನಿಷನ್ಮಂತ್ರಗಳು.

ಸುಧೀಜನವಿಧೇಯ

**ಬಿ.ಆರ್.ವೆಂಕಟೇಶಾಚಾರ್ಯ**

# तैत्तिरीयोपनिषत्

ॐ शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् । ॐ शान्तिः शान्तिः शान्तिः ।।१.१।।

शीक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलम् । साम सन्तानः । इत्युक्तः शीक्षाध्यायः ।।१.२।।

स ह नौ यशः । सह नौ ब्रह्मवर्चसम् । अथातः सꣳहिताया उपनिषदं व्याख्यास्यामः । पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम् । ता महासंꣳहिता इत्याचक्षते ।।१.३।।

अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । आकाशः सन्धिः । वायुः सन्धानम् । इत्यधिलोकम् ।।१.४।।

अथाधिज्यौतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् । आपः सन्धिः । वैद्युतः सन्धानम् । इत्यधिज्यौतिषम् ।।१.५।।

अथाधिविद्यम् । आचार्यः पूर्वरूपम् । अन्तेवास्युत्तररूपम् । विद्या सन्धिः । प्रवचनꣳसन्धानम् । इत्यधिविद्यम् ।।१.६।।

अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा सन्धिः । प्रजननꣳसन्धानम् । इत्यधिप्रजम् ॥१.७॥

अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक् सन्धिः । जिह्वा सन्धानम् । इत्यध्यात्मम् । इतीमा महासꣳहिताः । य एवमेता महासꣳहिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्गेण लोकेन ॥१.८॥

यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात् सम्बभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय ॥१.९॥

आवहन्ती वितन्वाना । कुर्वाणा चीरमात्मनः । वासाꣳसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमावह । लोमशां पशुभिः सह स्वाहा ॥१.१०॥

आ मा यन्तु ब्रह्मचारिणः स्वाहा । वि मा यन्तु ब्रह्मचारिणः स्वाहा । प्रमा यन्तु ब्रह्मचारिणः स्वाहा । दमा यन्तु ब्रह्मचारिणः स्वाहा । शमा यन्तु ब्रह्मचारिणः स्वाहा । यशो जनेऽसानि स्वाहा । श्रेयान् वस्यसोऽसानि स्वाहा । तं त्वा भग प्रविशानि स्वाहा । स मा भग प्र विश स्वाहा । तस्मिन् सहस्रशाखे । नि भगाहं त्वयि मृजे स्वाहा ॥१.११॥

यथाऽपः प्रवता यन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धातरा यन्तु सर्वतः स्वाहा । प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व ।।१.१२।।

भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः । तासामु ह स्मै तां चतुर्थीम् । माहाचमस्यः प्रवेदयते । मह इति । तद् ब्रह्म । स आत्मा । अङ्गान्यन्या देवताः ।।१.१३।।

भूरिति वा अयं लोकः । भुव इत्यन्तरिक्षम् । सुवरित्यसौ लोकः । मह इत्यादित्यः । आदित्येन वाव सर्वे लोका महीयन्ते । भूरिति वा अग्निः । भुव इति वायुः । सुवरित्यादित्यः । मह इति चन्द्रमाः । चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते । भूरिति वा ऋचः । भुव इति सामानि । सुवरिति यजूꣳषि । मह इति ब्रह्म । ब्रह्मणा वाव सर्वे वेदा महीयन्ते । भूरिति वै प्राणः । भुव इत्यपानः । सुवरिति व्यानः । मह इत्यन्नम् । अन्नेन वाव सर्वे प्राणा महीयन्ते । ता वा एताश्चतस्रश्चतुर्धा । चतस्रश्चतस्रो व्याहृतयः । ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति ।।१.१४।।

स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः । अन्तरेण तालुके । य एषस्तन इवावलम्बते । सेन्द्रयोनिः । यत्रासौ केशान्तो वि वर्तते । व्यपो ह्य शीर्षकपाले ।।१.१५।।

भूरित्यग्नौ प्रतितिष्ठति । भुव इति वायौ । सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यम् । आप्नोति मनसस्पतिम् ।

वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिः । एतत् ततो भवति ।।१.१६।।

आकाशशरीरं ब्रह्म । सत्यात्म प्राणारामं मन आनन्दम् । शान्तिसमृद्धममृतम् । इति प्राचीनयोग्योपास्व ।।१.१७।।

पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः । अग्निर्वायुरादित्य-श्चन्द्रमा नक्षत्राणि । आप ओषधयो वनस्पतय आकाश आत्मा इत्यधिभूतम् । अथाध्यात्मम् । प्राणो व्यानोऽपान उदानः समानः । चक्षुः श्रोत्रं मनो वाक् त्वक् । चर्म माꣳसꣳस्नावास्थि मज्जा । एतदधि विधाय ऋषिरवोचत् । पाङ्क्तं वा इदꣳसर्वम् । पाङ्क्तेनैव पाङ्क्तꣳस्पृणोतीति ।।१.१८।।

ओमिति ब्रह्म । ओमितीदꣳसर्वम् । ओमित्येतदनुकृति ह स्म वा अप्यो श्रावयेत्या श्रावयन्ति । ओमिति सामानि गायन्ति । ओꣳशोमिति शस्त्राणि शꣳसन्ति । ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति । ओमिति ब्रह्मा प्रसौति । ओमित्यग्निहोत्र-मनुजानाति । ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति । ब्रह्मैवोपाप्नोति ।।१.१९।।

ऋतं च स्वाध्यायप्रवचने च । सत्यं च स्वाध्यायप्रवचने च । तपश्च स्वाध्यायप्रवचने च । दमश्च स्वाध्यायप्रवचने च । शमश्च स्वाध्यायप्रवचने च । अग्नयश्च स्वाध्यायप्रवचने च । अग्निहोत्रं च स्वाध्यायप्रवचने च । अतिथयश्च स्वाध्यायप्रवचने च । मानुषं च स्वाध्यायप्रवचने च । प्रजा च स्वाध्यायप्रवचने च । प्रजनश्च स्वाध्यायप्रवचने च । प्रजातिश्च स्वाध्यायप्रवचने च ।।१.२०।।

सत्यमिति सत्यवचा राथीतरः । तप इति तपो नित्यः पौरुशिष्टिः । स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः । तद्धि तपस्तद्धि तपः ॥१.२१॥

अहं वृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरेरिव । ऊर्ध्वपवित्रो वाजिनीवस्वमृतमस्मि । द्रविणꣳसवर्चसम् । सुमेधा अमृतोक्षितः । इति त्रिशङ्कोर्वेदानुवचनम् ॥१.२२॥

वेदमनूच्याऽचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्र मदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । देवपितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि । नो इतराणि । यान्यस्माकꣳसुचरितानि । तानि त्वयोपास्यानि । नो इतराणि । ये के चास्मच्छ्रेयाꣳसो ब्राह्मणाः । तेषां त्वयाऽसने न प्रश्वसितव्यम् । श्रद्धया देयम् । अश्रद्धया देयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् ॥१.२३॥

अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः । अथाभ्याख्यातेषु । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तेषु वर्तेरन् । तथा तेषु वर्तेथाः ।

एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमु चैतदुपास्यम् ।।१.२४।।

ॐ शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वादिषम् । ऋतमवादिषम् । सत्यमवादिषम् । तन्मामावीत् । तद्वक्तारमावीत् । आवीन्माम् । आवीद्वक्तारम् । ॐ शान्तिः शान्तिः शान्तिः ।। १.१ ।।

स ह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ।।२.१।।

ब्रह्मविदाप्नोति परम् । तदेषाभ्युक्ता । सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान्त्सह । ब्रह्मणा विपश्चितेति ।।२.२।।

तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः । आकाशाद् वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात् पुरुषः ।।२.३।।

स वा एष पुरुषोऽन्नरसमयः । तस्येदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छं प्रतिष्ठा ।।२.४।।

तदप्येष श्लोको भवति । अन्नाद् वै प्रजाः प्रजायन्ते । याः काश्च पृथिवीꣳश्रिताः । अथो अन्नेनैव जीवन्ति । अथैनदपि यन्त्यन्ततः । अन्नꣳहि भूतानां ज्येष्ठम् । तस्मात् सर्वौषधमुच्यते । सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते । अन्नꣳहि भूतानां ज्येष्ठम् । तस्मात् सर्वौषधमुच्यते । अन्नाद् भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि। तस्मादन्नं तदुच्यत इति ॥२.५॥

तस्माद् वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्राण एव शिरः । व्यानो दक्षिणः पक्षः । अपान उत्तरः पक्षः । आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठा ॥२.६॥

तदप्येष श्लोको भवति । प्राणं देवा अनुप्राणन्ति । मनुष्याः पशवश्च ये । प्राणो हि भूतानामायुः । तस्मात् सर्वायुषमुच्यते । सर्वमेव त आयुर्यन्ति । ये प्राणं ब्रह्मोपासते । प्राणो हि भूतानामायुः । तस्मात् सर्वायुषमुच्यत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥२.७॥

तस्माद् वा एतस्मात् प्राणमयात् । अन्योन्तर आत्मा मनोमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य यजुरेव शिरः । ऋग् दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा ॥२.८॥

तदप्येष श्लोको भवति । यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचनेति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥२.९॥

तस्माद् वा एतस्मान्मनोमयात् । अन्योऽन्तर आत्मा विज्ञानमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य श्रद्धैव शिरः । ऋतं दक्षिणः पक्षः । सत्यमुत्तरः पक्षः । योग आत्मा । महः पुच्छं प्रतिष्ठा ॥२.१०॥

तदप्येष श्लोको भवति । विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च । विज्ञानं देवाः सर्वे । ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद् वेद । तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा । सर्वान् कामान्त्समश्नुत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥२.११॥

तस्माद्वा एतस्माद् विज्ञानमयात् । अन्योऽन्तर आत्माऽ-नन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा ।

तदप्येष श्लोको भवति । असन्नेव स भवति । असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद् वेद । सन्तमेनं ततो विदुरिति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥२.१२॥

अथातोऽनुप्रश्नाः । उताविद्वानमुं लोकं प्रेत्य । कश्चन गच्छती३ । आहो विद्वानमुं लोकं प्रेत्य । कश्चित्समश्नुता३उ ॥२.१३॥

सोऽकामयत । बहुस्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इद९ँसर्वमसृजत । यदिदं किञ्च । तत् सृष्ट्वा । तदेवानुप्राविशत् । तदनु प्रविश्य । सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च । निलयनं चानिलयनं च । विज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्यमभवत् । यदिदं किञ्च । तत् सत्यमित्याचक्षते ॥२.१४॥

तदप्येष श्लोको भवति । असद् वा इदमग्र आसीत् । ततो वै सदजायत । तदात्मान९ँस्वयमकुरुत । तस्मात् तत् सुकृतमुच्यत इति । यद् वै तत् सुकृतम् । रसो वै सः । रस९ँह्येवायं लब्ध्वाऽनन्दी भवति । को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवाऽनन्दयाति ॥२.१५॥

यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति । तत् त्वेव भयं विदुषोऽमन्वानस्य । तदप्येष श्लोको भवति । भीषाऽस्माद् वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति ॥२.१६॥

सैषानन्दस्य मीमांऽसा भवति । युवा स्यात् साधु युवाऽध्यायकः । आशिष्ठो द्रढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः । स एको मनुष्यगन्धर्वाणामानन्दः । ।।२.१७।।

श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्य-गन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितृणां चिरलोकलोकानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं पितृणां चिरलोकलोकानामानन्दाः । स एक आजानजानां देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमजानजानां देवानामानन्दाः । स एकः कर्मदेवानां देवानामानन्दः ।।२.१८।।

ये कर्मणा देवानपियन्ति । श्रोत्रियस्य चाकामहतस्य । ते ये शतं कर्मदेवानां देवानामानन्दाः । स एको देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवानामानन्दाः । स एक इन्द्रस्यानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमिन्द्रस्याऽनन्दाः । स एको बृहस्पतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं बृहस्पतेरानन्दाः ।।२.१९।।

स एकः प्रजापतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य ।।२.२०।।

।

अथातोऽनुप्रश्नाः । उताविद्वानमुं लोकं प्रेत्य । कश्चन गच्छती३ । आहो विद्वानमुं लोकं प्रेत्य । कश्चित्समश्नुता३उ ॥२.१३॥

सोऽकामयत । बहुस्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इद९सर्वमसृजत । यदिदं किञ्च । तत् सृष्ट्वा । तदेवानुप्राविशत् । तदनु प्रविश्य । सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च । निलयनं चानिलयनं च । विज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्यमभवत् । यदिदं किञ्च । तत् सत्यमित्याचक्षते ॥२.१४॥

तदप्येष श्लोको भवति । असद् वा इदमग्र आसीत् । ततो वै सदजायत । तदात्मान९स्वयमकुरुत । तस्मात् तत् सुकृतमुच्यत इति । यद् वै तत् सुकृतम् । रसो वै सः । रस९ह्येवायं लब्ध्वाऽनन्दी भवति । को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवाऽनन्दयाति ॥२.१५॥

यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति । तत् त्वेव भयं विदुषोऽमन्वानस्य । तदप्येष श्लोको भवति । भीषाऽस्माद् वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति ॥२.१६॥

सैषानन्दस्य मीमांसा भवति । युवा स्यात् साधु युवाऽध्यायकः । आशिष्ठो द्रढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः । स एको मनुष्यगन्धर्वाणामानन्दः । ।।२.१७।।

श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्य-गन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितृणां चिरलोकलोकानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं पितृणां चिरलोकलोकानामानन्दाः । स एक आजानजानां देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमजानजानां देवानामानन्दाः । स एकः कर्मदेवानां देवानामानन्दः ।।२.१८।।

ये कर्मणा देवानपियन्ति । श्रोत्रियस्य चाकामहतस्य । ते ये शतं कर्मदेवानां देवानामानन्दाः । स एको देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवानामानन्दाः । स एक इन्द्रस्यानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमिन्द्रस्याऽनन्दाः । स एको बृहस्पतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं बृहस्पतेरानन्दाः ।।२.१९।।

स एकः प्रजापतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य ।।२.२०।।

स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित् । अस्माल्लोकात् प्रेत्य । एतमन्नमयमात्मानमुपसङ्क्रामति । एतं प्राणमयमात्मानमुपसङ्क्रामति । एतं मनोमयमात्मान-मुपसङ्क्रामति । एतं विज्ञानमयमात्मानमुपसङ्क्रामति । एतमानन्दमयमात्मानमुपसङ्क्रामति ।।२.२१।।

तदप्येष श्लोको भवति । यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चनेति । एतꣳह वाव न तपति । किमहꣳसाधु नाकरवम् । किमहं पापमकरवमिति । स य एवं विद्वानेते आत्मानꣳस्पृणुते । उभे ह्येवैष एते आत्मानꣳस्पृणुते । य एवं वेद । इत्युपनिषत् ।

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ।।२.२२।।

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ।।

ॐ भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तस्मा एतत् प्रोवाच । अन्नं प्राणं चक्षुःश्रोत्रं मनो वाचमिति । तꣳहोवाच । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत् प्रयन्त्यभिसंविशन्ति । तद् विजिज्ञासस्व । तद् ब्रह्मेति ।।३.१।।

स तपोऽतप्यत । स तपस्तप्त्वा । अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्तीति । तद् विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳहोवाच । तपसा ब्रह्म विजिज्ञासस्व ।।३.२।।

तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा । प्राणो ब्रह्मेति व्यजानात् । प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते । प्राणेन जातानि जीवन्ति । प्राणं प्रयन्त्यभिसंविशन्तीति । तद् विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳहोवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा । मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्विमानि भूतानि जायन्ते । मनसा जातानि जीवन्ति । मनः प्रयन्त्यभिसंविशन्तीति । तद् विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳहोवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा । विज्ञानं ब्रह्मेति व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभिसंविशन्तीति । तद् विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳहोवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा । आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति ।।३.३।।

सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिता । य एवं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ।।३.४।।

अन्नं न निन्द्यात् । तद् व्रतम् । प्राणो वा अन्नम् । शरीरमन्नादम् । प्राणे शरीरं प्रतिष्ठितम् । शरीरे प्राणः प्रतिष्ठितः । तदेनदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ।।३.५।।

अन्नं न परिचक्षीत । तद् व्रतम् । आपो वा अन्नम् । ज्योतिरन्नादम् । अप्सु ज्योतिः प्रतिष्ठितम् । ज्योतिष्यापः प्रतिष्ठिताः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ।। ३.६।।

अन्नं बहु कुर्वीत । तद्व्रतम् । पृथिवी वा अन्नम् । आकाशोऽन्नादः । पृथिव्यामाकाशः प्रतिष्ठितः । आकाशे पृथिवी प्रतिष्ठिता । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ।।३.७।।

न कञ्चन वसतौ प्रत्याचक्षीत । तद् व्रतम् । तस्माद् यया कया च विधया बह्वन्नं प्राप्नुयात् । अराध्यस्मा अन्नमित्याचक्षते । एतद् वै मुखतोऽन्नꣳराद्धम् । मुखतोऽस्मा अन्नꣳराध्यते । एतद् वै मध्यतोऽन्नꣳराद्धम् । मध्यतोऽस्मा अन्नꣳराध्यते । एतद् वा

अन्ततोऽन्नꣳराद्धम् । अन्ततोऽस्मा अन्नꣳराध्यते । य एवं वेद ।।३.८।।

क्षेम इति वाचि । योगक्षेम इति प्राणापानयोः । कर्मेति हस्तयोः । गतिरिति पादयोः । विमुक्तिरिति पायौ । इति मानुषीः समाज्ञाः । अथ दैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्युति । यश इति पशुषु । ज्योतिरिति नक्षत्रेषु । प्रजातिरमृतमानन्द इत्युपस्थे । सर्वमित्याकाशे ।।३.९।।

तत् प्रतिष्ठेत्युपासीत । प्रतिष्ठावान् भवति । तन्मन इत्युपासीत । महान् भवति । तन्मन इत्युपासीत । मानवान् भवति । तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः । तद् ब्रह्मेत्युपासीत । ब्रह्मवान् भवति । तद् ब्रह्मणः परिमर इत्युपासीत । पर्येणं म्रियन्ते द्विषन्तः सपत्नाः । परि येऽप्रिया भ्रातव्याः ।।३.१०।।

स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवं वित् । अस्माल्लोकात् प्रेत्य । एतमन्नमयमात्मानमुपसङ्क्रम्य । एतं प्राणमयमात्मानमुपसङ्क्रम्य । एतं मनोमयमात्मानमुपसङ्क्रम्य । एतं विज्ञानमयमात्मानमुपसङ्क्रम्य । एतमानन्दमयमात्मानमुपसङ्क्रम्य । इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन् । एतत् साम गायन्नास्ते । हा३वु हा३वु हा३वु । अहमन्नमहमन्नमहमन्नम् । अहमन्नादो३ऽहमन्नादो३ऽहमन्नादः । अहꣳश्लोककृदहꣳश्लोककृदहꣳश्लोककृत् ।।३.११।।

सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिता । य एवं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ।।३.४।।

अन्नं न निन्द्यात् । तद् व्रतम् । प्राणो वा अन्नम् । शरीरमन्नादम् । प्राणे शरीरं प्रतिष्ठितम् । शरीरे प्राणः प्रतिष्ठितः । तदेनदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ।।३.५।।

अन्नं न परिचक्षीत । तद् व्रतम् । आपो वा अन्नम् । ज्योतिरन्नादम् । अप्सु ज्योतिः प्रतिष्ठितम् । ज्योतिष्यापः प्रतिष्ठिताः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ।। ३.६।।

अन्नं बहु कुर्वीत । तद्व्रतम् । पृथिवी वा अन्नम् । आकाशोऽन्नादः । पृथिव्यामाकाशः प्रतिष्ठितः । आकाशे पृथिवी प्रतिष्ठिता । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ।।३.७।।

न कञ्चन वसतौ प्रत्याचक्षीत । तद् व्रतम् । तस्माद् यया कया च विधया बह्वन्नं प्राप्नुयात् । अराध्यस्मा अन्नमित्याचक्षते । एतद् वै मुखतोऽन्नꣳराद्धम् । मुखतोऽस्मा अन्नꣳराध्यते । एतद् वै मध्यतोऽन्नꣳराद्धम् । मध्यतोऽस्मा अन्नꣳराध्यते । एतद् वा

अन्ततोऽन्न९राद्धम् । अन्ततोऽस्मा अन्न९राध्यते । य एवं वेद ।।३.८।।

क्षेम इति वाचि । योगक्षेम इति प्राणापानयोः । कर्मेति हस्तयोः । गतिरिति पादयोः । विमुक्तिरिति पायौ । इति मानुषीः समाज्ञाः । अथ दैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्युति । यश इति पशुषु । ज्योतिरिति नक्षत्रेषु । प्रजातिरमृतमानन्द इत्युपस्थे । सर्वमित्याकाशे ।।३.९।।

तत् प्रतिष्ठेत्युपासीत । प्रतिष्ठावान् भवति । तन्मह इत्युपासीत । महान् भवति । तन्मन इत्युपासीत । मानवान् भवति । तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः । तद् ब्रह्मेत्युपासीत । ब्रह्मवान् भवति । तद् ब्रह्मणः परिमर इत्युपासीत । पर्येणं म्रियन्ते द्विषन्तः सपत्नाः । परि येऽप्रिया भ्रातव्याः ।।३.१०।।

स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवं वित् । अस्माल्लोकात् प्रेत्य । एतमन्नमयमात्मानमुपसङ्क्रम्य । एतं प्राणमयमात्मानमुपसङ्क्रम्य । एतं मनोमयमात्मानमुपसङ्क्रम्य । एतं विज्ञानमयमात्मानमुपसङ्क्रम्य । एतमानन्दमयमात्मान-मुपसङ्क्रम्य । इमान् लोकान् कामान्नी कामरूप्यनुसञ्चरन् । एतत् साम गायन्नास्ते । हा३वु हा३वु हा३वु । अहमन्नमहमन्नमह-मन्नम् । अहमन्नादो२ऽहमन्नादो२ऽहमन्नादः । अह९श्लोककृदह९-श्लोककृदह९श्लोककृत् ।।३.११।।

अहमस्मि प्रथमजा ऋता३स्य । पूर्वं देवेभ्योऽमृतस्य ना३भाइ । यो मा ददाति स इदेव मा३वाः । अहमन्नमन्न-मदन्तमा३द्मि । अहं विश्वं भुवनमभ्यभवाम् । सुवर्णज्योतीः । य एवं वेद । इत्युपनिषत् ।।३.१२।।

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ।

ॐ शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् ।

।। ॐ शान्तिः शान्तिः शान्तिः ।।

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु मा विद्विषावहै ।

ॐ शान्तिः शान्तिः शान्तिः ।

॥ हरिः ॐ ॥

# तैत्तिरीयोपनिषद्भाष्यस्य विषयानुक्रमणिका

## शिक्षावल्ली



## ब्रह्मवल्ली

अहमस्मि प्रथमजा ऋता३स्य । पूर्वं देवेभ्योऽमृतस्य ना३भाइ । यो मा ददाति स इदेव मा३वाः । अहमन्नमन्न-मदन्तमा३द्मि । अहं विश्वं भुवनमभ्यभवाम् । सुवर्णज्योतीः । य एवं वेद । इत्युपनिषत् ।।३.१२।।

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ।

ॐ शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् ।

।। ॐ शान्तिः शान्तिः शान्तिः ।।

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु मा विद्विषावहै ।

ॐ शान्तिः शान्तिः शान्तिः ।

॥ हरिः ॐ ॥

# तैत्तिरीयोपनिषद्भाष्यस्य विषयानुक्रमणिका

## शिक्षावल्ली



## ब्रह्मवल्ली

भृगुवल्ली

।। हरिः ॐ ।।

# तैत्तिरीयोपनिषत्

## शिक्षावल्ली

ॐ शं नो॑ मि॒त्रः शं वरु॑णः । शं नो॑ भवत्वर्य॒मा । शं न॒ इन्द्रो॒ बृह॒स्पतिः॑ । शं नो॒ विष्णु॑रुरुक्र॒मः । नमो॒ ब्रह्म॑णे । नम॑स्ते वायो । त्वमे॒व प्र॒त्यक्षं॒ ब्रह्मा॑सि । त्वमे॒व प्र॒त्यक्षं॒ ब्रह्म॑ वदिष्यामि । ऋ॒तं व॑दिष्यामि । स॒त्यं व॑दिष्यामि । तन्माम॑वतु । तद्वक्तार॑मवतु । अव॑तु माम् । अव॑तु वक्तार॑म् । ॐ शान्ति॒ः शान्ति॒ः शान्ति॑ः ।। ।।१.१।।

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिततैत्तिरीयोपनिषद्भाष्यम्

सत्यं ज्ञानमनन्तमानन्दं ब्रह्म सर्वशक्त्येकम् ।
सर्वैर्देवैरीड्यं विष्ण्वाख्यं सर्वदेमि सुप्रेष्ठम् ।।
आदित्यसंस्थिताद् विष्णोः श्रुत्वा ब्रह्मा यथा हरिम् ।
तुष्टाव तत्प्रकारेण वरुणोक्तेन वै भृगुः ।।
विष्णुमस्तौत्तथा प्राह शन्नो मित्रादिका श्रुतिः ।।
यदुवाच हरिस्सूर्यमण्डलस्थः परः पुमान् ।
ब्रह्मा तदाह वरुणे वरुणो भृगवेऽपि तु ।।
शन्नो मित्रादिभिर्वाक्यैस्तैरेव हरिमस्तुवत् ।
भृगुः पञ्चात्मकं पूर्णमन्नादिमयमच्युतम् ।।
मुक्तगीतावसानैस्तु स्तुतस्तेन जनार्दनः ।
सुप्रीतः प्रददौ ज्ञानं स्वात्मभक्तिं च शाश्वतीम् ।।

इत्यादि यजुस्संहितायाम् ।

**भृगुवाक्यतया वायुनमस्कारादिकं हरिः ।**
**प्रोवाच ब्रह्मणे चैवं वचस्सुबहुदर्शिषु ।। इति च ।। १.१ ।।**

## तैत्तिरीयव्यासतीर्थटीकाप्रारम्भः

**रमारमणमानम्य पूर्णबोधमनन्तरम् ।**
**तैत्तिरीयोपनिषद्भाष्यसम्बन्धः क्रियते मया ।। १ ।।**

तैत्तिरीयोपनिषदं यथावद्व्याचिख्यासुर्भगवानानन्दतीर्थमुनिः निर्विघ्नेन परिसमाप्त्याद्यर्थं तदुक्तगुणवन्तं भगवन्तं शिष्यशिक्षाशयेन स्तौति- **सत्यमिति** । 'सत्यं ज्ञानमनन्तं ब्रह्म' इति सत्यत्वादयः, 'यदेष आकाश आनन्दो न स्यात्' इत्यानन्दः, 'सोऽकामयत बहुस्यां प्रजायेय' इत्याद्युक्तसर्वसृष्ट्युपयुक्तसर्वशक्तिश्चोक्ता ज्ञातव्या । एकं 'आनन्दो ब्रह्मेति व्यजानात्' इत्याद्युक्तस्वगुणाद्यभिन्नम् । एतदुपनिषत्प्रवर्तकब्रह्मादिभिर्देवैरीड्यम् । ब्रह्म च विष्णोरन्यन्निर्गुणं न मन्तव्यमिति भावेनोक्तं- **विष्ण्वाख्यमिति** ।

ऋषिच्छन्दोदैवतान्यज्ञात्वा विद्याभ्यासिनो 'यो ह वा अविदितार्षेछन्दोदैवतब्राह्मणेन मन्त्रेण यजति याजयति वाध्यापयति स्थाणुं वा ऋच्छति गर्ते वा पद्यति प्रवामीयते पापीयान् भवति' इत्यनर्थोक्तेरेतदुपनिषदः ऋषिदेवते आह- **आदित्येत्यादिना** । यथा च वरुणो ब्रह्मोक्तप्रकारेण हरिं तुष्टावेत्यध्याहार्यम् । वरुणाय ब्रह्मा प्राहेत्यनुक्त्वा तत्कथनपूर्वं तथा प्राह शन्नोमित्रादिका श्रुतिरित्युक्त्या ब्रह्मादिभिः कृता स्तुतिरन्या शन्नोमित्रादिका तत्समाख्येति प्रतीतिं निवारयन्नाह- **यदुवाचेति** । उवाच ब्रह्मण इति शेषः । नन्वन्नमयाद्याः पञ्चोच्यन्तेऽस्यामुपनिषदि न तु हरिरित्यत आह- **पञ्चात्मकमिति** । कथं तर्ह्यन्नमय इति मयट्हरौ घटते इत्यत उक्तं- **पूर्णमिति** । प्रचुरान्नादिमन्तमित्यर्थः । शन्नोमित्रादिभिरित्यस्या उपनिषद उपक्रम उक्तः ।

मुक्तगीतेत्येतत्सामगायन्नास्त इत्यवसानमुक्तम् । विष्ण्वादिरस्या ऋषिः छन्दो यथासम्भवं अनुष्टुबादि, हरिर्देवता ।

ननु विष्णुरस्या ऋषिरुपनिषद इत्युक्तम् । तस्य शन्नो मित्र इति नमस्ते वायो इति । सुखप्रार्थननमस्कारायोगादित्यत आह- **भृग्विति** । एतन्न्यायमन्यत्राप्यतिदिशति- **एवमिति** । ब्रह्मविद्यामनुतिष्ठन् भृगुः विघ्नपरिहारार्थं देवान्प्रार्थयते- **शन्नो मित्र इत्यादिना** । मित्रः नः शं सुखप्रदो भवत्वित्यादि योजना द्रष्टव्या । वायोर्ब्रह्मविद्याप्रवर्तकेषु मुख्यत्वात्परब्रह्मणो मुख्याधिष्ठानत्वाच्च तं स्तुवन् पृथक् प्रार्थयते- **त्वमेवेति** । अक्षमक्षं प्रति स्थितं प्रत्यक्षम् । ऋतं यथार्थज्ञानवन्तम् । सत्यं यथार्थज्ञानपूर्वकं वक्तारं कर्तारं च । दिव्यान्तरिक्षभौमविघ्नपरिहारार्थं शान्तिरिति त्रिरुक्तिः ।। १.१ ।।

## श्रीवादिराजयतिविरचितभाष्यप्रकाशिका

**सुमतिभिरनुमेयं शुभ्रकायं सखायं ।**
**सुखमयमनपायं मुक्त्युपायं विमायम् ।।**

**नृहयमहममेयं ध्येयमाम्नायगेयम् ।**
**सदयमसदजेयं श्रीसहायं भजेयम् ।।**

एवं वचस्सु बहुदर्शिषु इत्यत्र सुबहुदर्शिषु एवं वचः परोक्तानुवादरूपमेव वचः वर्तते । 'तं व्याससूनुमुपयामि गुरुं मुनीनाम्' इत्यादौ व्यासकृतभागवतग्रन्थे कृतस्तुत्यादिनमस्कारादीनां तत्र तत्रानुवाददर्शनादिति भावः । 'शं नो मित्रः शं वरुणः' इत्यत्र वरुणो मित्रो देवो नः शं प्रति भवति, तथा भवत्विति योजना । 'त्वमेव प्रत्यक्षं ब्रह्म' इति वदता साक्षात् परं ब्रह्माप्रत्यक्षमेव । श्रवणादिकं विना द्रष्टुमशक्यत्वस्य 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादिश्रुतौ

निश्चितत्वात् । अतो ब्रह्मणः स्वयं मुख्यतः सन्निहितत्वेन तव विष्णोर्मुख्यतः प्रतिमात्वेन रङ्गनाथादिप्रतिमादौ त्वमेव रङ्गनाथ इत्युक्तिर्यथा तथा वायोरपि प्रत्यक्षब्रह्मत्वोक्तिः । न तु ब्रह्माभेदेन, प्रत्यक्षाप्रत्यक्षयोरैक्यायोगादिति सूचितम् । त्वमेव प्रत्यक्षं ब्रह्म, त्वमेव प्रत्यक्षं ब्रह्मेति वदिष्यामि । ऋतं ऋ गतौ इति धातोः कर्तरि क्तप्रत्यये कृते गत्यर्थानां च ज्ञानार्थत्वाद्यथार्थज्ञानवदित्यर्थः । सत्यं षदॢ विशरणगत्यवसादनेषु इति धातोः सत् ज्ञानं श्रुतिनिर्दिष्टं, यं कर्तृत्वे प्रवर्तकत्वे च प्रवर्तकं यस्य तत् सत्यमित्यर्थः । ज्ञानस्येच्छाद्वारा प्रवृत्तिकारणत्वस्य सिद्धत्वादिति भावः । तादृशमहामहिम्नस्तव स्तुतिरूपवचनं मा इत्यध्येतारं मामवतु । मम प्रवक्तारं गुरुं मध्यवर्तिनमित्यर्थः । गुरोरर्थं च श्रुत्वा शिष्यस्यैव साक्षादध्येतृत्वाच्छिष्यः स्वकीयपाठेन गुरोरभिरक्षणमपि प्रार्थयते । 'वक्तुर्दशगुणं फलम्' इति वचनात् शिष्यप्रार्थना मात्रेणापि गुरोः फलं भवतीति भावः । द्विरुक्तिरादरार्था ॥१.१॥

## तैत्तिरीयश्रीनिवासतीर्थीयटीका प्रारम्भः

ज्ञानानन्दमुखैः सर्वगुणैः पूर्णमभीष्टदम् ।
गुर्वाराधितपादाब्जं(वन्दे)भजेऽहं बादरायणम् ॥ १ ॥

श्रीमदानन्दतीर्थार्यचरणौ प्रणमाम्यहम् ।
रुद्रादिसर्वविबुधैः संसेव्याविष्टदौ सताम् ॥ २ ॥

श्रुतिक्षीराब्धिमामथ्य धीमन्दरमहीभृता ।
प्राप्ता न्यायसुधा येन तं जयीन्द्रमहं भजे ॥ ३ ॥

येन वेदान्तभाष्याणि विवृतानि महात्मना ।
तं वन्दे व्यासतीर्थाख्यं जयराजनिषेवकम् ॥ ४ ॥

विद्याधिराजादिमुनींस्तथा वेदेशयोगिनः ।
छान्दोग्यभाष्यसट्टीकाकर्तॄन्वन्दे निरन्तरम् ॥ ५ ॥

**श्रीमध्वशास्त्रं समुदीर्य मेऽस्मिन्विश्वासहेतोः समदर्शयन् ये ।**
**प्रदानसूत्रप्रतिपाद्यभावं वन्दे गुरूंस्तान्यदुवर्यसञ्ज्ञान् ॥ ६ ॥**
**अथैतत्कृपया श्रीनिवासाख्यायुतसूरिणा ।**
**तैत्तिरीयोपनिषदो भाष्यं व्याक्रियते मया ॥ ७ ॥**
**बुधैरपि सुदुर्बोधे ग्रन्थे यन्मम साहसम् ।**
**तत्पारयन्तु निपुणाः गुरुपादरजःकणाः ॥ ८ ॥**

इह हि विविधसांसारिकदुःखदर्शनेन विरक्तस्य शमदमादिमतो मुमुक्षोरधिकारिणः आत्यन्तिकानिष्टनिवृत्तीष्टप्राप्तिहेतुभूतभगवत्स्वरूपज्ञानाय प्रवृत्तापीयं तैत्तिरीयोपनिषदन्यथाव्याख्यानावरुद्धत्वेन न तज्ज्ञापनसमर्थेति मन्यमानो भगवानानन्दतीर्थमुनिः तां यथावद्व्याचिख्यासुः स्वयमन्तराय-विधुरोऽप्यनवरतमीश्वरप्रवणकायकरणवृत्तिरपि निरन्तराय प्रारिप्सितपरिसमाप्तेः प्रचयस्य च हेतुतयाऽविगीतशिष्टाचारपरम्परावगतमेतदुपनिषत्प्रतिपाद्यगुणवद्भगव-त्स्तुतिरूपं मङ्गलं शिष्यशिक्षणार्थं कुर्वन्नेव तच्छरणागतिं प्रार्थयते- **सत्यं ज्ञानमित्याद्यपद्येन** । एमीत्युत्तमपुरुषप्रयोगादेवाहमिति कर्ता लभ्यते । एमि प्राप्नुयाम् । इण् गताविति धातोः । शरणमिति शेषः । तथाचाहं सत्यत्वादिगुणोपेतं ब्रह्म शरणं एमि इति क्रियाकारकसम्बन्धः । स्तुतिपदानां च विशेष्यप्रशंसैव प्रयोजनमिति सिद्धमेव । सत्यादिशब्दार्थस्तु वक्ष्यमाणरीत्या-वगन्तव्यः । सर्वशक्ति सर्वविषयशक्त्युपेतं एकं स्वगुणरूपाद्यभिन्नम् । सर्वैर्देवैरेतदुपनिषत्प्रवर्तकैर्ब्रह्मवरुणादिभिः ईड्यं स्तुत्यम् । ईडस्तुताविति धातोः । विष्ण्वाख्यं सर्वत्र प्रविष्टत्वेन विष्णुशब्दवाच्यम् । 'विष्णुः सर्वप्रवेशित्वात्' इति गीताभाष्योक्तेः । ब्रह्मेति विशेष्यनिर्देशः । न मम परब्रह्मशरणागतिप्रार्थनं विघ्नविरहादिप्रयोजनोद्देशेन कादाचित्कम् । किन्तु स्वभावादेवेत्याशयेनोक्तम्- **सर्वदेति** । अत्र 'सत्यं ज्ञानमनन्तम्' इति सत्यत्वादित्रयं 'आनन्दो ब्रह्म' इत्यनेन 'को ह्येवान्यात्' इत्यादिना च आनन्दत्वं 'इदं सर्वमसृजत' इति सर्वसृष्ट्युक्त्याऽर्थात्सर्वशक्तित्वं 'आनन्दो ब्रह्मेति व्यजानात्' इत्यनेनैव

गुणाभिन्नार्थकमेकत्वं 'स यश्चायं पुरुषः' इत्यादिना रूपाभेदार्थकं चैकत्वं 'तन्मन इत्युपासीत' इति सर्वदेवेड्यत्वं 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति विष्णुत्वं चोक्तमिति ज्ञातव्यम् । अधिकार्युत्तमवाय्ववतारभूतस्य भगवत आनन्दतीर्थमुनेः परब्रह्म सुप्रेष्ठमिति प्रसिद्धमेवेति ज्ञातव्यम् । अधिकृतैव हि देवता स्वविषयग्रन्थप्रबोधादिकं सम्पादयतीति भावः ।

यो ह वाऽविदितार्षछन्दो दैवतब्राह्मणेन मन्त्रेण यजति याजयति वा अध्यापयति वा स्थाणुं वार्च्छति गर्ते वा पद्यते प्रवामीयते पापीयान् भवतीति श्रुतौ ऋष्याद्यज्ञात्वा विद्याभ्यासिनोऽनर्थोक्तेस्तज्ज्ञानं तावदवश्यमपेक्षितम् । तत्र ब्राह्मणपदोपलक्षितार्थज्ञानं व्याख्यानादेव भविष्यति । प्रायश्छन्दोबद्धत्वं नास्त्येव । तदुपनिबद्धे त्वक्षरपरिगणनया तज्ज्ञानं सुशकमेवात ऋषिदेवते ज्ञापयन्नाह- **आदित्यसंस्थितादिति** । आदित्याद्ब्रह्मा सुश्रावेति वचनान्तरगतिकथनाय आदित्यसंस्थिताद्विष्णो-रित्युक्तम् । आदित्यसंस्थिताद्विष्णोः सकाशादादौ ब्रह्मा भगवत्स्वरूपं शुश्रावेति ग्राह्यम् । श्रुत्वा च हरिं तुष्टाव । स ब्रह्मा यथा येन प्रकारेण हरिं तुष्टाव तं प्रकारं वरुणाय प्राहेति वक्तव्यम् । पश्चात्स वरुणः तेनैव प्रकारेण हरिं तुष्टावेति वर्तते । स वरुणो येन प्रकारेण हरिं तुष्टाव तं प्रकारं स्वपुत्राय भृगवे प्राहेति वक्तव्यम् । अनन्तरं स भृगुर्वरुणोक्तेनैव प्रकारेण विष्णुम् अस्तौदिति योजना द्रष्टव्या । स प्रकारः क इत्यत आह- **तथेति** । तं प्रकारमित्यर्थः । अत्र 'तथा प्राह शन्नोमित्रादिकाश्रुतिः' इति वचनेन ब्रह्मादिभिर्दैवैः विष्ण्वादिभ्यः श्रुत्वा कृता स्तुतिरन्यैवास्ति ।

शन्नोमित्र इत्यादिका श्रुतिस्तु केवलं तत्समाख्यारूपैव नत्वेषैव विष्ण्वादिभिर्ब्रह्मादीन्प्रत्युपदिष्टा हरिं प्रति ब्रह्मादिकृतस्तुतिरूपा चेति प्रतीयते अतस्तां प्रतीतिं यजुःसंहितायामेव स्थानान्तरगतवाक्योदाहरणेन वारयति- **यदुवाचेति** । सुपां सुलुगित्यादिना बहुवचनस्यैकवचनादेशः ।

तथाच यत् यानि तत् तानीत्यर्थः । ब्रह्मण इति शेषः। सूर्यमण्डलस्थः सूर्योऽपि भवतीत्याशङ्कापरिहाराय 'परः पुमान् हरिः' इत्युक्तम् । वरुणे वरुणाय । शन्नो मित्रादिभिः शन्नो मित्रः शं वरुण इति प्रभृतिभिः । अन्नादिमयं पञ्चात्मकं अन्नमयादिरूपेण पञ्चात्मकमित्यर्थः । मयटो विकारार्थकत्वात्कथमन्नमयादीनां पञ्चानां विष्णुत्वमित्याशङ्क्य मयटां प्राचुर्यमेवार्थ इत्याशयेनोक्तं- **पूर्णमिति** । तथाच प्रचुरान्नादिरूपमित्यर्थः । विस्तरस्तु 'महाभोक्ता महाभोग्य इत्यर्थोऽन्नमये भवेत्' इत्याद्यनुव्याख्यानोक्तप्रकारेण द्रष्टव्यः । अच्युतं अन्नमयादिशब्दार्थभूतैर्गुणैः कदापि च्युतिरहितम् । मुक्तगीतावसानैः 'एतत्सामगायन्नास्ते'इत्यारभ्य 'य एवं वेद' इत्यन्तैः । तथाच सूर्यमण्डलस्थः परः पुमान् हरिर्यत् यानि शन्नोमित्र इत्यादिवाक्यानि ब्रह्मणे प्राह तत् तान्येव वाक्यानि ब्रह्मा वरुणे वरुणाय प्राह । स वरुणस्तान्येव वाक्यानि भृगवे प्राह । स भृगुस्तैर्वरुणोपदिष्टैरेव शन्नो मित्र इत्यादिभिर्मुक्तगीतावसानैर्वाक्यैः पूर्णमच्युतं अन्नमयादिपञ्चात्मकं हरिमस्तुवत् । अनन्तरं शन्नोमित्रादिभिर्मुक्तगीतावसानैर्वाक्यैस्तेन भृगुणा स्तुतो जनार्दनः सुप्रीतः सन् ज्ञानं, शाश्वतीं स्वात्मनि भक्तिं च प्रददावित्यादियोजना द्रष्टव्या । अनेनास्या उपनिषदो विष्णुब्रह्मावरुणभृगव ऋषयः। अन्नमयादिरूपी हरिर्देवता यथासम्भवमनुष्टुबादिछन्द इत्युक्तं भवति ।

नन्वस्या उपनिषदो विष्णुः ऋषिरित्ययुक्तम् । 'शन्नो मित्रः' इत्यादिना विष्णोर्मित्रादिकं प्रति सुखप्रार्थनस्य 'नमस्ते वायो' इति वायुं प्रति नमस्कारकरणस्य चायोगादित्यत आह- **भृगुवाक्यतयेति** । आदिपदेन 'त्वमेव प्रत्यक्षम्' इति वायुं प्रति स्तुतिकरणं मित्रादिकं प्रति सुखप्रार्थनं च ग्राह्यम् । उत्तरत्र ब्रह्मविद्यामनुतिष्ठन् भृगुर्विघ्नपरिहाराय नमस्ते वाय्वित्यादिरूपेण वायुनमस्कारादिकं करिष्यतीत्येवं भृगुवाक्यानुवादरूपेण

हरिर्ब्रह्मणे प्रोवाच नतु स्ववाक्यतयाऽतो नोक्तदोषः । तथा ब्रह्मणाऽपि मित्रादिकं प्रति सुखप्रार्थनायोगात्सोऽपि भृगुवाक्यतयैव वरुणाय प्रोवाचेति चशब्दार्थः । इमं प्रकारमन्यत्राप्यतिदिशति- **एवं वच इति** । एवमित्यस्यावृत्तिः । चशब्दस्यात्राप्यन्वयः । स चात्रावधारणार्थः । तथाच सुबहुदर्शिषु अतिबह्वर्थदर्शिषु सर्वज्ञेषु विष्ण्वादिषु ऋषित्वेन विवक्षितेषु सत्सु यत् एवं वचः नीचान् प्रति प्रार्थनादिरूपं वचस्तत् एवञ्च एवमेव परोक्तानुवादरूपत्वेनैव व्याख्येयं नतु सुबहुदर्शिविष्ण्वादिवाक्यतयैवेति ज्ञातव्यम् । यथा हयग्रीवमुखोद्गीर्णायां छान्दोग्योपनिषदि श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्ये । धूत्वा शरीरं ब्रह्मलोकमभिसम्भवामीत्यादिकं न स्ववाक्यतया हयवदनो दृष्टवान् किन्त्वितरेषां वाक्यतयैव । यथोक्तं छान्दोग्यभाष्ये -

**हयग्रीवमुखोत्थानि यानि वाक्यानि तानि तु ।**
**रमा ददर्श तान्येव ब्रह्मा तान्येव नारदः ।।**
**यानि विष्णोरयोग्यानि प्रार्थनाद्यात्मकानि तु ।**
**तान्युत्तरेषां वाक्यानि भविष्याण्यवदद्धरिः ।**
**एवं रमा तथा ब्रह्मा छान्दोग्योपनिषद्दिसा ।। इति**

इदमुपलक्षणम् । अविघ्नत्वमभीप्सूनां शिष्याणां चार्थे दृष्टवानित्यपि द्रष्टव्यम् । यथोक्तमैतरेयभाष्ये -

**वाङ्म इत्यादिकं खण्डं विष्णुप्रार्थनरूपकम् ।**
**अविघ्नत्वमभीप्सूनां शिष्याणां दृष्टवान्हरिरिति ।।**

तदनेन प्रबन्धेनैतदुपनिषदोऽधिकारिविषयप्रयोजनाभिसम्बन्धोऽपि दर्शितो भवति । ब्रह्मादीनामधिकारिणां अन्नमयादिपञ्चरूपस्य विष्णोर्विषयस्य मोक्षस्य प्रधानस्य ज्ञानभक्त्यादेरवान्तरस्य च प्रयोजनस्य च सूचितत्वात् । अतो युक्तमेतदुपनिषदो व्याख्यानं गहनार्थत्वाच्चेति ।। १.१ ।।

## श्रीनिवासतीर्थीयखण्डार्थः

ततश्च शन्नो मित्र इत्यादेरयमक्षरार्थः । आदित्यसंस्थितो विष्णुः ब्रह्माणं प्रति ब्रह्मविद्यामनुतिष्ठन् भृगुर्विघ्नपरिहारार्थमेतद्विद्याप्रवर्तकत्वादेतद्विद्याप्रतिपाद्यत्वाद्वा इन्द्रियादिप्रेरकत्वाद्वा मित्रादिदेवान्प्रार्थयत इत्याह- **शन्नो मित्र इत्यादिना** । मित्रो नः शं सुखमुद्दिश्य भवतु नः सुखप्रदो भवत्वित्यर्थः । एवं वरुणाद्याः देवाः नः शमुद्दिश्य भवन्त्वित्यर्थः । उरुक्रम इति विष्णोर्विशेषणम् । उरुरुत्कृष्टः क्रमः पराक्रमो वा पादविक्षेपो वा यस्यासावुरुक्रम इत्यर्थः । ब्रह्मणे चतुर्मुखाय नमः । हे वायो ते तुभ्यं नमः । वायोः ब्रह्मविद्याप्रवर्तकेषु मुख्यत्वात् परब्रह्मणो मुख्याधिष्टानत्वाद्वक्ष्यमाणसंहितापञ्चाधिकरणाभिमानित्वाच्च पुनस्तं वायुं अपरोक्षतः प्रार्थयते- **त्वमेवेति** । त्वं प्रत्यक्षं अक्षमक्षं प्रति प्रेरकतया स्थितत्वात्प्रत्यक्षशब्दवाच्योऽसि । यथोक्तं बृहद्भाष्ये । तमेताः सप्ताक्षितयः उपतिष्ठन्त इत्यत्र 'दक्षिणाक्षिस्थितं वायुं सप्तदेवा उपासते' इति । ब्रह्मा भाविब्रह्मपदयोग्यः । अथवा ब्रह्म परब्रह्माधिष्ठानभूतः । अधिकारिवर्गेषु पूर्णो वाऽसि । त्वामेव प्रत्यक्षं ब्रह्म वादिषमित्यन्ते वक्ष्यमाणत्वादत्रापि त्वं त्वामित्यर्थः । तथाच प्रत्यक्षं ब्रह्मभूतं च त्वं त्वां पञ्चाधिकरणादिप्रतिपाद्यतया वदिष्यामि शिष्येषु उपदिशामि । ऋतं सत्यमित्यत्र त्वामित्यनुवर्तते । 'ऋतं यथार्थविज्ञानं सत्यं तत्पूर्विका कृतिः' इति वक्ष्यमाणरीत्या ऋतं यथार्थज्ञानवन्तं सत्यं यथार्थज्ञानपूर्वकं वक्तारं कर्तारं चेत्यर्थः ।

यद्वा ऋतं यथावत् सर्वाधिकारिवर्गेषु उत्तमतयावगतं सत्यं साधुगुणैस्ततं सर्वनियन्तारं त्वामित्यर्थः । यथोक्तं वाङ्मे मनसीति खण्डे ऐतरेयभाष्ये ऋतं यथावदवगतं सत्यं साधुगुणैस्ततं सर्वनियंतारमिति । एवमपरोक्षतः प्रार्थयित्वा परोक्षतोऽपि प्रार्थयते- **तन्मामवत्विति** । यथोक्तं वाङ्म

इत्यत्रैव ऐतरेयभाष्ये तन्मामवत्विति तस्यैव परोक्षतः प्रार्थनमिति । तत् वायुरूपं ब्रह्म श्रोतारं मामवतु तद्वक्तारं विद्योपदेष्टारं चावतु । पुनरवतु मामवतु वक्तारमित्युक्तिरादरार्था । उत्तरत्र प्रवर्तनीयायां विद्यायां प्रसक्तविघ्नानां शान्तिरस्त्वित्याह- **शान्तिरिति** । आध्यात्मिकाधिदैविकाधिभौतिकविघ्नपरिहाराभिप्रायेण 'शान्ता पृथिवी शिवमन्तरिक्षम्' इत्यादि श्रुतेर्भौमान्तरिक्षदिव्यविघ्नपरिहारार्थं च त्रिवारं शान्त्युक्तिरिति द्रष्टव्यम् ।। ।।१.१।।

## वरदतीर्थविरचितभाष्यव्याख्यानम्

**नत्वा नारायणं देवं पूर्णबोधानथो गुरून् ।**
**तैत्तिरीयोपनिषदो भाष्यार्थः कथ्यते मया ।।**

अथाशेषपुरुषार्थप्राप्तिहेतुभूतां तैत्तिरीयोपनिषदं यथावद्व्याचिख्यासुराचार्यः प्रारिप्सितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्याद्यर्थमेतदुपनिषदुक्तविशेषणैः विशिष्टामिष्टदेवतां शरणं याति- **सत्यमिति** । अत्र च 'को ह्येवान्यात्' इत्यादिना आनन्दरूपत्वं ब्रह्मणः उक्तम् । 'स इदं सर्वमसृजत' इत्यादिना सर्वशक्तित्वं, ब्रह्मादिदेवानां एतदुपनिषदृषित्वात् सर्वैर्देवैरीड्यत्वं च युज्यते । सत्यज्ञानादिलक्षणकं ब्रह्म विष्णोरन्यदिति मायी, तन्मतमपाकरोति- **विष्ण्वाख्यमिति** । इयं च शरणागतिः न केवलं ग्रन्थसमाप्त्याद्युपाधिनिबन्धना किन्तु निरुपाधिकैवेत्याह- **सर्वदेति** । यद्यपि सर्वदा अहं विष्णुं शरणं गत एव । तथापि ग्रन्थारम्भादिशुभकार्यप्रारम्भे भगवच्छरणागतिः कर्तव्येति शिष्यशिक्षणार्थमिदानीं विशेषतोऽपि भगवन्तं शरणमर्मीति भावः । स्वस्य सर्वदापि भगवच्छरणागतेः किं कारणमित्यत आह- **सुप्रेष्ठमिति** ।

ऋष्यादिज्ञानमन्तरेणोपनिषदध्ययनादेरनर्थहेतुत्वोक्तेः तदवश्यं ज्ञातव्यमिति भावेन अस्या उपनिषदः ऋष्यादिकं वचनान्तरेणाह- **आदित्यसंस्थितादिति** ।

अनेन विष्णुरेवास्याः मुख्यः ऋषिः ब्रह्मादयस्त्ववान्तरऋषय इत्युक्तं भवति । छन्दस्तु गाथारूपवाक्येषु नास्ति । अन्यत्राक्षरपरिसंख्यया ज्ञातव्यमिति भावः । 'विष्णुमस्तौत्' इत्यनेन विष्णुरेव देवतेति सूचितम् । नन्वनेन वाक्येन एतद्विद्यायाः विष्ण्वादयः ऋषय इति न शक्यते कल्पयितुम् । कुतः ? शन्नो मित्रादिका श्रुतिस्तथा प्राह इत्युक्त्या ब्रह्मादयो यथा हरिं तुष्टुवुः तथेयं श्रुतिरपि तुष्टावेति तत्स्तुतिवाक्यसमानार्थत्वस्यैवावगमात् । ब्रह्मादिवाक्यत्वस्याप्रतीयमानत्वात् ।

न च ब्रह्मादिवाक्यत्वनिश्चये ब्रह्मादय ऋषय इति शक्यते कल्पयितुम् । यस्य वाक्यं स ऋषिः, या तेनोच्यते सा देवता इति ऋषिलक्षण-कथनादित्यत आह- **यदुवाचेति** ।

परः पुमान् विष्णुर्यैः शन्नो मित्रादिकैः वाक्यैर्यत्परं ब्रह्म चतुर्मुखायोवाच । ब्रह्मा चतुर्मुखोऽपि तत्परं ब्रह्म एतैरेव वाक्यैर्वरुणायोपदिदेश । वरुणश्च भृगवे, भृगुश्चैतैरेव शन्नो मित्रादिकैर्वाक्यैर्हरिमस्तुवत् । अत एव तस्या उपनिषदस्त ऋषयो भवन्तीत्यर्थः ।

नन्वस्याः उपनिषदः अन्नमयाद्यन्यवस्तुप्रतिपादकत्वात् कथं भृगुः शन्नो मित्रादिवाक्यैर्हरिमस्तुवत् इति युज्यत इत्यत आह- **पञ्चात्मकमिति** । मयडर्थः:- **पूर्णमिति** । शन्नो मित्रादिकैरित्यस्यावधिमाह- **मुक्तेति** । ननु शन्नो मित्रादिवाक्यस्य वाय्वादिनमस्काररूपत्वात् विष्णोश्च सर्वोत्तमत्वेन वाय्वादिनमनायोगात् कथं तस्य स ऋषिरित्यत आह- **भृग्विति**।।१.१।।

### काशीआचार्यविरचितभाष्यव्याख्यानम्

**जन्माद्यस्य यतः शास्त्रगम्यमन्वयतः पृथक् ।**
**परमं ब्रह्म विष्ण्वाख्यमधिकं तदुपास्महे ।।**

इह खल्विष्टानिष्टप्राप्तिपरिहारहेतुभूतपरमतत्त्वप्रतिपत्तये प्रवृत्तां तैत्तरीयोपनिषदमप्रतिपत्तिविप्रतिपत्तिपरिहाराय व्याख्यातुकामो भगवानानन्दतीर्थमुनिर्मङ्गलमाचरति- **सत्यमिति** । ब्रह्म सर्वदैमि गच्छामि, शरणमिति शेषः । अत्र सत्यमित्यादिविशेषणोपादानमेतदुपनिषत्प्रतिपाद्यप्रमेयसङ्ग्रहार्थं तेन तद्विरुद्धव्याख्यानस्यापव्याख्यानता सूच्यते । अन्यथा परैरेव व्याख्यातत्वान्न पुनरियं व्याख्यातव्येत्याशङ्का स्यात् । अस्यार्थस्योत्तरग्रन्थतः सिद्धावपि मन्दमनःसमाधानायादावेव सूचनमित्यवधेयम् ।

वक्ष्यते हि 'सत्यं ज्ञानमनन्तं ब्रह्म' इति सत्यत्वादिकं, 'आनन्दो ब्रह्म' इत्यानन्दत्वं 'इदं सर्वमसृजत' इत्यादिना सर्वशक्तित्वं, 'स एकः' इत्येकत्वं, 'तन्मन इत्युपासीत' इति सर्वेज्यत्वं, मुख्योपास्यत्वाद्युक्त्या सुप्रेष्टत्वं च विष्ण्वाख्यस्य ब्रह्मणः 'ब्रह्म विदाप्नोति परम्' इति प्रस्तुते ब्रह्मणि 'शन्नो विष्णुरुरुक्रमः' इत्युपक्रान्तविष्णुत्वस्य 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति प्रत्यभिज्ञानात् विश प्रवेशने इति धातोरिति । अथवा ब्रह्मेति चतुर्मुखादिप्राप्तौ तद्व्यावृत्तये विष्ण्वाख्यमित्युक्तं अनिर्धारितस्वरूपस्य प्रार्थनाद्यनुपपत्तेस्तन्निर्धारणाय लक्षणमाह- **सत्यमिति** । ब्रह्मशब्देन गुणपूर्णत्वलक्षणलाभेऽपि तदुपपादकत्वेन सत्यत्वमुक्तम् । तच्च जगत्सृष्ट्रत्वादिरूपं निर्वक्ष्यमाणं ग्राह्यम् । उपादानादिज्ञानरहितस्य स्रष्टृत्वानुपपत्तेरनन्तमित्युक्तम् । अपूर्णकामस्यास्मदादिवज्जगत्स्रष्टृत्वासम्भवादानन्दमिति पूर्णानन्दमित्यर्थः । आनन्दोद्रेकादेव च स्रष्टृत्वं वक्ष्यत इति भावः । सर्वस्रष्टृत्वे श्रमचिन्तादिप्राप्त्या न पूर्णानन्दत्वमित्यत उक्तं- **सर्वशक्तीति** । पूर्णशक्तेर्न श्रमादिरिति भावः । स्थानादिभेदभिन्नस्य न सर्वशक्तित्वं प्रकाशनादिशक्तेरादित्य इवान्यत्रादर्शनादित्यत उक्तमेकमिति स्थानादिभेदेऽपि निर्भेदमित्यर्थः । सर्वत्र सर्वशक्त्यप्रदर्शनं तु स्वेच्छयैवेति भावः ।

ननु हिरण्यगर्भादेः स्रष्टृत्वादिश्रवणात् कथमेतद्विष्णोरित्यत आह- **सर्वैरिति** । इतरेषां निमित्तमात्रत्वमिति भावः । एवंविधस्य च साक्षात्प्रार्थनं न शक्यमिति न शङ्क्यम् । अव्यवहितेष्टत्वादित्याह- **सुप्रेष्ठमिति** । अत एव न प्रयोजनविशेषार्थं प्रार्थनमित्याह- **सर्वदेति** । पूर्वोक्तगुणकं ब्रह्म सुप्रेष्ठमेमि जानामीति वा सम्बन्धः । मम सुप्रेष्ठं विष्णाख्यं ब्रह्म सत्यादिगुणकं जानामीति वा सम्बन्धो बोध्यः । 'यो ह वा अविदितार्षच्छन्दोदैवत-ब्राह्मणेन मन्त्रेण यजति याजयति वाध्यापयति स्थाणुं वर्च्छति गर्ते वा पद्यते प्रवामीयते पापीयान्भवति' इति श्रुतेः ऋष्यादिज्ञानं तावदावश्यकं तत्र ब्राह्मणपदोपलक्षितार्थज्ञानस्य व्याख्यानादेव सम्भवात्प्रायः छन्दोबद्धत्वस्यात्राभावात् क्वचित्तद्भावेऽप्यक्षरपरिगणनया तज्ज्ञानस्यापि सम्भवादृषिदेवतयोस्तु ज्ञानार्थमत्राधिकार्यादिसूचनार्थं च स्मृतिमुदाहरति- **आदित्यसंस्थितादिति** । आदित्यमण्डलस्थिताद्विष्णोरित्यनेनैकादशादि-त्यव्यावृत्तिः, यथा येन प्रकारेण हरिं श्रुत्वा येन प्रकारेण तुष्टाव वरुणोपदिष्टेन तत्प्रकारेण भृगुरस्तौदित्यन्वयः । स प्रकारः क इत्यत आह- **तथेति** । शन्नो मित्र इत्यादिका श्रुतिस्तमेव प्रकारमाहेत्यर्थः ।

ननु यथा ब्रह्म तुष्टाव तं प्रकारं वरुणः कथमधिगतवान् येन भृगवे ब्रूयात् किञ्च स प्रकारो वरुणभृगुभ्यां अर्थत एव गृहीत उत शब्दतोऽपीत्यत आह- **यदुवाचेति** । हरिः शन्नोमित्रादिभिर्यैर्वाक्यै-र्यत्प्रमेयमुवाच ब्रह्मा तैरेव वाक्यैस्तदुवाच वरुणोऽप्येवं भृगोरपि तैरेव वाक्यैर्हरिमस्तुवदिति सम्बन्धः । नन्वेतत्सामगायन्नास्ते इत्युक्तमुक्त-तत्कर्तृकगीतावसानवाक्यानां कथं हरिस्तुतित्वं मध्येऽन्नमयादिकोश-प्रतिपादनात् इत्यत आह- **पञ्चात्मकमिति** । पञ्चरूपमित्यर्थः । इदमुपलक्षणं चक्षुर्मयादिरूपान्तराणामप्युक्तत्वात् ।

ननु विकारार्थकमयट्प्रत्ययान्तैरन्नमयादिशब्दैः कथमविकारस्य हरेः प्रतिपादनमत उक्तं- **पूर्णमन्नादिमयमिति** । अन्नादिपूर्णत्वेनान्नमयादिशब्द-वाच्यमित्यर्थः । अन्नादिपूर्णत्वे हेतुः अच्युतमिति । कदापि कुतोऽपि गुणतश्च्युतिरहितमित्यर्थः । स्वरवर्णादितोऽच्युतं यथास्यात्तथाऽस्तुवदिति वा ।

ननु शन्नो मित्रादिभिर्वाक्यैर्हरिरुवाचेत्युक्तम् । तथा सति नमस्ते वायो इत्यादिवायुनमस्कारादिकथनायोगादित्याशङ्क्य यजुःसंहितागतवचनान्तरेण परिहरति- **भृगुवाक्यतयेति** । भृगुवाक्यानुवादत्वेनेत्यर्थः । तथा च भृगुणा स्वकर्तृकवायुनमस्काराद्यभिप्रायेणोच्चारयिष्यमाणं नमस्ते वायवित्यादिवाक्यं हरिणानूदितं न तु स्वकर्तृकनमस्काराद्यभिप्रायेणोक्तमतो न दोषः । यद्यपि हरेः मित्रादिभ्यः सुखप्रार्थनमप्यनुपपन्नं तथापि अहं च इमे च वयमित्येकशेषे छत्रिन्यायेन अध्येतृजनसुखकारित्वविवक्षयाऽपि शन्नो मित्र इत्यादेरुपपत्तिसम्भवान्नमस्कारादिवचनस्यैव गतिरुक्ता । वस्तुतस्तदप्य-नुवादरूपमेवेति ध्येयम् । उक्तमुपपादयति- **चैवमिति** । चशब्दो हेत्वर्थः । यस्मात्सुबहुदर्शिषु श्रेष्ठतमेषु एवं वचः अपकृष्टनमस्काराद्यनुवादरूपं वचनमस्ति तस्माद्भृगुवाक्यतया प्रोवाचेति सम्बन्धः । तथाहि 'हयग्रीवमुखोद्गीर्णं' इति छान्दोग्ये 'श्यामाच्छबलं प्रपद्ये' इत्यादि । अन्यत्रापि 'नमः परमऋषिभ्यः' इत्यादि । केचित्तु उक्तन्यायमन्यत्राप्यति-दिशति- **चैवमिति** । सुबहुदर्शिषु एवं वचः अधमनमस्कारादिप्रतिपादकं वचनमेवमनुवादरूपमेव ज्ञेयमित्येवं शब्दावृत्या व्याचक्षते ।

ननु तथापि भृगुं प्रति शन्नो मित्रादिवाक्यानां वरुणोपदिष्टत्वमयुक्तम् । 'अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचम्' इत्यादिकतिपयवाक्यानामेव भृगुवल्ल्यां वरुणोपदिष्टत्वोक्तेः कथं वा भृगुर्वै वारुणिः इत्यादिरूपेण भृगुं प्रत्युपदेशः सकृदुपसन्नाय समग्रोपनिषदुपदेशे पुनरुपसरणवाक्यानाम-प्रामाण्यापत्तेश्चेति चेदुच्यते । प्रथमं 'अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचम्'

इत्युपदेशः, ततश्च क्रमेण लब्धगुर्वाज्ञस्य भृगोरन्नादिनामकभगवद्रूप-प्रत्यक्षम्, तदनन्तरं चैतदाख्यायिकागर्भं समग्रोपनिषदुपदेश इत्यङ्गीकारे विरोधाभावात् । एतेनात्र भृग्वादय ऋषय अन्नमयादिरूपः परमात्मा देवता मोक्षरूपशाश्वतफलसाधनभूतहरिप्रीत्यादिकं प्रयोजनं तदिच्छुरर्थादधिकारी-त्युक्तं भवति । भृगोरध्येतृत्वेऽप्यृषित्वं युक्तं, अर्वाक् च द्वादशा-वृत्तेरधीत्याप्यृषिरेव सः इत्यृग्भाष्योक्तेः अवान्तरविषयादिकं च वक्ष्यमाणं ग्राह्यम् । तथा च विषयादिमत्वाद्ग्रहनार्थत्वाच्चैतदुपनिषदो व्याख्येयत्वमिति स्थितम् ।। १.१।।

**काशी.खं**-ततश्च शन्नो मित्र इत्यादेरयमक्षरार्थः । भृगुः प्रवर्तिष्यमाण-ब्रह्मविद्योपसर्गशान्त्यर्थं सर्वेन्द्रियाणां सुप्रवृत्यर्थं च देवान्प्रार्थयते- **शन्नो मित्र इत्यादिना** । मित्र इति सकलकर्मेन्द्रियदेवतोपलक्षणम् । स्वाध्याय-प्रवचनयोरह्न्येव कार्यत्वादहर्देवतायाः मित्रस्यातिशयेन प्रार्थनीयत्वा-त्तस्यैवादौ मुखतो ग्रहणम् । तथाच मित्रो मित्रादिः कर्मेन्द्रियदेवता नोऽस्माकं शं सुखकृद्भवतु । तथा वरुणस्तथार्यमा सूर्य इति सकलज्ञानेन्द्रियदेवतोपलक्षणम् । यद्यपि अर्यमवरुणयोरन्यतरग्रहणेनाप्युप-लक्षणं सम्भवति तथापि 'रसवर्ज्यं रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इत्युक्तेः रसनेन्द्रियस्यातिविरोधित्वात् चक्षुषः प्रकाशकत्वेन अत्यन्तानुकूल्या-त्तद्देवतयोरतिशयेनप्रार्थनीयत्वज्ञापनाय द्वयोर्मुखतो ग्रहणम् । तथा मनोदेवतेन्द्रः शब्ददेवता बृहस्पतिश्च सर्वप्रेरकत्वान्मुख्यदेवतात्वाच्च विष्णुः प्रार्थ्यते । उरू उत्कृष्टः सर्वव्यापी क्रमः पादविक्षेपो यस्य स विष्णुः शन्नो भवतु । सर्वविद्याप्रवर्तकत्वात्सर्वेन्द्रियप्रेरकत्वाच्च चतुर्मुखमुख्यवायू नमति-**नम इति** ।

यद्वा सर्वापेक्षया विष्णुवाय्वोरतिशयेन भक्तेरावश्यकत्वज्ञापनाय प्रणमति- **नम इति** । ब्रह्मणे परब्रह्मणे हे वायो ते तुभ्यं नम

इत्यपरोक्षोक्त्या वाय्वपरोक्षस्य विष्ण्वपरोक्षहेतुत्वमभिप्रैति । एतदेवोप-पादयन्वायुं स्तुत्वा प्रार्थयते- **त्वमेवेति** । हे वायो त्वमेव प्रत्यक्षं अक्षमक्षं प्रति सर्वेन्द्रियदेवताप्रेरकत्वेन स्थितं ब्रह्म परब्रह्ममुख्याधिष्ठानमसि अतस्त्वं त्वामेव ब्रह्म परब्रह्ममुख्याधिष्ठानभूतं वदिष्यामि । तद्विद्याया वायुप्रतिपादकत्वस्यापि वक्ष्यमाणत्वात् त्वां वदिष्यामीति युक्तम् । त्वामेवेति तु कथमिति चेन्मैवम् । मुख्याधिष्ठानत्वेन त्वामेव वदिष्यामि । अधिष्ठानत्वेन तु परं ब्रह्म । एतदङ्गत्वेनान्यद्वदिष्यामीत्यर्थस्य विवक्षितत्वात् । वायोर्ब्रह्मापरोक्षहेतुत्वं ब्रह्मविद्यासम्पादकत्वेनापी-त्यभिप्रेत्याह- **ऋतमिति** । ऋतं ब्रह्मविद्यासम्पादकं सत्यमाचार्यस्य विद्योपदेष्टृसम्पादकं त्वां वदिष्यामि 'ऋतं यथार्थविज्ञानं सत्यं तत्पूर्विका कृतिः' इति वक्ष्यमाणत्वात् । तत् उक्तदेवताजातं मां विद्यार्थिनं विद्यासंयोजनेनावतु रक्षतु । तथा वक्तारं आचार्यं वक्तृत्वसंयोजनेनावतु । अवतु मामित्यादिद्विरुक्तिरादरात् । ततश्च ब्रह्मविद्यामनुतिष्ठतो मम विघ्नानां शान्तिः उपशान्तिर्भवत्विति त्रिरुक्तिराध्यात्मिकादित्रिविधविघ्नोप - शान्त्यभिप्रायेणेत्यवधेयम् ।। १.१ ।।

**श्रीराघवेन्द्रयतिविरचिततैत्तिरीयोपनिषत्खण्डार्थः**

**श्रीब्रह्मशेषरूद्रादिदैवतैस्सर्ववेदगैः ।**
**वचोभिरीडितं विष्णुं नानारूपमुपास्महे ।।**

**प्रणम्य श्रीमदानन्दतीर्थादिगुरुशेखरान् ।**
**तैत्तिरीयोपनिषदः करिष्याम्यर्थसङ्ग्रहम् ।।**

**भाष्यस्यार्थो व्यासतीर्थटीकातो ह्यवगम्यते ।**
**विक्षिप्तत्वादुपनिषदर्थस्यैवात्र सङ्ग्रहः ।।**

अस्या उपनिषदो रविमण्डलगो विष्णुर्ब्रह्मा वरुणो भृगुश्चेति क्रमादृषयश्चत्वारः । स एव हरिर्देवता । वाक्यरूपत्वान्न च्छन्दोन्वेषणं शं नो मित्र आवहन्तीत्यादौ । छन्दोबद्धस्थलेऽक्षरपरिगणनयाऽनुष्टुबादि बोध्यम् । ब्रह्मविद्यामभ्यस्यन् भृगुर्विघ्नविघातार्थं देवान्प्रार्थयते- **शन्नो मित्र इत्यादिना ।**

मित्रः नोऽस्माकं शं सुखकरो भवत्विति सर्वत्रान्वेति । एवमग्रेऽप्यर्थो बोध्यः । वायोर्ब्रह्मविद्याप्रवर्तकेषु मुख्यत्वात् परब्रह्मणो मुख्याधिष्ठानत्वाच्च तन्नतिस्तुती कुर्वन् पृथुक् प्रार्थयते- **नम इत्यादिना** । तत्र वदिष्यामीत्यन्तेन स्तुतिः, तन्मामित्यादिना प्रार्थनेति विवेकः । ब्रह्मणे परब्रह्माधिष्ठानाय, ज्ञानादिगुणबृंहिततया ब्रह्मपदवाच्यायेति वा, प्राणो ब्रह्मेति श्रुतेः । अध्यात्मरूपं नत्वा अधिदैवरूपं नमति । नमस्त इति वा, परोक्षतो नत्वाऽपरोक्षतो नमति नमस्त इति वार्थः । 'वाग् वै ब्रह्म' इति काण्वश्रुतेः वाण्यै नम इति वा, विरिञ्चायेति वा । नतं वायुं स्तौति- **त्वमेवेति** । प्रत्यक्षभूतप्राणापानादिवायुवृत्तिशरीरकत्वात् प्रत्यक्षमित्युक्तिः । मुख्यवायोः प्राणादिपञ्चात्मना वक्ष्यमाणानां संहितायाः पञ्चाधिकरणानाम् अभिमानिदेवतात्वं, 'पृथिव्यन्तरिक्षं द्यौः' इत्यादिनोक्तं पाङ्क्तत्वं चास्ति, अभिमन्यमानोक्तिरेवाभिमान्युक्तिरिति तदभिप्रायेणाऽह भृगुः । त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामीति । अक्षि अक्षि प्रति प्रत्यक्षं । 'प्रतिपरिसमनुभ्योऽक्ष्ण' इति समासान्तः प्रतिगृहं कूप इतिवत् । नियामकतया सर्वेन्द्रियस्थमिति वा प्रत्यक्षमित्यस्यार्थः । त्वमित्यस्य त्वामित्यर्थो व्यत्ययात्, ऋतं यथार्थज्ञानवन्तम्, सत्यं यथार्थज्ञानपूर्वकं वक्तारं कर्तारं चेत्यर्थः । प्रत्येकं क्रियाभ्यास आदरार्थः । तत् तस्मात् त्वन्नन्तृत्वात्वद्वदितृत्वाच्च मां वक्तारमिति सामानाधिकरण्यं वा, मां वक्तारं आचार्यं चेति वा, अभ्यासः प्राग्वत् । ॐ वाय्वादौ सर्वत्र व्याप्ततया

रक्षकत्वेन च ॐ पदवाच्येन विष्णुना शान्तिरस्त्वित्यर्थः । दिव्यान्तरिक्ष-भौमानिष्टनिरासाय शान्तिरिति त्रिरुक्तिः । आध्यात्मिकाधिभौतिकादि-दैविकानिष्टनिरासार्थं त्रिरुक्तिरित्येके ।। १.१।।

### उपनिषत्

**शीक्षां व्यांख्यांस्यामः । वर्णः स्वरः । मात्रा बलम् । साम सन्तानः । इत्युक्तः शीक्षाध्यायः ।। १.२ ।।**

### भाष्यम्

**वरणीयो वर्णः । स्वरतेस्तु स्वरः । मानात् त्राता मात्रा । बलरूपः । समश्च सर्वरूपेषु । सन्ततश्च ।**

**वर्णादिवाचकं रूपं ज्ञेयं वर्णादिनामकम् ।**
**विष्णोर्वर्णादिसंस्थं च पुंसु तत्तत्क्रियाप्रदम् ।।१.२।।**

**व्यास-** ब्रह्मविद्याभ्यासार्थिनः पूर्वशिक्षणीयमर्थं वदन्नाह- **शीक्षामिति** । शिक्ष्यत इति शीक्षा शिक्षणीयमर्थमित्यर्थः । वर्णः वर्णानामुच्चारणस्थानानि ज्ञातव्यानि । स्वर उदात्तादिः । मात्रा एकमात्रादिः । बलं वर्णोच्चारणप्रयत्नः । सामः वर्णानां सन्धिः । सन्तानः वर्णानां परम्परा । शिक्षणीया एते ज्ञातव्या इत्यर्थः ।

वर्णाद्युच्चारणस्थानादीनि ज्ञातव्यानीत्युक्त्या अस्या ब्रह्मसम्बन्धित्वं नास्तीति प्रतीयते । तां निवारयन्नाह- **वरणीय इत्यादिना** । मानात् ज्ञानात् वर्णादिशब्दो भगवद्वाचक इति निरुच्य दर्शितम् । तदागमेन द्रढयति- **वर्णेति** । तस्येयं योजना वर्णादि विष्णोर्यस्य स्वरूपस्य प्रतिपादकं तद्वर्णादिवाचकं रूपम् । वर्णादिनामकं वर्णः स्वर इत्यादिनामकं ज्ञेयम् । पुंसु तत्तत्क्रियाप्रदं वर्णाद्युच्चारणक्रियाप्रदम् ।।१.२।।

**वादि–** शीक्षां व्याख्यास्याम इत्यत्र 'तृतीयोऽतिशये' इति वचनाच्छिक्षायास्सामञ्जस्यवचनाय शीक्षामिति उक्तम् । यद्यप्युदात्तानुदात्तस्वरितप्रचयाख्याः स्वरा अपि मात्रा एव । तथाऽपि वक्ष्यमाणधर्मान्तरविवक्षया मात्रायाः पृथग्ग्रहणम् । एकमात्रो ह्रस्वः । द्विमात्रो दीर्घः । त्रिमात्रः प्लुत इत्यर्थः । स्पृष्टेषत्स्पृष्टादिरूपः प्रयत्नः । बहुवर्णात्मकवाक्यं वर्णपरम्परारूपतया सन्तान इत्युच्यते । वर्णादिषट्कस्य तन्नियामकरूपषट्कस्य च ज्ञानाभावे वर्णोच्चारणं व्यर्थं स्यात् । मध्ये मध्ये स्खलनं च स्यात् । अत इयं शिक्षा प्राथमिकीति भावः ॥१.२ ॥

**श्री.भा-** ब्रह्मविद्याभ्यसनेच्छोरधिकारिणः पूर्वं शिक्षणीयमर्थं प्रतिजानते ऋषयः- **शीक्षामिति** । तत्र वर्णस्वर इत्यादौ वर्णाद्युच्चारणस्थानादीनि ज्ञातव्यानीत्युक्त्या अस्या उपनिषदोऽब्रह्मविद्यात्वं प्रतीयते अतस्तां निराकर्तुं वर्णादिशब्दषट्कं भगवति निरुच्य दर्शयति- **वरणीय इत्यादिना** । वरणीयो भजनीयः सर्वभक्तैः स्वीकर्तव्यो वा । स्वरतेः स्वस्मिन् रमणात् । 'मानं ज्ञानं लयश्चैव मर्यादा चापि कथ्यते' इत्यभिधानात् मानादिति ल्यब्लोपनिमित्ता पञ्चमी । मानं भक्तानामपमृतत्वादिरूपं लयं नाशं परिहृत्य भक्तानां त्राता । यद्वा मानात् ज्ञानं प्रदाय त्रातेत्यर्थः । सन्ततः सम्यग्देशतः कालतः गुणतश्च ततो व्याप्तः । वर्णादिशब्दवाच्यत्वे वरणीयत्वादिकं निमित्तमित्युक्तं तदुपलक्षणपरमित्यभिप्रेत्योक्तार्थे प्रमाणमाह- **वर्णादिवाचकमिति** । आदिपदेन स्वरमात्रादिग्रहणम् । तथा च वरणीयत्वादिनिमित्तेन वर्णादिकं वाचकं यस्य तत् वर्णादिवाचकमित्यर्थः । वर्णादिशब्दप्रतिपाद्यमिति यावत् । विष्णोः रूपमित्यन्वयः । वर्णादिनामकं वर्णः स्वर इत्यादिनामकं वर्णादिसंस्थं च वर्णोदात्तादिस्वरसंस्थं नियामकतया यतोऽतः । अनेन निमित्तेन वर्णादिनामकमिति निमित्तान्तरकथनम् ।

निमित्तान्तरं चाह- **पुंस्विति** । पुंसु स्थित्वा वर्णस्वराद्युच्चारणादिक्रियाप्रदं च यतोऽतो वर्णादिनामकमित्यर्थः ।।१. २।।

**श्री.खं-** ब्रह्मविद्याभ्यसनेच्छोरधिकारिणःपूर्वं शिक्षणीयमर्थं प्रतिजानते ऋषयः- **शीक्षामिति** । शिक्ष्यत इति शीक्षा शिक्षणीयमर्थमित्यर्थः । दीर्घस्तु शिक्षणीयार्थस्यावश्यकत्वद्योतकः । व्याख्यास्यामो विशेषेण वक्ष्यामः । तामेव शिक्षामाहुः वर्ण इत्यादिना । वर्णः ज्ञातव्य इति शेषः । वर्णः अकारादिवर्णानामुच्चारणस्थानं कण्ठादिज्ञातव्यम् । स्वरः उदात्तानुदात्त-स्वरितादिरूपो ज्ञातव्यः । मात्रा अकारादिरूपएकैको वर्णो ज्ञातव्यः । बलं वर्णोच्चारणहेतुभूतः स्पृष्टेषत्स्पृष्टविवृतादिस्वरूपः प्रयत्नो ज्ञातव्यः । साम वर्णानां सन्धिर्ज्ञातव्यः । सन्तानो वर्णानां परम्परा पदवाक्यादिरूपो वर्णसमुदाय इति यावत् ज्ञातव्यः । उपसंहरति- **इत्युक्त इति** । शीक्षाध्यायः शिक्षणीयानां अर्थानां अध्यायोऽध्ययनमुपदेशः । इत्येवमस्माभिरुक्तः कृत इत्यर्थः ।

अब्रह्मविद्यात्वपरिहाराय वर्णस्वर इत्यादिकं भगवत्परत्वेनापि योज्यम् । तथाहि । वरणीयत्वात् वर्णेषु स्थितत्वात् पुंसु वर्णोच्चारणक्रियाप्रदत्वाच्च विष्णोरूपं वर्ण इत्युच्यते । तथा स्वरमणत्वात् स्वरे स्थितत्वात् स्वरोच्चारणक्रियाप्रदत्वाच्च स्वर इत्युच्यते । मानात् त्राणात् मात्रास्थितत्वात् मात्रोच्चारणक्रियाप्रदत्वाच्च मात्रेत्युच्यते । बलरूपत्वात् बले विवृतादिरूपे प्रयत्ने स्थितत्वात् बलक्रियाप्रदत्वाच्च बलमित्युच्यते । सर्वरूपेषु समत्वात् साम्नि वर्णानां सन्धौ स्थितत्वात् सन्ध्युच्चारणक्रियाप्रदत्वाच्च सामेत्युच्यते । सन्ततत्वात् वर्णपरंपरायाश्च स्थितत्वात् वर्णपरंपरोच्चारणक्रियाप्रदत्वाच्च सन्तान इत्युच्यत इत्यर्थो द्रष्टव्यः ।।१.२।।

**वरद-** तत्रादौ तावद् 'ब्रह्मविदाप्नोति परम्' इत्यादिना साक्षान्निरूप्य-माणं ब्रह्मविद्याप्राप्तिसाधनत्वेन ज्ञातव्यं किञ्चिन्निरूप्यते- **शिक्षामित्यादिना** ।

तत्र सर्वस्याप्युपनिषदो ब्रह्मविषयत्वात् कथं तद्विहाय केवलवर्णस्वरादि-मात्रप्रतिपादनं तस्या उपनिषद इति । अतो वर्णादिशब्दाः अपि हरिविषया एवेत्याह- **वरणीय इत्यादिना** । वर्णादिशब्दैरपि हरिरेवोच्यत इत्यत्र वचनान्तरसंवादं चाह- **वर्णादीति** । आदिशब्देन स्वरादिः । वर्णादिवाचकं प्रतिपादकं यस्य रूपस्य तद्वर्णादिवाचकम् । पुंसु पुरुषेषु । तत्तत्क्रियाप्रदं वर्णोच्चारणस्वरोच्चारणादिक्रियाप्रदमित्यर्थः ।।१.२।।

**काशी-** ब्रह्मविद्याकामस्यादौ शिक्षणीयार्थवचनं प्रतिज्ञायते- शीक्षामिति । शिक्ष्यत इति शीक्षा शिक्षितव्योऽर्थः । छान्दसो दीर्घस्तस्यावश्यज्ञेयत्व-ज्ञापनार्थः । तां शीक्षां व्याख्यास्यामो विस्पष्टं कथयिष्याम इत्यर्थः । तामेव शिक्षां कथयति- **वर्ण इति** । अत्र वर्णोऽकारादिः, स्वरः उदात्तादिः, मात्रा ह्रस्वादिः, बलं वर्णोच्चारणप्रयत्नः, सामः वर्णानां समता यथावदुच्चारणम् इति यावत् । सन्तानः संहितेति शीक्षाध्यायः शिक्षित-व्यार्थोपदेश उक्तः कृत इत्येतावन्मात्रस्य विवक्षितत्वे ब्रह्मविद्यात्वानुप-पत्तिरित्यतो वर्णादिशब्दान् अन्तर्यामिपरत्वेन व्याचष्टे- **वरणीय इति** । ज्ञानार्थं स्वीकरणीय इत्यतो वर्णशब्दवाच्य इत्यर्थः । एवमुत्तरत्र स्वरतेः स्वस्मिन् रमणात् मानात् हिंसातस्त्राता । यद्वा 'ल्यब्लोपनिमित्ता पञ्चमी' मानं ज्ञानं प्रदाय त्राता, बलरूपः शक्तिविशेषस्वरूपः, सर्वरूपेषु गुणैः समः साम सन्ततो व्याप्तः सन्तान इत्याध्याहारेणान्वयज्ञापनाय चशब्दौ अत्र प्रमाणमाह- **वर्णादिवाचकमिति** । वर्णादिशब्दवाचको निर्वचन-शक्तिमान् यत्र तद्वार्णादिवाचकं वर्णादिशब्दनिर्वचनलब्धगुणोपेतमिति यावत् । एवं पुंसु तेषां तेषां वर्णादीनां याः क्रिया अर्थबोधनादिशक्तयः तत्प्रदं वर्णादिसंस्थं च तत् तत्तच्छक्तिप्रबोधकत्वेन तद्वर्णादिसंस्थमिति यावत् । विष्णो रूपं वर्णादिनामकमित्यर्थः । अत्र वरणीयत्वादिकं महायोगेन तत्तच्छक्तिप्रबोधकत्वेन तत्तत्संस्थत्वं च विद्वद्रूढ्या वर्णादि-

शब्दलभ्यमिति ध्येयम् । तथा च वरणीयत्वादिगुणोपेताः तत्तद्वर्णादिगत-शक्तिप्रबोधकत्वेन तत्तद्वर्णादिगता विष्णुरूपविशेषा आदौ ज्ञातव्या इति परमार्थः ॥१.२॥

**रा.खं-** ब्रह्म विद्याभ्यासार्थिनः पूर्वं शिक्षणीयमर्थं प्रतिज्ञापूर्वकमाह - **शीक्षामिति** । शिक्ष्यत इति शिक्षा, शिक्षणीयमर्थं विविच्य स्पष्टं वक्ष्याम इत्यर्थः । शीक्षेति दैर्घ्यं च्छान्दसम् । प्रतिज्ञातमाह -**वर्ण इत्यादिना** । वर्ण अकरादिवर्णोच्चारणस्थानानि कण्ठताल्वादीनि, ज्ञातव्यपदं सर्वत्र योज्यम् । स्वर उदात्तादिः, मात्रा एकमात्रादिः, बलं वर्णोच्चारणप्रयत्नो विवृतादिः, साम वर्णानां सन्धिः, सन्तानो वर्णमाला । न केवलं वर्णोत्पत्तिस्थानादिकमेव ज्ञातव्यम् । वरणीयत्वहेतुना वर्णनामकं वर्णस्थं वर्णवाच्यं पुरुषे वर्णोच्चारणक्रियाप्रदं विष्णो रूपं वर्ण इति ज्ञेयम् । स्वस्मिन् रमत इति व्युत्पत्त्योदात्तादिस्वरनामकं स्वरवाच्यं स्वरगतं पुरुषे स्वरोच्चारणक्रियाप्रदं रूपं मात्रास्थितं मात्रावाच्यं मात्रोच्चारणक्रियाप्रदं रूपं सामेति ज्ञेयम् । गुणादिना सन्ततत्वनिमित्तेन सन्ताननामकं वर्णसन्ततिस्थं सन्तानवाच्यं पुरुषगतसन्तानोच्चारणक्रियाप्रदं रूपं सन्तान इत्यपि ज्ञेयम् । शीक्षाध्यायः । अध्याय इति ग्रन्थसन्दर्भनाम । शीक्षा शिक्षणीयोऽर्थो यस्मिन्नध्याये स शीक्ष्याध्यायः इत्येवमुक्त इत्यर्थः । प्रतिज्ञोपसंहारयोरुक्तिरुक्तेऽर्थेऽवधानद्योतनार्था । एवमग्रेऽपि ज्ञेयम् ॥१.२॥

### उपनिषत्

**स ह नौ यशः । सह नौ ब्रह्मवर्चसम् । अथातः स॒ꣳहिताया उपनिषदं व्याख्यास्यामः । पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम् । ता महासꣳहिता इत्याचक्षते ॥१.३॥**

अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । आकाशः सन्धिः । वायुः सन्धानम् । इत्यधिलोकम् ।।१.४।।

अथाधिज्यौतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् । आपः सन्धिः । वैद्युतः सन्धानम् । इत्यधिज्यौतिषम् ।।१.५।।

अथाधिविद्यम् । आचार्यः पूर्वरूपम् । अन्तेवास्युत्तररूपम् । विद्या सन्धिः । प्रवचनꣳसन्धानम् । इत्यधिविद्यम् ।।१.६।।

अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा सन्धिः । प्रजननꣳसन्धानम् । इत्यधिप्रजम् ।।१.७ ।।

अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक् सन्धिः । जिह्वा सन्धानम् । इत्यध्यात्मम् । इतीमा महासꣳहिताः । य एवमेता महासꣳहिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्गेण लोकेन ।।१.८।।

भाष्यम्

नारायणादिरूपाणि लोकादिषु च पञ्चसु ।
अनिरुद्धावसानानि ध्येयानि चतुरात्मना ।।

वासुदेवादिकान्येव तानि पूर्वोत्तरार्णयोः ।
संहितायास्तथा सन्धौ सन्धाने चापि कृत्स्नशः ।।

यो वेदैतानि रूपाणि सर्वभोगसमन्वितः ।
प्राप्नोति वैष्णवं स्थानं मुक्तस्स्वर्गाभिदं परम् ।।१.३-८।।

**व्यास**- आदावेव विघ्नाभावप्रार्थने कृतेऽपि प्रतिविद्यं विघ्नाभावः प्रार्थनीय इति भावेनाथात इति वक्ष्यमाणविद्याविघ्नाभावं प्रार्थयते-**स ह नौ यश इति** । स मित्रादिः नौ गुरुशिष्ययोर्यशस्करं ब्रह्वर्चस्करं भवतु । सामेति प्रकृतवर्णसन्धिनिष्ठां ब्रह्मविद्यां वदन्नाह- **अथेति** । वर्णादि-शिक्षणादनन्तरम् । अधिकरणेषु प्रकरणेषु । अधिकरणान्येवाह- **अधिलोकमित्यादिना** । लोकमधिकृत्याधिलोकं इत्यादि योज्यम् । अधिलोकमित्याद्युक्तं विवृणोति- **अथाधिलोकमित्यादिना** । पृथिवी पूर्वरूपं द्यौरुत्तररूपमित्यादौ पृथिव्यादेः पूर्ववर्णत्वं द्व्यादेरुत्तरवर्णत्वं प्रतीयते तदनुपपन्नम् । तत्तद्देवतापरत्वे तु न ब्रह्मविद्यात्वम् । अतस्तद्यथावद्व्याकरोति- **नारायणादीति** । तथा संहितायाः सन्धौ सन्निकर्षे सन्धाने सन्धिकार्ये च तिष्ठन्तीति ध्येयानीति शेषः । उक्तविद्यां फलेन रोचयति- **य एवमिति** । तद्वाक्यं स्वर्गपरत्वप्रतीतिं वारयन्व्याचष्टे- **य इति** ॥१.३-८॥

**वादि**- शं नो मित्र इत्युपनिषदारम्भे मङ्गलस्य कृतत्वात् पुनः 'स ह नौ यशः' इति मङ्गलाचरणं किमर्थमिति चेत् सत्यम् । विद्यानां बाहुल्यात् प्रतिविद्यं मङ्गलाचरणं कार्यमिति सूचनायाथातस्संहिताया इति विद्यारम्भेऽपि पुनर्मङ्गलं कृतमिति ज्ञेयम् । सः मित्रादिः नौ यशो दिशतु इत्यर्थः । हेत्यनेन यशोदानशक्तेः प्रसिद्धतामाह । अथातः संहिताया इत्यत्र अथ अध्ययनाङ्गशिक्षानिरूपणानन्तरमतः संहितायाः 'अग्निमीळे पुरोहितम्' इत्यादावग्न्यादिवर्णद्वयात्मकसंहितायाः पूर्वोत्तरवर्णयोः तत्सन्धित्सायाः सन्धेश्च ज्ञानस्यैकवर्णज्ञानादप्यधिकफलसाधनत्वात् तस्याः संहिताया उप समीपे निषीदतीत्युपनिषदं तत्सम्बन्धिरहस्यविद्यां व्याख्यास्यामः । एवं ज्ञानेऽक्षरद्वयात्मकसंहितोच्चारणं स्पष्टं क्लिष्टं च भवतीत्यतोऽस्या विद्याया उत्तरविद्याङ्गत्वमिति भावः ।

'चतुरात्मना वासुदेवादिकान्येव' इत्यत्र चतुरात्मना वासुदेवाद्यनिरुद्धान्तचतुरात्मना वासुदेवादिकान्येव च पूर्वोत्तरवर्णयोस्तत्सन्धौ सन्धाने च ध्येयानीति योजना ।

अत्रायं विवेकः सन्धिदेवताज्ञाने सन्ध्यक्षरोच्चारणे सौष्ठवं भवति । अधिलोकादिसन्ध्यक्षरज्ञाने इह लोके परलोके च सुखं भवति । अधिज्यौतिषं सन्ध्यक्षरज्ञाने ब्रह्मवर्चसं भवति । अधिविद्यं सन्ध्यक्षरज्ञाने शिष्याचार्यादिघटना भवति । अधिप्रजं सन्ध्यक्षरज्ञाने सन्तानाभिवृद्धिर्भवति । अध्यात्मं सन्ध्यक्षरज्ञाने सुष्ठूच्चारणशक्तिर्भवति । अत इदमप्यवश्यं ज्ञातव्यमित्येतदेवाभिप्रेत्य श्रुतिः 'सन्धीयते प्रजया पशुभिः' इत्यादिना फलमप्याह ॥१.३-८॥

**श्री.भा-** अथाधिलोकं पृथिवी पूर्वरूपं द्यौरुत्तररूपमित्यादिप्रकरणपञ्चके पृथिव्यादेः पूर्ववर्णत्वं द्व्यादेश्चोत्तरवर्णत्वं च प्रतीयते तदयुक्तम् । लोकादीनां वर्णाद्यभेदस्य बाधितत्वात् । पृथिव्यादिदेवतानां पूर्ववर्णादिप्रतिपाद्यत्वाभिप्राये त्वब्रह्मविद्यात्वापत्तेरतस्तदभिप्रायेणैव दर्शयन्नादौ किञ्चिद्वक्तव्यं प्रमेयमाह- **नारायणादीति** । नारायणादीनि अनिरुद्धावसानानि रूपाणि लोकादिषु पञ्चसु ध्येयानि । तत्र लोके नारायणः, ज्योतिषि वासुदेवः, विद्यायां सङ्कर्षणः, प्रजायां प्रद्युम्नः, आत्मनि अनिरुद्ध इति विवेकः ।

एवमुपयुक्तमुक्त्वा पृथिवी पूर्वरूपमित्यादेरभिप्रायमाह- **चतुरात्मनेति** । चतुस्स्वरूपेण विद्यमानानि चतुःसंख्याकानीति यावत् । वासुदेवादिकानि तान्येव अनिरुद्धान्तान्येव रूपाणि पूर्वोत्तरार्णयोः पूर्वार्णे उत्तरार्णे च तथा संहितायाः सन्धौ सन्निकर्षे सन्धाने सन्धिकार्यभूतसन्ध्यक्षरव्यवहरणरूपसन्धानक्रियायां च सन्तीति ध्येयानीति सम्बन्धः । कृत्स्नशः पूर्वोत्तरार्णयोरित्यादिसम्बन्धः । समस्तपूर्वोत्तरार्णादावित्यर्थः । कृत्स्नशो यो

वेदेत्युत्तरत्र वा सम्बन्धः ।'य एवमेता महासंहिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्गेण लोकेन' इति फलवाक्यं स्वर्गशब्दस्य प्रसिद्धस्वर्गपरत्वप्रतीतिं निवारयन् व्याचष्टे- **यो वेदेति** । अन्नाद्ये न सन्धीयत इत्यस्यार्थः सर्वभोगसमन्वित इति । इह लोकेऽपीति शेषः । सुवर्गेण लोकेन संधीयत इत्यस्यार्थः प्राप्नोतीत्यादि । तथाच सुवरोऽतिशयेनोत्तमो विष्णुः यत्र गतः व्यक्ततयावस्थितः सः सुवर्गो विष्णुव्यक्तिस्थानभूतस्तेन लोकेन वैकुण्ठादिस्थानेन सन्धीयते तल्लोकं प्राप्नोतीति यावदित्यर्थ इत्युक्तो भवति ।। १.३-८।।

**श्री.खं-** तथाच सह नौ यश इत्यादेरयमक्षरार्थः । शन्नो मित्र इत्यादिना आदौ देवताप्रार्थने कृतेऽपि प्रतिविद्यमभीष्टफलार्थं देवताप्रार्थनं कर्तव्यमित्याशयेन अथातः संहिताया इति वक्ष्यमाणविद्याप्रवृत्त्यर्थं पुनर्मित्रादिदेवान्प्रति अभीष्टफलं प्रार्थयते- **सह नौ यश इति** । सः मित्रादिवाय्वन्तो देवसमुदायो नौ गुरुशिष्ययोर्निर्विघ्नविद्यासमाप्तिसम्पादनेन यशो यशस्करोऽस्तु । सह नौ ब्रह्मवर्चसं वेदाध्ययनजनितवर्चोविशेषकरश्च भवतु । इति मित्रादीनां यशआदिदातृत्वं प्रसिद्धमिति दर्शयति- **सामेति** । प्रकृतवर्णसन्धिनिष्ठब्रह्मविद्यां वक्तुं प्रतिजानते ऋषयः- **अथात इति** । अथ वर्णादिशिक्षाव्याख्यानानन्तरं अतः संधीयते प्रजयेत्यादिना वक्ष्यमाण-लौकिकालौकिकफलसद्भावात्संहितायाः वर्णसन्धिसम्बन्धिनीमुपनिषदं तत्रत्यरहस्यभगवद्रूपविशेषोपास्तिप्रकारमिति यावत् । पञ्चसु अधिकरणेषु प्रकरणेषु व्याख्यास्यामः सम्यक् कथयामः । अधिकरणनामान्याह- **अधिलोकमित्यादिना** । लोकमधिकृत्य प्रवर्तमानं अधिलोकं तन्नामकं प्रथमप्रकरणम् । ज्योतिषां समूहो ज्यौतिषं तदधिकृत्य वर्तमानं अधिज्योतिषं तन्नामकं द्वितीयं प्रकरणम् । विद्यामधिकृत्य वर्तमानं अधिविद्यं तन्नामकं तृतीयं प्रकरणम् । प्रजाः अधिकृत्य वर्तमानं अधिप्रजं

तन्नामकं चतुर्थप्रकरणम् । आत्मानं देहमधिकृत्य वर्तमानं अध्यात्मं तन्नामकं पञ्चमप्रकरणम् । ताः एताः संहिताः भगवदधिष्ठितत्वेन महासंहिता इत्याचक्षते विद्वांसः । अत्र नारायणादीन्यनिरुद्धान्तानि भगवद्रूपाणि लोकादिषु पञ्चसु सन्तीति ग्राह्यम् ।।१.३।।

अथैवं प्रतिज्ञानन्तरं अधिलोकं लोकस्थं नारायणमधिकृत्य प्रवर्तमाना संहिता निष्ठा विद्या निरूप्यत इत्यर्थः । तदेव विवृणोति- **पृथिवीत्यादिना** । सः नारायणो वासुदेवाद्यात्मना चतुर्विधः पृथिवी पृथुत्वात् प्रथितत्वाद्वा पृथिवीनामकं पृथिवीसंस्थं नारायणस्य वासुदेवनामकं रूपं पूर्वरूपं संहितापूर्ववर्णस्थितं तन्नामकं च । द्यौः प्रकाशस्वरूपत्वात् तन्नामकं द्युस्थं नारायणस्य संकर्षणनामकं रूपं उत्तररूपं संहिताया उत्तरवर्णस्थितं तन्नामकं च । आकाशः आसमन्तात्काशनादाकाशनामकं आकाशसंस्थं नारायणस्य प्रद्युम्ननामकं रूपं सन्धिः सन्धिस्थं तच्छब्दवाच्यं च । वायुः ज्ञानादायुष्ट्वाच्च वायुनामकं तत्रस्थं नारायणस्यानिरुद्धनामकं रूपं सन्धानं सन्धिकार्यभूता सन्ध्यक्षरव्यवहरणरूपा सन्धानक्रिया सन्धानशब्देनोच्यते । तत्रस्थं तन्नामकं चेत्यर्थः । उपसंहरति- **इत्यधिलोकमिति** । इत्येवं प्रकारेण लोकान्तर्गतचतूरूपनारायणमधिकृत्य विद्यमाना संहिता निरूपितेत्यर्थः । एवमुत्तरत्रापि योजना द्रष्टव्या ।।१.४।।

अथाधिलोकनिरूपणानन्तरं अधिज्यौतिषं ज्योतिषान्तर्गतवासुदेवमधिकृत्य संहितानिष्ठा विद्या निरूप्यत इत्यर्थः । एवमेवाथाधिविद्यमित्यादित्रयं योज्यम् । ज्योतिषान्तर्गतो वासुदेवोऽपि वासुदेवाद्यात्मना चतुर्विध इति संग्राह्यम् । अग्निरंगप्रणेतृत्वात्तन्नामा तत्स्थश्च वासुदेवः । आदित्यः आदिकाले भवत्वात् आदानाद्वा आदित्यनामा तत्स्थश्च संकर्षणः । आपः बहुरूपत्वाद्बहुवचनं आपालनात् तन्नामा तत्संस्थश्च प्रद्युम्नः । वैद्युतः विद्युत्सम्बन्धित्वात् वैद्युतनामा तत्संस्थश्च अनिरुद्धः ।।१.५।।

विद्यान्तर्गतस्संकर्षणः । सोऽपि वासुदेवाद्यात्मना चतुर्विधः । आचार्यः सदाचारेण प्राप्यत्वादाचार्यनामा आचार्यसंस्थश्च वासुदेवः । अन्तेवासी सर्वेषां समीपे नियामकतया वसतीति वा अन्ते प्रलये वसतीति वा अन्तेवासिनामा तत्संस्थश्च संकर्षणः । विद्या ज्ञानरूपत्वाद्विद्यानामा तत्संस्थश्च प्रद्युम्नः । प्रवचनं प्रकर्षेण वक्तृत्वात्प्रवचननामा प्रवचनक्रिया-संस्थश्चानिरुद्धः ।।१.६।।

प्रजास्थः प्रद्युम्नः सोऽपि वासुदेवाद्यात्मना चतुर्विधः । माता मातृत्वात् मातृनामा मातृसंस्थश्च वासुदेवः । पिता पातृत्वात्पितृनामा तत्संस्थश्च संकर्षणः । प्रजा प्रकर्षेण जायते व्यक्तो भवतीति प्रजानामकः प्रजासंस्थश्च प्रद्युम्नः । प्रजननं प्रकर्षेण जनयतीति वा प्रजननक्रियानियामकत्वाद्वा प्रजननशब्दवाच्यः प्रजननक्रियासंस्थश्चानिरुद्धः ।।१.७।।

आत्मसंस्थोऽनिरुद्धः । सोऽपि वासुदेवाद्यात्मना चतुर्विधः । अधराहनुः हनुशब्दो ज्ञानवाची हनहिंसागत्योः । तथाचाधराणां नीचानां मनुष्योत्तमानां आ सम्यक् योग्यतानुसारेण ज्ञानप्रदत्वादुत्कृष्टत्वाच्चोत्तराहनुशब्दवाच्य-स्तत्स्थश्च संकर्षणः। वाक् वक्तृत्वाद्वाङ्नामा वाक्संस्थश्च प्रद्युम्नः । जिह्वा ओहाकृत्यागे वागतिगन्धनयोः। तथाचान्तकाले सर्वान् जहाति योग्यान्मोक्षं गमयतीति जिह्वा नामकः । यथोक्तं बृहद्भाष्ये । जहाति गमयतीति जिह्वेति । जिह्वासंस्थश्चानिरुद्धः । उपसंहरति- **इतीति** । इत्येवमिमाः महासंहिताः व्याख्याता इत्यर्थः । महासंहितावेत्तुः फलमाह- **य एवमिति** । योऽधिकारी एवं पूर्वोक्तप्रकारेणैता व्याख्याता महासंहिताः वेद स सुवर्गेण सुवरः अतिशयेन उत्तमो विष्णुर्यत्र गतो व्यक्ततयावस्थितः सः सुवर्गो विष्णुव्यक्तिस्थानभूतः । तेन लोकेन वैकुंठादिस्थानेन सन्धीयते संयुक्तो भवति मुक्तो भवतीत्यर्थः । अनन्तरं तत्र प्रजया प्रकृष्टत्वेन जननात् नित्योदिततया स्थितत्वात् प्रजेतिज्ञानं तया । पशुभिः पान्ति शंसाधनाश्चेति

पशवो वेदास्तैः । ब्रह्मवर्चसेन, ब्रह्मणो विष्णोः वरादेव सम्यक् चापितं अभिवृद्धं यत्स्वरूपं तेजः तत् ब्रह्मवर्चसं तेन सन्धीयते । संसृतावल्पतेजो जीवस्वरूपं भगवान्मुक्तौ महत्करोतीति हि 'अल्पतेजस्तथैवाल्पं जीवरूपं हि संसृतौ । तदेव सुमहत्तेजः करोतीशो महत्तदा' इति प्रमाणप्रसिद्धम् । अन्नाद्येन तदुपलक्षितसर्वभोगेन च संधीयते युक्तो भवतीत्यर्थः । लौकिकफलेच्छूनां एतत्संहिताज्ञानादानुषंगिकं प्रसिद्धं प्रजादिकमपि फलं यथायोग्यं भवतीति व्याख्येयम् । प्रजया पुत्रसन्तत्या पशुभिः गवादिभिः ब्रह्मवर्चसेन वेदाध्ययनजनितमुखगतवर्चोविशेषेण अन्नाद्येन तदुपलक्षित भोगेन सुवर्गेण लोकेन प्रसिद्धस्वर्गलोकेनेत्यर्थो द्रष्टव्यः । यथोक्तमैतरेयभाष्ये अथातः संहिताया उपनिषदिति खण्डे । 'युक्तः प्रकृष्टज्ञानैश्च वेदैर्विष्णूत्थतेजसा । नित्यायुषा च युक्तः स्यात् संहितारूपविद्धरेः' इति च । प्रकृष्टत्वेन जननात् प्रजेति ज्ञानं पान्ति शं साधनाश्चेति पशवो वेदाः परब्रह्मणो वरणादेव सम्यक् चापितं स्वरूपं तेजः लौकिकप्रजादिकमपि तदिच्छूनां यथायोग्यं भवतीति ॥ १.८ ॥

**वरद-** एवं ब्रह्मविद्यासाधनत्वेन ज्ञातव्यवस्तूनि निरूप्य इदानीं संहिताश्रिता ब्रह्मविद्या निरूप्यते- **अथातः संहिताया इत्यादिना** । तत्तात्पर्यतो व्याख्याति- **नारायणादीति** । नारायणादीनि विष्णोः पञ्चरूपाणि लोकज्योतिर्विद्याप्रजात्मसु पञ्चस्थानेषु प्रत्येकं वासुदेवसङ्कर्षण-प्रद्युम्नानिरुद्धपुरुषविभागेन चतुरात्मना ध्येयानीत्यर्थः । 'पूर्वरूपमुत्तररूपम्' इत्यादेः पञ्चस्थानगतस्य युगपदेवार्थमाह- **पूर्वोत्तरेति** । सन्धिः संहिता, सन्धानं संहितानुगुणः पुरुषव्यापारः, संहिताकार्यो वर्णविकारो वा । संहिताया इत्यस्य पूर्वोत्तरार्णयोरित्यनेनान्वयः ।

अयमर्थः । वासुदेवादिविभागेन चतूरूपो नारायणः पृथिव्यादिलोक-चतुष्टये पूर्ववर्णोत्तरवर्णादिचतुष्टये च स्थितः । एवं वासुदेवोऽपि

वासुदेवादिरूपचतुष्टयेन अग्न्यादिचतुर्षु पूर्ववर्णोत्तरवर्णादिचतुष्टये स्थितः । एवं सङ्कर्षणादयोऽपि वासुदेवादिविभागेन चतूरूपाः । ते आचार्यमात्रधराः हनुप्रभृतिषु स्थिता इति ।।१.३-८।।

**काशी**- इदानीमुक्तवक्ष्यमाणविद्यासु प्रवृत्तये तत्तद्विद्याफलसम्बन्धं गुरुशिष्ययोः प्रार्थयते- **स ह नौ इति** । यदुपनिषद्व्याख्यानादिनिमित्तं यशो देशान्तराच्छिष्यागमनहेतुभूतकीर्तिरूपं यच्च ब्रह्मवर्चसं वेदाध्ययनादिनिमित्तं तत्तद्विद्योक्तफलप्राप्तिसूचकं मुखगतं तेजोविशेषरूपं तदुभयं नौ आवयोः गुरुशिष्ययोः तत्तद्देवताप्रसादात्सहैवास्त्वित्यर्थः ।

यद्वा स मित्रादिर्यश उक्तयशस्करो ब्रह्मवर्चस्करश्चास्तु । हेति मित्रादेर्यशस्करत्वादिप्रसिद्धिमाह । अथ शीक्षाध्ययनानन्तरं अतः वक्ष्यमाणप्रयोजनसद्भावात् संहितायाः सन्तानशब्दोक्तायाः उपनिषदं रहस्यं व्याख्यास्यामः । पञ्चस्वधिकरणेषु प्रकरणेषु । प्रकरणनामान्याह- **अधिलोकमिति** । लोकं पृथिव्यादिकमधिकृत्य वर्तमानमधिलोकं ज्योतिषां समूहो ज्यौतिषं तदधिकृत्य वर्तमानमधिज्यौतिषं आत्मानं शरीरमधिकृत्य वर्तमानमध्यात्ममिति पञ्चाधिकरणानीत्यर्थः । तत्रादरातिशयजननार्थमाह- **ता इति** । ताः पञ्चाधिकरणरूपाः संहिता महार्थप्रतिपादकत्वात् महाफलवत्वाच्च महासंहिता इत्याचक्षते विद्वांसः ।

अथेदानीमधिलोकप्रकरणमारभ्यते । अत्र पृथिवी लोकः संहितायाः पूर्वरूपं पूर्ववर्णः पूर्ववर्णादौ पृथिव्यादिदृष्टिः कार्या इति यावदिति व्याख्यानमसत् । अन्यथोपासनस्यानर्थहेतुत्वात् अभिमान्यैकविवक्षायामपि ब्रह्मविद्यात्वानुपत्तिः इत्यतोऽधिकरणपञ्चकं ब्रह्मपरतया स्मृत्यैव व्याचष्टे- **नारायणादिरूपाणीति** । नारायणाद्यनिरुद्धान्तानि नारायणवासुदेवसङ्कर्षण-प्रद्युम्नानिरुद्धाख्यानि पञ्चरूपाणि प्रत्येकं चतुरात्मना वासुदेवादिस्वरूपाणि । पञ्चसु लोकादिषु लोकादिप्रकरणोक्तपृथिव्यादिचतुष्केषु ध्येयानीत्यर्थः ।

तत्रायं विवेकः । नारायणो वासुदेवादिचतुरात्मा पृथिव्यादिषु ध्येयः । तत्रापि नारायणवासुदेवः पृथिव्यां, नारायणसङ्कर्षणो दिवि, नारायणप्रद्युम्नः आकाशे, नारायणानिरुद्धो वायौ ध्येयः । एवञ्च वासुदेववासुदेवो अग्नौ, वासुदेवप्रद्युम्नः आदित्ये इत्यादि । नारायणादेर्वासुदेवादित्वं च वासुदेवादि-रूपेणाभिव्यक्ततया कृष्णकेशस्य कृष्णत्ववद्बोध्यम् । तानि चतुरात्मकानि नारायणादिरूपाणि कृत्स्नशः संहिताया सम्बद्धवर्णरूपायाः पूर्वोत्तरवर्णयोः सन्धौ सन्धाने च ध्येयानि । पृथिवीस्थनारायणवासुदेवः पूर्ववर्णे, द्युस्थनारायणसङ्कर्षणः उत्तरवर्णे, आकाशगतनारायणप्रद्युम्नः पूर्वोत्तरवर्ण-सम्बन्धरूपसन्धौ, वायुस्थनारायणानिरुद्धः सन्धिकारणप्रयत्नरूपसन्धाने ध्येयः । एवमग्निस्थवासुदेववासुदेवः पूर्ववर्णे इत्याद्यूह्यम् । सुवर्गशब्दस्य प्रसिद्धस्वर्गपरत्वेऽल्पफलत्वप्रसङ्गादाह-**'स्वर्गाभिदं वैष्णवं स्थानम्'** इति । सुवर्गशब्दे छान्दसमुकारलोपमभिप्रेत्य स्वर्गेत्युक्तम् ।

**काशी.खं**– ततश्च पृथिवीपूर्वरूपमित्यादेरयमर्थः । पृथुत्वात् पृथिवीस्थत्वाच्च पृथिवीनामको नारयणवासुदेवः संहितायाः पूर्वरूपं पूर्ववर्णस्थो विज्ञेयः । द्युतिरूपत्वात् द्युस्थत्वाच्च द्युनामा नारायणसङ्कर्षण उत्तररूपमुत्तरवर्णस्थः । आ समन्तात् प्रकाशनात् अन्तरिक्षलोकस्थत्वा-च्चाकाशनामा नारायणप्रद्युम्नः सन्धिः सन्धिस्थः । ज्ञानायुष्द्वाभ्यां वायुस्थत्वाच्च वायुनामा नारायणानिरुद्धः सन्धानं सन्धानस्थः इत्यधिलोकमुक्तमित्यर्थः ।

अथाधिलोकानन्तरमधिज्यौतिषं प्रकरणमारभ्यते । अङ्गप्रणेतृत्वात् अग्निस्थत्वाच्चाग्निनामा वासुदेववासुदेवः पूर्वरूपं पूर्ववर्णस्थ इत्यादिपूर्ववत् । आदातृत्वादादित्यस्थत्वाच्चादित्यनामा वासुदेवसङ्कर्षणः, आपालनात् अप्संस्थत्वाच्च आपोनामा वासुदेवप्रद्युम्नः, विद्योतनाद्विद्युत्समूहत्वाच्च वैद्युतनामा वासुदेवानिरुद्धः । अथाधिविद्यम् । आचारप्राप्यत्वादाचार-प्रवर्त्तकत्वाद्वाचार्यस्थत्वाच्चाचार्यनामा संकर्षणवासुदेवः, समीपवासित्वा-

च्छिष्यस्थत्वाच्चान्तेवासिनामा **संकर्षणसंकर्षणः**, ज्ञानरूपत्वाद्विद्यास्थत्वाच्च विद्यानामा संकर्षणप्रद्युम्नः, प्रकृष्टवक्तृत्वात् प्रवचनस्थत्वाच्च प्रवचननामा संकर्षणानिरुद्धः । अथाधिप्रजम् । प्रमातृत्वात्मातृस्थत्वाच्च मातृनामा प्रद्युम्नवासुदेवः, पातृत्वात्पितृस्थत्वात् पितृनामा प्रद्युम्नसंकर्षणः, प्रकर्षेण व्यक्तत्वात्प्रजास्थत्वाच्च प्रजानामा प्रद्युम्नप्रद्युम्नः, प्रकृष्टज्ञानहेतुत्वात्प्रजनन-स्थत्वाच्च प्रजनननामा प्रद्युम्नानिरुद्धः । अथाध्यात्मं अधरयतीत्यधरा हनुर्ज्ञानं स्वेतराधरकारिज्ञानस्वरूपत्वादधरहनुस्थत्वाच्चाधराहनुः अनिरुद्ध-वासुदेवः उत्तमज्ञानस्वरूपत्वादुत्तरहनुस्थत्वाच्चोत्तराहनुः अनिरुद्धसंकर्षणः । वक्तृत्वाद्वागिन्द्रियस्थत्वाच्च वाङ्नामा अनिरुद्धप्रद्युम्नः, जहाति दोषान् वाति गच्छति गुणानिति दोषदूरगुणपूर्णत्वाज्जिह्वास्थत्वाच्च जिह्वानामा अनिरुद्धानिरुद्धः । इतीमा इत्युपसंहारः ।

एतद्वेत्तुः फलमाह- **य इति** । य एवमुक्तप्रकारेण व्याख्याता एता महासंहिताः संहिताश्रितभगवन्मूर्तीरिति यावत् । वेद उपास्ते, स इह इष्टैः प्रजादिभिरन्नपानाद्यैः, अमुत्र **सुवर्गेण** लोकेन सन्धीयते सम्बध्यते । ततश्च सुवरो विष्णुर्यत्र व्यक्तत्वेन गतः तेन सुवर्गेण वैकुण्ठादिलोकेन सन्धीयते मुक्तो भवतीत्यर्थः । तत्र च प्रजया प्रकृष्टत्वेन जातया निजप्रजया पान्ति । शंसाधनभूताश्चेति पशवो वेदास्तैर्ब्रह्मणो विष्णोर्वरेण प्रसादेन चापितं अभिवृद्धं स्वरूपं ब्रह्मवर्चसं तेनान्नाद्येन सर्वभोगेन च सन्धीयते इत्यैतरेयभाष्योक्तदिशा व्याख्येयम् । अत्र स्वरूपस्याभिवृद्धिर्नाम तिरोहितस्याभिव्यक्तिरेवेति ध्येयम् ॥१.३-८॥

**रा.खं-** आदावेवाविघ्नत्वार्थं कृतेऽपि प्रार्थने प्रतिविद्यमविघ्नता प्रार्थनीयेति भावेन अथात इति वक्ष्यमाणविद्याया अविघ्नत्वाय प्रार्थयते- **स हेति** । स प्रागुक्तो मित्रादिर्नौ गुरुशिष्ययोर्यशस्करो ब्रह्मवर्चस्करो भवत्वित्यर्थः । इदानीं सामेति प्रकृतवर्णसन्धिनिष्ठां ब्रह्मविद्यामाह- **अथेति** । वर्णादि-

शिक्षोत्त्यनन्तरम् । अतः फलवत्वात्, संहितायाः पूर्वोत्तरवर्णसन्धिसन्धान-भेदेन चतूरूपायाः संहिताया उपनिषदं रहस्यं प्रतिपाद्यत्वेन वा तन्निष्ठत्वेन वा स्थितं रूपजातं व्याख्यास्याम इत्यर्थः । व्याख्येयसंहितासम्बन्धिरूप-जातस्य स्थानान्याह- **पञ्चस्वधिकरणेष्विति** । स्थितामुपनिषदमिति पूर्वेणान्वयः । तान्याह- **अधिलोकमित्यादिना** । लेकेष्वधि अधिलोकम् । ज्योतिष्वधि अधिज्यौतिषमित्यादि विग्रहो ध्येयः । लोकेषु, ज्योतिस्सु, विद्यास्वित्यादिरर्थः । चतुरात्मकलोकादिवर्गपञ्चके प्रत्येकं चतुरात्मतया स्थितं नारायणाद्यनिरुद्धान्तं रूपपञ्चकं चतुरात्मकसंहिताप्रतिपाद्यत्वेन तत्संस्थत्वेन वा व्याख्यास्याम इति समुदायार्थः । आदरजननाय संहितां स्तौति- **ता इति** । ताः उक्तविधभगवद्रूपप्रतिपादिकाः पूर्वोत्तरवर्णसन्धि-सन्धानभेदेन चतुरात्मिकाः सकलवेदगताः संहिताः महद्ब्रह्मप्रतिपादकतया महासंहिता इत्याचक्षत इत्यर्थः ।।१.३।।

अधिलोकमित्याद्युक्तं विवृणोति- **अथाधिलोकमिति** । लोकेषु स्थितं भगवद्रूपचतुष्टयं चतूरूपसंहिताप्रतिपाद्यं तत्स्थं वा, अथ महासंहितात्वादेव व्याख्यास्याम इत्यनुषङ्गः- **पृथिवीति** । पृथिवीस्थितं पृथिवीनामकं नारायणवासुदेवाख्यं रूपं पूर्वरूपम् । संहितायाः पूर्ववर्णेन रूप्यते प्रतिपाद्यत इति पूर्वरूपम् । द्यौर्द्युलोकस्थं द्युनामकं नारायणसङ्कर्षणाख्यं रूपं संहिताया उत्तररूपम् उत्तरवर्णप्रतिपाद्यम् । आकाशः आकाशस्थं आकाशनामकं नारायणप्रद्युम्नाख्यं सन्धिः सन्निकर्षप्रतिपाद्यम् । वायुः वायुस्थं वायुनामकं नारायणानिरुद्धाख्यं रूपं सन्धानं सन्धिकार्यप्रतिपाद्यं इति प्रतिपाद्यप्रतिपादकाभिप्रायेण पृथिवी पूर्वरूपम् इत्याद्युक्तिः ।

यद्वा पृथिव्यादिषु चतुर्षु स्थितानि पृथिव्यादिनामकानि नारायण-वासुदेवनारायणसङ्कर्षणनारायणप्रद्युम्ननारायणानिरुद्धाख्यानि चत्वारि रूपाणि संहितायाः पूर्वोत्तरार्णसन्धिसन्धानेषु तिष्ठन्तीत्याधाराधेयाभिप्रायेण पृथिवी

पूर्वरूपमित्याद्युच्यत इति ज्ञेयम्- **इत्यधिलोकमिति** । इति एवंप्रकारेण लोकेष्वधिकृत्य स्थितं रूपचतुष्टयं चतूरूपसंहितास्थं व्याख्यातमित्यर्थः । अत्र पृथिव्यादीनां अभिमानिनयन्यायेन देवतापरत्वमुपेत्य पृथिवी-देवतास्थमित्यादिरर्थः इत्याहुः ।।१.४।।

**अथाधिज्यौतिषमिति** । अथेत्यर्थान्तरे, अधिलोकोत्त्यनन्तरमिति वा । चतुरात्मकज्योतिर्गतरूपचतुष्टयं चतुःस्वरूपसंहितासम्बन्धीत्येतद्व्याख्यास्याम इत्यर्थः । अग्निः पूर्ववर्णप्रतिपाद्यमिति वा पूर्ववर्णस्थमिति वा द्वेधा पूर्वरूपत्वं ध्येयम् । एवमुत्तररूपमित्यादावप्यर्थो बोध्यः- **आदित्य इति** । द्युलोकस्थादित्यस्थं आदित्यनामकं वासुदेवसङ्कर्षणात्मकं रूपं संहिताया उत्तररूपम् । आपः अप्सु स्थितं अग्नामकं वासुदेवप्रद्युम्नात्मकं रूपं सन्धिः । संहितायाः सन्निकर्षः । वैद्युतः विद्युत्समूहगतं वैद्युताख्यं वासुदेवानिरुद्धाख्यं सन्धानमित्यर्थः । इत्यधिज्यौतिषमिति । इत्यधिलोकमित्यत्रेव व्याख्या ।।१.५।।

**अथाधिविद्यमिति** । पूर्ववद्व्याख्येयम् । आचार्यः आचार्यस्थं आचार्यनामकं सङ्कर्षणवासुदेवात्मकं रूपं संहितायाः पूर्वरूपं पूर्ववर्णस्थं पूर्ववर्णप्रतिपाद्यमिति वा । अन्तेवासी अन्तेवासिस्थं अन्तेवासिनामकं सङ्कर्षणसङ्कर्षणात्मकं रूपं संहिताया उत्तररूपम् । विद्या गुरुशिष्यसङ्कर्षजं ज्ञानं विद्या । विद्यास्थं विद्यानामकं सङ्कर्षणप्रद्युम्नाख्यं रूपं सन्धिः सन्निकर्षः । प्रवचनं प्रवचनस्थं प्रवचननामकं सङ्कर्षणानिरुद्धाख्यं रूपं सन्धानं सन्धिकार्यम । इत्यधिविद्यम् । व्याख्यानं प्राग्वत् ।।१.६।।

अथाधिप्रजमित्यपि प्राग्वत् । माता मातृस्थं मातृनामकं प्रद्युम्न-वासुदेवात्मकं रूपं संहितायाः पूर्वरूपम् । पिता पितृस्थं पितृनामकं प्रद्युम्नसङ्कर्षणात्मकं रूपं संहितोत्तररूपम् । प्रजा प्रजास्थं प्रजानामकं

प्रद्युम्नप्रद्युम्नात्मकं रूपं सन्धिः । प्रजननं प्रजननस्थं प्रजनननामकं प्रद्युम्नानिरुद्धात्मकं रूपं सन्धानम् । इत्यधिप्रजम् इत्युक्तार्थः ।।१.७।।

अथाध्यात्ममिति प्राग्वत् । आत्मनि देहे अधीति विग्रहः । अधरा हनुः तत्स्थं तन्नामकं अनिरुद्धवासुदेवात्मकं रूपं पूर्वरूपम् । उत्तरा हनुः तत्स्थं तन्नामकं अनिरुद्धसङ्कर्षणात्मकं रूपं उत्तररूपम् । वाक् वागिन्द्रियस्थं वाङ्नामकं अनिरुद्धप्रद्युम्नात्मकं रूपं सन्धिः । जिह्वा जिह्वास्थं जिह्वानामकं अनिरुद्धात्मकं रूपं सन्धानं सन्धिकार्यम् । इत्यध्यात्ममिति प्राग्वत् । संहिताः स्तौति- **इतीमा इति** । विष्णुरूपमहार्थकत्वान्महासंहिता इति । न केवलं महार्थत्वान्महत्वं संहितानाम् । किन्तु महाफलवत्त्वाच्च महत्त्वमिति भावेन अथात इत्यत्र अतः शब्देन सूचितं फलमाह- **य एवमिति** । यः कश्चित् सात्विकोऽधिकारी एवं नारायणादीन्यनिरुद्धान्तानि प्रत्येकं वासुदेवादिचतुरात्मतया पृथिव्यादिवर्गपञ्चकगतानि चतूरूपसंहिता-स्थानीति व्याख्याता महासंहिता महासंहितारूपाणि वेद उपास्ते साक्षात्करोति च स इति शेषः। प्रजयेत्यादिना स्वयोग्यसर्वभोग उपलक्ष्यते । सुवर्गलोकपदेन श्वेतद्वीपादिविष्णुस्थानग्रहः । विष्णुलोकेन प्रजाद्युपलक्षित-स्वयोग्यसर्वभोगेन च सन्धीयते संयुक्तो भवतीत्यर्थः । ब्रह्महस्तिभ्यां वर्चसः इत्यच्प्रत्ययविधानात् ब्रह्मवर्चसेनेति साधुः । अन्नाद्येन अन्नादिनेत्यर्थः ।।१.८।।

## उपनिषत्

**यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात् सम्बभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय**

।।१.९।।

आवहन्ती वितन्वाना । कुर्वाणा चीरमात्मनः । वासांसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमावह । लोमशां पशुभिः सह स्वाहा ।।१.१०।।

आ मा यन्तु ब्रह्मचारिणः स्वाहा । वि मा यन्तु ब्रह्मचारिणः स्वाहा । प्रमा यन्तु ब्रह्मचारिणः स्वाहा । दमा यन्तु ब्रह्मचारिणः स्वाहा । शमा यन्तु ब्रह्मचारिणः स्वाहा । यशो जनेऽसानि स्वाहा । श्रेयान् वस्यसोऽसानि स्वाहा । तं त्वा भग प्रविशानि स्वाहा । स मा भग प्र विश स्वाहा । तस्मिन् सहस्रशाखे । नि भगाहं त्वयि मृजे स्वाहा ।।१.११।।

यथाऽपः प्रवता यन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धातरा यन्तु सर्वतः स्वाहा । प्रतिवेशोऽसि प्र मा भाहि प्र मा पद्यस्व ।।१.१२।।

भाष्यम्

यो विश्वरूपो भगवांश्छन्दसामधिपो हरिः ।<br>
छन्दोभ्योऽमृतरूपेभ्यस्सुव्यक्तस्तदुपासनात् ।।<br>
मेधावी तत्त्वविज्ञानी भूत्वा क्षिप्रं विमुच्यते । इति च ।<br>
वेदावासत्वतो विष्णुर्ब्रह्मकोश इति स्मृतः ।<br>
भगष्षड्गुणपूर्णत्वाद् बहुरूपत्वतो विभुः ।।<br>
सहस्रशाख इत्युक्तस्तमुपास्य जनार्दनम् ।<br>
मुच्यते नात्र सन्देहस्सर्वभोगैश्च पूज्यते ।। इति प्रक्लृप्ते ।<br>
आवहन्ती चिरं सर्वभोगान् या श्रीस्सनातनी ।<br>
तां मय्यावह गोविन्द सुशिखण्डोपशोभिताम् ।। इति च

।।१.९-१२।।

**व्यास**- विद्यार्थिनो मेधया भाव्यं तदर्थं काञ्चन विद्यामाह- **य इति** । अमृतात् अमृतेभ्यो नित्येभ्यो अधिसम्बभूव । इन्द्रः परमैश्वर्यवान् स्पृणोतु बलयतु । अमृतस्य वेदस्य धारणो भूयासं धारको भूयासं विचर्षणं विशिष्टप्रजावत् । प्रजावाचकचर्षणशब्दो ज्ञानशिष्यान्यतरप्रजावाचकः । तद्व्याचष्टे- **य इति** । अमृतस्य धारणो भूयासमित्यस्याभिप्रायमाह- **तत्त्वविज्ञानीति** । मम वेदाभावे तद्विषयमेधाभावे वा कथं मत्तः तत्प्रार्थनं तत्राह- **ब्रह्मणः कोशोऽसि मेधयाऽपिहित इति** । तद्व्याचष्टे- **वेदेति** । अभ्यस्ता च विद्या शिष्येभ्यो दत्तैवाधिकफलप्रदा भवति । शिष्याभावे च तदभावोऽतः शिष्यसम्पत्त्यर्थं काञ्चन विद्यामाह- **आमेति** । मां प्रति ब्रह्मचारिणः आयान्तु । विविधाः प्रकृष्टाः दमा इन्द्रियनिग्रहयुक्ताः शमाः विष्णुनिष्ठायुक्ताः, शिष्यागमनार्थं यशो यशस्वी, वस्यसः सुखविषये । तन्त्वाभगप्रविशानीति ब्रह्मणि प्रवेश उक्तः तस्य प्रयोजनमाह- **तस्मिन्निति** । भग तस्मिन्सहस्रशाखे त्वयि प्रविष्टोऽहं पापं निमृजे प्रक्षालये । तत्र भगसहस्रशाखाशब्दार्थावप्रतीतेराह- **भग इति** । मेधाविनोऽप्यन्नाद्यभावे मनःक्षोभेण विद्या सम्यङ् न सिध्यति । तदर्थं काञ्चन विद्यामाह- **आवहन्तीति** । तां ब्रह्मविद्यां स्फोरयन्व्याचष्टे- **आवहन्तीति** । योजना तु आत्मनो जीवजातस्य चीरं चिरं सर्वभोगानावहन्ती वितन्वाना सनातनी मम वासांसि गावश्चान्नपाने च कुर्वाणा यतः अतः हे गोविन्द लोमशां सुशिखण्डोपशोभितां तां श्रियं मय्यावह शिष्याश्चाप्रयत्नेनायान्त्विति सदृष्टान्तमाह- **यथाप इति** । प्रवता निम्नदेशम् । अहर्जरं संवत्सरम् । मासा यथा प्रतिष्ठन्ते । प्रतिवेशः प्रवेष्टुं योग्यः ॥१.९-१२॥

**वादि**- छन्दोभ्योऽध्यमृतात्सम्बभूव इत्यत्रामृतात् अमृतेभ्यो नित्येभ्यो वेदेभ्योऽधि अधिकतया सर्वोत्तमत्वेन सम्बभूव सम्यगाविर्बभूव ।

अमृतादित्येकवचनं छन्दसां भगवद्विषये एकवाक्यताद्योतनार्थम् । अत एव विश्वरूप इत्युक्तम् । विश्वस्मिन् इन्द्रादौ रूपमन्तर्यामिरूपं यस्येति विग्रहः । तथा चेन्द्रादिसूक्तान्यपि 'गुहाशयायैव न देहमानिने' इति स्मृतेरिन्द्राद्यन्तर्यामिविषयाणीत्येकवाक्यतेति भावः । स इन्द्रो मेधया धारणया बुद्ध्या मा मां स्पृणोतु सम्बध्नातु । 'स्पृ स्पर्शने' इति धातोः विकरणव्यत्ययात् वृणोत्विवितिवत् स्पृणोत्विविति रूपं भवतीति ज्ञेयम् । मेधाऽपि छन्दोविषयैव भवेदिति सूचनाय छान्दसप्रयोगः ।

अत एवाऽह श्रुतिः अमृतस्य धारणो धारको भूयासमिति । मे शरीरं विचर्षणं वि विशेषेण 'चर गतिभक्षणयोः' इति धातोर्गत्यर्थानां च ज्ञानार्थत्वात् चर्षणं ज्ञानानुकूलं भवतु । मेधावित्वेऽपि व्याध्यादिना शरीरदौर्बल्ये ज्ञानायोगादिदं प्रार्थनम् । मे जिह्वा मधुमत्तमा अतिशयेन मधुवचनवती भूयात् । गुर्वादिषु प्रियवचनाभावे ज्ञानायोगादिदं प्रार्थनम् । मयि छन्दसामभावे मां प्रति त्वया कथं छन्दोविषयकमेधाप्रार्थनं क्रियत इत्यत उक्तं- **ब्रह्मणः कोशोऽसीति** । 'बृह जातिजीवकमलासनशब्दराशिषु' इति धातोः ब्रह्मणः वैदिकशब्दराशेः कोशोऽसि मेधया अपिहितः निगूहितोऽसि । व्याख्यानकाले मेधामाविर्भावयसि । अन्यदा निगूह्य कोशान्तस्थितधनवन्न प्रकाशयसीति भावः । 'क्षुधितानां दुर्भगानां कुतो योगसमाधयः' इति वचनादन्नाभावे चित्तसमाधानायोगादन्नदायिन्या लक्ष्म्याः प्रार्थनप्रकारमाह- **आवहन्तीति** । चीरं चिरतरं मम वासांसि पटानन्नपाने च सर्वदा आवहन्ती 'वह प्रापणे' इति धातोः आ सम्यक् प्रापयन्ती, 'तनु विस्तारे' इति धातोर्वितन्वाना विशेषेण विस्तारयन्ती या महालक्ष्मीर्यतः एतादृशी ततः कारणात् लोमशां सुशिखण्डोपशोभितां तां श्रियं मे मयि आवह आधेहि । पशुभिरित्युपलक्षणम् । वासोभिरन्नपानादिभिश्च सहेत्यपि द्रष्टव्यम् । अनेनापि मन्त्रेणाऽहुतिर्देयेति भावेन स्वाहेत्युक्तम् ।

ब्रह्मचार्यभावे व्याख्यानासम्भवात्तत्प्रार्थनप्रकारमाह- **आ मा यन्त्विति** । ब्रह्मचारिणो मा मां प्रति आ समन्तात् आयन्तु आगच्छन्तु । 'इण् गतौ' इति धातोर्लोटि प्रथमपुरुषबहुवचनमिदम् । वि मा यन्तु वि विशिष्टतया कुलगोत्रादिभिरन्योन्यं विशिष्टतया च आयन्तु ।

**विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिष्टेऽहमस्मि ।**
**अनार्यकायानृजवे शठाय न मां ब्रूया ऋजवे ब्रूहि नित्यम् ।।**

इति श्रुतेरकुलीनेषु वेदोपदेशस्यानुचितत्त्वादेतत्प्रार्थनम् । 'शमो मन्निष्ठता बुद्धेः' इति वचनाच्छमः विष्णुविषयकनिष्ठा । विष्णुविषयक-निष्ठाभावे तं प्रति वेदोपदेशायोगादिदं प्रार्थनम् । 'नाभक्ताय कदाचन' इति गीतोक्तेः । 'दम इन्द्रियनिग्रहः' इति वचनात् दमा इन्द्रियनिग्रहवन्तः । 'इदं ते नातपस्काय' इति गीतायामेवोक्तत्वादिदं प्रार्थनम् । जने जनसमुदाये यशः कीर्तनात् यशो भवानि यशसि स्थितो भवानि ।'अस भुवि' इति धातोर्लोट्युत्तमपुरुषैकवचनमिदम् । वस्यसः वस्तुं योग्यं वस्यः सुखं तस्य वस्यसः । सुखविषये इत्यर्थः । श्रेयान् श्रेष्ठ असानि अतिशयितसुखवानसीति भावः । स्वस्य सुखाभावेऽप्युपदेशायोगादेत-त्प्रार्थनम् । भग षड्गुणपूर्ण तं त्वा भगवन्तं त्वामहं प्रविशानि शिष्येषु प्रवचनेन मुक्तो भवानीति भावः । त्वय्येवाऽविष्टचित्तो भवानीति वा । हे भग स त्वं मा मां प्रविश मयि सन्निहितो भव । 'न ऋते त्वत्क्रियते' इति श्रुतेः । निभग नितरां भाग्ययुक्त नारायण सहस्रशाखे सहस्रावतारे तस्मिन् त्वयि मृजे 'मृजु शुद्धौ' इति धातोर्दोषाणां प्रक्षालनवानसीत्यर्थः । एतैर्मन्त्रैः प्रत्येकमग्निमुखे आहुतिर्देयेति भावेन सर्वत्र स्वाहेत्युक्तम् ।

शिष्या अप्यप्रयत्नेनायन्त्विति भावेनाऽह- **यथाऽप इति** । पर्वतोन्नतदेशेनाऽपः यथाऽयन्ति, मासाः अहानि जरयतीति अहर्जरः संवत्सरः तं यथाऽयन्ति, एकैकस्मिन् वत्सरे द्वादश द्वादश मासा

अनायासेन गच्छन्ति, एवं हे धात ब्रह्मचारिणो मां सर्वतः अष्टदिग्भ्योऽप्यायन्तु । प्रतिवेशः प्रति मां प्रति वेशः विशत इति व्युत्पत्त्या वेशः प्रतिवेशयोग्योऽसि '। मम योग्यजीवत्वात् तव दयालुत्वाच्च मां प्रविश्य नय नियमय नियन्तुं योग्ये मयि सतीति भावः । 'योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां सञ्जीवयति' इति स्मृतेः । प्र मा भाहि प्र प्रकर्षेण मा मां भाहि । 'भा दीप्तौ' इति धातोर्भासय । ब्रह्मवर्चसवन्तं कुर्विति भावः । 'उद्दीप्यस्व जातवेद' इति श्रुतेः । प्र मा पद्यस्व प्र प्रकर्षेण मा मां पद्यस्व आप्तो भव । इतरेभ्योऽधिकसन्निधानं कुर्वित्यर्थः ।।१.९-१२।।

**श्री.भा**- विद्याभ्यासिनः प्रज्ञापरपर्यायमेधादिना भाव्यम् । अतस्तत्प्राप्त्यर्थं विद्याः निरूप्यन्ते- **यच्छन्दसामृषभ इत्यादिना** । अत्र प्रसिद्धेन्द्रस्यैव छन्दसामृषभत्वादिविशेषणमुच्यत इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे- **यो विश्वरूप इति** । विश्वं समस्तं पूर्णं चेति वचनाद्विश्वरूपः पूर्णरूपः । छन्दसामृषभ इत्यस्यार्थः छन्दसामधिप इति । इदं रातीति व्युत्पत्त्या भक्ताभिलषितदातृत्वार्थकेन्द्रशब्दार्थो हरिरिति । भक्ताभिलषित-माहरतीति हरिरित्यर्थः । अयं च श्रीवेदव्यास एव । तस्यैव विद्याधीश-वेदपतिशब्दवाच्यतायाः 'विद्याधीशः स्वयं प्रभुः' इति वेदपतिर्जगौ' इति भगवत्पादैरुक्तत्वात् । अत्रापि छन्दसामृषभ इत्युक्तत्वात् । तथा 'वयः सुपर्णा उपसेदुरिन्द्रं प्रियम्' इति श्रुतिगतेन्द्रशब्दस्य 'सुपर्णा ऋषयो व्यासं नाथमाना ययुः सुराः' इति एकादशस्कन्धतात्पर्ये भगवत्पादैर्वेदव्यास-परत्वेन व्याख्यातत्वेनात्रापि इन्द्रशब्दस्य तत्परत्वमेवावगन्तव्यमिति सम्प्रदायविदः । अमृतादित्येकवचनं बहुवचनार्थे । तेन छन्दोभ्य इत्येतद्विशेषणत्वमेतस्योपपन्नमित्यभिप्रेत्योक्तम्- **अमृतरूपेभ्य इति** । अपौरुषेयत्वेन नित्येभ्यो 'वयः सुपर्णा अतीदुशक्रओहतइत्यादिभ्य'इत्यर्थः ।

यद्वा जरामरणादिविध्वंसनहेतुतया प्रसिद्धामृतसरूपेभ्य इत्यर्थः । अधिसम्बभूवेत्यस्यार्थः- **सुव्यक्त इति** । स्पष्टं प्रतिपाद्यतया ज्ञात इत्यर्थः । मेधया स्पृणोत्विति प्रार्थनायास्तात्पर्यमाह-**तदुपासनान्मेधावी भूत्वेति** । तथाच स इन्द्रो मयोपासितः सन्मोक्षार्थकवेदविद्याभ्यासहेतुभूतया मेधया स्पृणोत्वित्यर्थ उक्तो भवति । 'अमृतस्य देवधारणो भूयासम्' इत्यस्य तात्पर्यं तत्त्वविज्ञानी भूत्वेति । केवलं स्वाध्यायाध्ययनरूपवेदधारणायाः स्थाणुरयं केवलं भारवाहो योऽधीत्य वेदाननधीयतेऽर्थान् 'शब्दब्रह्मणि निष्णातो न निष्ठीयात्परे यदि । श्रमस्तस्य श्रमफलो ह्यधेनुमिव रक्षतः'। 'वित्तं त्वत्तीर्य कृतमङ्गवाचं हीना मया रक्षति दुःखदुःखी' इत्यादि श्रुतिस्मृतिभ्यामनर्थहेतुत्वावगमेनार्थज्ञानपर्यन्तत्वादेवमुक्तमिति ज्ञातव्यम् । यथोक्तं 'तस्मादेवं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेन्मुमुक्षुः' इति । तथाचामृतस्य वेदस्य धारणो धारको भूयासं मोक्षार्थं वेदविद्याश्रवण-जनितज्ञानवान् भूयासमिति यावदित्यर्थ उक्तो भवति । ब्रह्मणः कोशोऽसीति वाक्यं हे इन्द्र त्वं ब्रह्मणश्चिन्मात्रस्य कोशोऽसि निधानमसि आधारोऽसीति यावत् । विशिष्टे विशेषणांशसद्भावादिति परेण व्याख्यातं तदप्रामाणिकमिति भावेन स्वयं ब्रह्मकोशशब्दार्थमाह- **वेदावासत्वत इति** । 'बृह जातिजीवकमलासनशब्दराशिषु' इति धातोः बृहतेर्मन्प्रत्यये अमागमे यणादेशे च सति निष्पन्नो ब्रह्मशब्दो वेदवाची कोशशब्दश्च वासार्थक इति भावः । तन्त्वाभगेत्यादौ भगशब्देन तन्नामा आदित्यः प्रार्थ्यते इत्येतदपव्याख्यानमिति भावेन भगशब्दार्थमाह- **भगष्षड्गुणपूर्णत्वादिति** । 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणा' इति वचनात् भगशब्देन षड्गुणा उच्यन्ते । तैः पूर्णत्वादित्यनेन अर्श आद्यजन्ततया भगशब्दो भगवद्वाचक इत्युक्तं भवति । अर्शआद्यजन्तत्वमनङ्गीकृत्य ऐश्वर्यादिवाचिभगशब्देनैव विशेषणात् 'तन्त्वाभग'

इत्यादाविति **गीताभाष्योक्तं** तु व्याख्यानान्तरमित्यविरोधः । हे भग तन्नामकादित्य **सहस्रशाखे यथेष्टकिरणे** त्वयीत्येतदपव्याख्यानमित्य-भिप्रेत्याह- **बहुरूपत्वत इति** । सहस्रशाखे त्वयि मनसा प्रविष्ट इति शेष इत्यभिप्रेत्य तत्तात्पर्यमाह- **तमुपास्येति** । निमृज इत्यत्र पापमिति शेष इत्यभिप्रेत्य तस्य तात्पर्यमुक्तम्- **मुच्यत इति** ।

अनेन प्रतिवेशोऽसीत्यस्यापि तात्पर्यमुक्तं ज्ञातव्यम् । सर्वभोगैश्चेत्यनेन प्रमाभाहीत्यस्य मेधादिसम्पन्नस्याप्यन्नवस्त्राद्यभावे मनःक्षोभेण विद्या न सम्यक् प्रतिष्ठिता भवतीत्यतस्तदर्थं काचन विद्या निरूप्यते- **आवहन्ती वितन्वानेति** । अत्र स्वाहेति सम्बोध्य श्रियमावहेति कं प्रति प्रार्थ्यत इति न प्रतीयत इत्यतस्तं दर्शयन् तां विद्यां प्रमाणेन व्याचष्टे- **आवहन्तीति** । दात्रीत्यर्थः । धातूनामनेकार्थत्वात् । यद्वा 'वह प्रापण' इति धातोः सम्यक् प्रापयन्तीत्यर्थः । चीरमित्यस्यार्थश्चिरमिति । बहुकालमित्यर्थः । वासांसीत्यादे-स्तात्पर्यं- **सर्वभोगानिति** । वितन्वानेत्यस्यार्थः सनातनीति । तनुविस्तारे विस्तारश्च कालत इत्यभिप्रेत्येत्थं व्याख्यातम् । ततो मे श्रियमावह इत्यत्र मे इति षष्ठी सप्तम्यर्थ इत्यभिप्रेत्य मयीत्युक्तम् । लोमशामित्यस्यार्थः सुशिखण्डोपशोभितामिति । 'शिखण्डा कपर्दा वेणी चतुष्टयोपशोभिताम्' इत्यर्थः । 'चतुष्कपर्दा युवतिः सुपेशा' इति श्रुतेरिति भावः । स्वाहेत्यस्य विशेष्यकथनं गोविन्देति । अनेन स्वाहेत्यनन्तरं गोविन्देति शेष इत्युक्तं भवति । वेदवेद्य श्रीवेदव्यासेत्यर्थः ।।१.९-१२।।

**श्री.खं**-ततश्च यश्छन्दसामृषभ इत्यादेरयमक्षरार्थः । वेदविद्याभ्यासिनः प्रतिभा प्रज्ञापरपर्यायमेधादिना भाव्यम् । अतस्तत्प्राप्त्यर्थं विद्याः निरूप्यन्ते- **यश्छन्दसामृषभ इत्यादिना** । तत्रादौ मेधां प्रार्थयते- **यश्छन्दसामिति** । यः छन्दसां वेदानां ऋषभोऽधिपतिर्विश्वरूपः पूर्णरूपः यश्चामृतात् एकवचनं बहुवचनार्थे । अमृतेभ्योऽपौरुषेयत्वेन नित्येभ्यो

जरामरणादिविध्वंसनहेतुतया प्रसिद्धामृतसमानेभ्यो वा छन्दोभ्यो 'वयः सुपर्णा' इत्यादिवेदवाक्येभ्योऽधिसम्बभूव सुव्यक्ततया प्रतिपाद्यः तदुक्तप्रकारेणोपास्त्या प्रकटो बभूवेति वा । स इन्द्रो भक्ताभिलषितदाता वेदव्यासरूपो हरिर्मयोपासितः सन् मा मां मेधया मोक्षार्थकवेदविद्याभ्यास-हेतुभूतया प्रज्ञया स्पृणोतु बलयतु । प्रज्ञाबलयुक्तं करोतु । हे देव वेदव्यास एवं मेधासम्पत्त्यनन्तरं अहं त्वत्प्रसादादमृतस्य वेदस्य धारणो धारको भूयासं मोक्षार्थं वेदविद्याश्रवणजनिततत्त्वज्ञानवान् भूयासमिति यावदित्यर्थः।

पुनः प्रार्थनीयान्तरमाह- **शरीरमिति** । हे देव मे शरीरं विचर्षणं प्रजाश्चर्षणयस्स्मृता इति वचनात् बहुशिष्याख्यप्रजोपेतं तत्सेव्यमिति यावत् । भवतु । सर्वेन्द्रियाणां भगवत्परत्वं प्रार्थयते- **जिह्वा मे इत्यादिना** । हे देव मे मम जिह्वा मधुमत्तमा 'मदधिर्मध्विति प्रोक्तो मदः सुखमिहोच्यते' इति छान्दोग्योपनिषद्भाष्योक्तेर्मदो धीयते अस्मिन्निति मधु ब्रह्म । अतिशयेन तद्वती । तत्प्रतिपादिका भवतु । कर्णाभ्यां भूरि पूर्णं ब्रह्म विश्रुवं विशेषेण शृणवानि । इदमुपलक्षणम् । चक्षुषा त्वद्रूपाणि पश्यामीत्यादि द्रष्टव्यम् । मम वेदतद्विषयमेधयोरभावात्तदुद्देशेन मां प्रति त्वदीयं तदुभयप्रार्थनं व्यर्थमित्यत आह- **ब्रह्मणः कोशोऽसीति** । हे देव त्वं ब्रह्मणो वेदस्य कोश आवासो निधिरसि मेधयाऽपिहितः आच्छादितोऽसि पूर्णोऽसीति यावत् । पुनः प्रार्थनीयान्तरमाह- **श्रुतमिति** । हे देव मे मया श्रुतं दिव्यवेदार्थं गोपाय गोपय । अयोग्यप्रत्युपदेशविषये बुद्धिमदत्वा रक्षस्वेत्यर्थः । गुपू रक्षण इति धातोः । यद्वा मदीयं श्रुतमर्थं गोपाय अविस्मृतं कुरु । श्रुतं मे मा प्रहासीः इति शाखान्तरोक्तेरयमर्थः ।। १.९ ।।

मेधादिसम्पन्नस्याप्यन्नवस्त्राद्यभावे सति मनःक्षोभेण विद्या न सम्यक् प्रतिष्ठिता भवत्यतस्तदर्थं काञ्चनविद्यामाह- **आवहन्तीति** । हे स्वाहा

'स्वीयं स्वीकुरुते यस्मात्स्वाहेत्युक्तो जनार्दन' इति वचनात् स्वीयमेव हविरादिकं भ्रान्त्या जीवानां स्ववत्प्रतीतं स्वीकुरुत इति स्वाहः स चासावश्चेति स्वाहेति सम्बुद्धिः गोविन्देति शेषः। वेदवेद्य श्रीवेदव्यास या वितन्वाना सनातनी आत्मनो जीवजातस्य चीरं चिरं बहुकालं अन्नवस्त्रादिरूपसर्वभोगान् आवहन्ती दात्री ।

यद्वा आत्मनो जीवसमूहानन्नादिसर्वभोगान् आवहन्ती प्रापयन्ती । अजां ग्राममनयदितिवत् द्विकर्मता च । इदानीमिति शेषः । मम पशुभिः अश्वादिभिः सह वासांसि गावो गाः अन्नपाने च कुर्वाणा वर्तते यत अतः तां लोमशां सुशिखण्डोपशोभितां श्रियं लक्ष्मीं मे मयि सर्वदा आवह स्थापय उत्तरत्रापि निश्चलां कुर्वित्यर्थः ।।१.१०।।

अभ्यस्ता च विद्या शिष्येभ्यो व्याख्यातैव ज्ञानाधिक्यसम्पादकतया सम्पूर्णा भवति नान्यथा । 'आचार्यात्पादमादत्ते पादं शिष्यस्वबुद्धितः । पादं स ब्रह्मचारिभ्यः पादं व्याख्यानकौशलात्' इति वचनात् । अतस्तदर्थं शिष्यसम्पत्तिं प्रार्थयते- **आमायन्त्विति** । हे स्वाहा मा मां प्रति ब्रह्मचारिणः शिष्याः आयन्तु आयान्तु विविधाः विविधगोत्रोत्पन्नाः, प्र प्रकृष्टाः ज्ञानप्रकर्षवन्तः, दमाः इन्द्रियनिग्रहवन्तः, शमाः भगवन्निष्ठबुद्धयः । व्याख्यातृयशः श्रुत्वैव हि दिग्भ्यः शिष्याः स मायान्ति नान्यथा । अतस्तदर्थं यशः प्रार्थयते- **यश इति** । जने व्याख्यातृजनमध्ये शिष्यागमनार्थं यशो यशस्वी असानि भवानि । वस्यस इत्येतत्सकारान्तसुखवाचि। तथाच वस्यस इति पञ्चमी सप्तम्यर्थे । शिष्यागमनजनितसुखनिमित्ताद्वा इतरव्याख्यात्रपेक्षया श्रेयान् श्रेष्ठ असानि । हे भग षड्गुणपूर्ण स्वाहा तं त्वा त्वां मनसा प्रविशानि सदा त्वां उपासीनो भवानि । हे भग स्वाहा स त्वं मा मां प्रविश मदुपास्तिविषयो भव । किं तत इत्यत आह- **तस्मिन्निति** । हे भग स्वाहा सहस्रशाखे बहुरूपे तस्मिंस्त्वयि मनसा

प्रविष्टोऽहं त्वामुपासीन इति यावत् । अपरोक्षज्ञानद्वारा पापमप्रारब्धं निमृजे प्रक्षालये ।। १.११ ।।

शिष्याश्च अयत्नेनैव आयान्त्विति सदृष्टांतं प्रार्थयते- **यथाप इति** । यथा आपः उन्नतप्रदेशे वृष्टाः अनायासेन प्रवताः निम्नभूमीः प्रवता स्यान्निम्नभूमिः इति वचनात् । निम्नप्रदेशानिति यावत् । उद्दिश्य यन्ति गच्छन्ति आयान्तीति यावत् । यथा चाहर्जरं अहानि जीर्णानि गतानीति यावत् । यत्र भवन्ति सोऽहर्जरः संवत्सरः तं प्रति मासाः यथा प्रपतन्ति तदन्तर्गता भवन्तीति यावत् । एवमेव हे स्वाहा धातः सर्वजगद्धारकादेव मां प्रति ब्रह्मचारिणः सर्वतो दिग्भ्यः आयन्तु आयान्तु आगत्य च मदाज्ञायां यन्तु तिष्ठन्तु । मदाज्ञानुवर्तिनो भवन्त्विति यावदित्यर्थः । मोक्षं प्रार्थयते- **प्रतिवेशोऽसीति** । हे धातस्त्वं आदौ मा मां प्रपद्यस्व पदगतौ णिजन्तं प्रकर्षेण गमय त्वत्समीपं प्रापय । पश्चात्त्वं प्रतिवेशो मुक्तौ मया प्रवेष्टुं योग्योऽसि । मम त्वत्प्रवेशं देहीति यावत् । अनन्तरं मा मां प्र प्रकर्षेण भाहि भा दीप्तौ णिच् । दीपय प्रकाशय । आनन्दादिसर्वभोगदानेन मत्स्वरूपाविष्करणं कुर्विति यावदित्यर्थः । प्रपद्यस्व प्राप्नुहि च । 'तस्यैष आत्मा विवृणुते तनूं स्वाम्'इतिश्रुतेः इतिभावः ।।१.१२।।

**वरद-** महासंहिताज्ञानस्य फलमुच्यते 'य एवमेतामहासंहिता व्याख्याता वेद' इत्यादिना तस्यार्थो- **यो वेदैतानीति** । इदानीं मेधादिगुणरहितस्यापि वेदादिपरिज्ञानाभावात् ब्रह्मविद्याप्राप्तिर्न भवतीति मेधादिप्राप्त्यर्थं प्रार्थना मेधादिविधायको मन्त्र उच्यते- **यश्छन्दसामृषभ इत्यादिना** । तं व्याख्याति- **य इति** । यो हरिः अमृतरूपेभ्य छन्दोभ्यः सुव्यक्तो अभवत् । उपासकः पुरुषः तदुपासनात् कारणात् मेधावी भूत्वा क्षिप्रं विमुच्यत इत्यमृतरूपेभ्य इत्यनेनामृतादित्येकवचनं बहुवचनार्थं

इत्युक्तं भवति । ननु स्वयमवेदज्ञस्य मेधादिरहितस्य चान्येभ्यो मेधादिप्रदत्वं कथं घटत इत्यत उक्तम्- **ब्रह्मणः कोशोऽसीत्यादि** । तस्यार्थो- **वेदावासत्वत इति** । 'तन्त्वा भग प्रविशानि' इत्यत्र भगशब्दस्य सूर्योऽर्थ इति प्रतीतिनिरासायाह- **भग इति** । पापादि-मलकलुषितानां कथं हरौ प्रवेशः स्यादित्यतः उक्तम्- **तस्मिन्सहस्रशाख इति** । तस्यार्थो- **बहुरूपत्वत इति** । नच निःश्रीकस्य वेदविद्याप्राप्तिरिति सश्रीकत्वसिध्यर्थं प्रार्थनामन्त्रः- **आवहन्तीति** । तं व्याख्याति- **आवहन्तीति** । चीरमित्यस्यार्थः- **चिरमिति** । वितन्वानेत्यस्यार्थः- **सनातनीति** । कालतस्तते: नित्यत्वरूपत्वात् । इदानीं सर्वासामिति वेदविद्यानां भूरादिव्याहृतिमूलत्वात् ॥१.९.१२॥

**काशी**- अथ मोक्षसाधनब्रह्मज्ञानोपयुक्तमेधादिप्राप्तये विद्याऽरभ्यते- **यश्छन्दसामिति** । अत्रोङ्कार एव प्रतिपाद्य इति परोक्तमयुक्तम् । ज्ञापकाभावात्। छन्दःसारत्वादिलिङ्गमस्तीति चेन्न इन्द्रश्रुतिविरोधात् । लिङ्गात् श्रुतिरौपचारिकीति चेन्न । वैपरीत्यस्यैवोचितत्वात् विश्वरूपत्वादि-लिङ्गस्याप्यौपचारिकत्वापत्तेश्च । जडस्योङ्कारस्य प्रार्थनानुपपत्तेश्च । अतः परमेश्वर एवात्र प्रतिपाद्यः । सर्वस्यापि मुख्यार्थलाभात् स्मृतिसमाख्यानाच्चेति भावेन स्मृतिमाह- **यो विश्वरूप इति** । विश्वरूपः पूर्णरूपः भगवानिति । इन्द्रशब्दव्याख्यानं समग्रैश्वर्यवानित्यर्थः । ऋषभ इत्यस्याधिप इति व्याख्या अनेन व्यासरूपो हरिरत्र विवक्षित इति सूच्यते तस्यैव वेदपतित्वादिना अनुव्याख्यानादौ प्रसिद्धत्वादिति साम्प्रदायिकाः ।

अमृतादित्यस्यामृतरूपेभ्य इति व्याख्या अपौरुषेयतया नित्येभ्य इत्यर्थः । अधिसम्बभूवेत्यस्यार्थः सुव्यक्त इति । मेधयेत्यादेस्तात्पर्यार्थकथनं मेधावी इत्यादि । अमृतस्य वेदस्य धारणो धारको वेदार्थतत्त्वज्ञानवानिति यावदिति भावेन तत्त्वविज्ञानीति तदर्थ उक्तः । मेधादिकं मुक्त्यर्थमेव

प्रार्थ्यते इति ज्ञापनाय क्षिप्रं विमुच्यत इत्युक्तम् । ब्रह्मणः कोशोऽसीत्यत्र ब्रह्मशब्दस्य परब्रह्मपरत्वप्रतीतिवारणाय व्याचष्टे- **वेदेति** । ब्रह्मशब्दस्य वेदवाचित्वादिति भावः ।।१.९-१२।।

**काशी.खं-** ततश्चायमर्थः यश्छन्दसां वेदानां ऋषभोऽधिपतिः विश्वरूपः पूर्णरूपः अमृतादमृतेभ्यश्छन्दोभ्योऽधिसम्बभूव व्यक्तोऽभूत् । स इन्द्रः परमेश्वरो वेदव्यासः मा मां मेधया प्रज्ञया स्पृणोतु बलयतु प्रज्ञाबलयुक्तं करोत्विति यावत् । ततश्च हे देव त्वत्प्रसादादमृतस्य वेदस्य धारको वेदार्थतत्त्वज्ञानी भूयासं भवेयम् । ततश्च मम शरीरं विचर्षणं विशेषेण शिष्यप्रजोपेतं भूयात् । 'प्रजाश्चर्षणयः स्मृता' इत्युक्तेः । शिष्येषु च मे जिह्वा मधुमत्तमा 'मदधिर्मध्विति प्रोक्तो मदः सुखमिहोच्यत' इत्युक्तेर्मदो धीयतेऽस्मिन्निति मधु ब्रह्म तद्वत्तमा अतिशयेन तत्प्रतिपादिका भूयात् । कर्णाभ्यां भूरि भगवन्माहात्म्यं महद्भ्यो विश्रुवं श्रुणुयामित्यर्थः । ईश्वरस्य मेधाद्यभावे तं प्रति तत्प्रार्थनमयुक्तमित्याशङ्कां निरस्यति- **ब्रह्मण इति** । ब्रह्मणो वेदराशेः कोशः कोशवदावासोऽसि मेधयाऽपिहितः । आच्छादितः परिपूर्णश्चासि अतो युक्तं तत्प्रार्थनामिति भावः । अयोग्योपदेशस्यानर्थ-हेतुत्वात्तन्निवृत्तिं प्रार्थयते- **श्रुतमिति** । श्रुतं तत्त्वं अयोग्यजनोपदेशाद्गोपाय रक्षेत्यर्थः । यद्वा श्रुतस्याप्यर्थस्य विस्मरणे मननाद्यसम्भवात्तदविस्मरणं। प्रार्थ्यते श्रुतं मे गोपाय अविस्मृतं कुर्विति । अथ मेधादिमतोऽप्यन्नाद्यलाभे चित्तक्षोभसम्भवात् शिष्यसम्पत्यसम्भवाच्च प्रवचनानुपपत्तौ विद्यास्थैर्यं न स्यादतः सम्पत्कामस्य तत्प्राप्तये विद्यारभ्यते- **आवहन्तीति** । तन्त्वाभगेत्यादौ हे भग भगवन् पूज्य तं पूर्वोक्तं त्वां प्रविशानि स त्वं मां प्रविश इत्यन्योन्यमैक्यापत्तिरोंकारं प्रति प्रार्थ्यते इति व्याख्यानमसत् । प्रवेशस्यैकरूपत्वादर्शनात् स्मृत्यैवान्यथा व्याख्याततत्वाच्चेति भावेन स्मृतिमाह- **भग इति** । 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।

ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' इति वचनात् भगशब्दस्य षड्गुणार्थत्वेप्यर्श आद्यच् प्रत्ययान्तत्वमभिप्रेत्य षड्गुणपूर्णत्वादित्युक्तम् । यद्यप्येवमैश्वर्यवाचि भगशब्देन सम्बोधनाच्चेति गीताभाष्ये गुणरूपार्थत्वमुक्तं तथापि तद्व्याख्यानान्तरमित्यविरोधः ।

यद्वा षड्गुणपूर्णेति विशेषणोत्तरकर्मधारयात्त्वप्रत्ययो द्रष्टव्यः । बहुरूपत्वत इति अनन्तरूपत्वादित्यर्थः । समाभग प्रविशेत्यस्यार्थस्त-मुपास्येति उपासनाविषयत्वमेवात्र प्रवेश इति भावः । तन्त्वाभग प्रविशानीत्यस्यार्थो- **मुच्यत इति** । प्रमा भाहीत्यादेस्तात्पर्यकथनं-**सर्वभोगैर्युज्यत इति** । अनेन भगाख्यादित्यपरोऽयं मन्त्र इत्यप्यपास्तम् । आवहन्तीत्यादेरन्वयाप्रतीतेः समाख्या स्मृत्यैव व्याख्याति आवहन्तीति प्रति पापयन्तीत्यर्थः । चीरमित्यस्यार्थश्चिरमिति वासांसीत्यादेस्तात्पर्यार्थः सर्वभोगानिति । सर्वदेत्यनेन लब्धोऽर्थः सनातनीति । तत इत्यस्यार्थस्तामिति सार्वविभक्तिकस्तसिरिति भावः । मे इत्यस्यार्थो मयीति । स्वाहशब्दोत्तरवृत्यकारस्यार्थो गोविन्देति लोमशामित्यस्यार्थः सुशिखण्डेति शोभनैः शिखण्डैर्वेणीबन्धैरूपशोभितामित्यर्थः । चतुष्कपर्दा इत्यादिश्रुतेरिति भावः । अनेन लोमशामित्यस्याजाव्यादियुक्तामित्य-पव्याख्यानमिति सूचितं एशुभिः सहेत्यनेन पौनरुक्त्याच्च । ब्राह्मण-परिव्राजकन्यायेनाजाद्यन्यपशुग्रहणं चागतिकागतिः आवहन्तीत्यादिवचनस्य भग इति । वचनात्प्रागुदाहरणीयत्वेऽपि स्थानान्तरस्थत्वसूचनाय पश्चादुदाहरणम् ।

ततश्चायमर्थः । सर्वदा विद्यमाना सनातनी या श्रीरात्मनो मम स्वसम्बन्धिनः स्वभक्तस्य मम वासांसि वस्त्राणि गावो गाश्चान्नपाने चेति सर्वभोगानित्यर्थः । चीरं चिरं बहुकालं आवहन्ती प्रापयन्ती प्रापणं च न सङ्कोचेनेत्याह वितन्वाना विस्तारयन्ती तदपि न पूर्वस्थितस्यैवेत्याह

कुर्वाणा सृजन्ती च भवति । हे स्वाहा स्वकीयहविरादिस्वीकारकर्तः 'स्वीयं स्वीकुरुते यस्मात् स्वाहेत्युक्तो जनार्दन' इत्युक्तेः । अकारस्य हे गोविन्देत्यर्थः । ततस्तां श्रियं न जडमात्रमित्याह लोमशां चतुर्वेणीं श्रियं महालक्ष्मीं पशुभिस्तदुपलक्षितसकलभोगैः सह मे मय्यावह स्थापय सा यथा मयि स्थित्वा सर्वभोगानावहेत्तथा कुर्विति तात्पर्यार्थः । इदानीं शरीरं मे विचर्षणमिति सङ्क्षेपतः प्रार्थितां शिष्यसम्पत्तिं विद्याभिवृद्धि-हेतुत्वेनावश्यकत्वाद्विशेषतः प्रार्थयते आमायन्त्विति हे स्वाहा विष्णो ब्रह्मचारिणः विद्यार्थिनः मा मां प्रत्यायान्तु । तान्विशिनष्टि वि विविधाः विविधगोत्रोत्पन्नाः प्र प्रकृष्टाः प्रकृष्टज्ञानवन्तः दमाः दमवन्तः इन्द्रियनिग्रहवन्तः शमाः शमवन्तः भगवन्निष्ठबुद्धयः आयान्त्विति सर्वत्र सम्बन्धः ।

यद्वा आसमन्तात् अपरविद्यासु मा ज्ञानं येषां ते आमाः एवं विविधा एकैकविषया मा येषां ते विमाः एवं प्रकृष्टा विचारसमर्था मा येषां ते प्रमाः एवं शमवन्त दमवन्तश्च ब्रह्मचारिण इति व्याख्येयम् । एतत्पक्षे प्रकरणादुत्तरवाक्यस्थस्य मामित्यस्य सम्बन्धः यन्त्वित्यस्य यान्त्वित्यर्थः । शिष्यप्राप्तिहेतुभूतं यशः प्रार्थयते यश इति जने प्रवक्तृजने यशो यशस्वी असानि भवानीत्यर्थः । यशःप्राप्तिहेतुभूतं अर्थं प्रार्थयते- **श्रेयानिति** । वस्यसः वसीयसो वसुमतराज्जनात् श्रेयान् प्रशस्ततमोऽसानीत्यर्थः । प्राशस्त्यं च शिष्यादिपोषणोपयुक्तवसुमत्वेन अन्यथा शिष्याणां विद्याभ्यासायोगादिति भावः । यदर्थमेतावत्प्रार्थितं तदिदानीं प्रार्थयते-**तन्त्वेति** । हे भग भगवन् पूर्णषड्गुणस्वरूपं वा विष्णो तमुक्तरूपं त्वा त्वामहं प्रविशानि । अपुनरावृत्तिलक्षणा त्वत्प्राप्तिर्मम भूयादित्यर्थः । तत्प्रतिबन्धककर्मक्षयं ससाधनं प्रार्थयते- **स इति** । हे विष्णो सत्त्वं मा मां प्रविश मदुपासनाविषयता मयि तिष्ठेत्यर्थः । तस्मिन् मदुपास्तिविषये

सहस्रशाखे बहुरूपे तत्तत्कर्मनिवर्तकतत्तद्रूपे त्वयि निमृजे शोधयामि कर्माणि इति शेषः । मदुपासनया प्रसन्नस्त्वं मत्कर्माणि नाशयेति यावत् । अथ प्रवचनस्यैव ज्ञाने मुख्यसाधनत्वात् तत्प्राचुर्याय भूयः शिष्यसम्पत्तिं प्रार्थयते- **यथेति** । यथा आपः उदकानि प्रवृता निम्नभूमिं यान्ति गच्छन्ति यथा वा मासा अहानि जीर्यन्त्यस्मिन्नित्यअहर्जरं संवत्सरं यान्ति तत्रैवान्तर्भवन्तीति यावत् । तथा हे धातः सर्वप्रेरकविष्णोः सर्वतः सर्वदिग्भ्यो ब्रह्मचारिणो विद्यार्थिनः स्वत एव मा आयन्तु आयान्तु आगत्य च मय्येवान्तर्भवन्तु मत् शिष्या भवन्तु इति भावः । ततश्च मुक्तौ भगवत्येव स्वरूपाविर्भावं प्रार्थयते- **प्रतीति** । यस्मात्त्वमेव प्रतिवेशो विश्रमस्थानमसि मुक्तानां तस्मात्त्वमेव मा मां प्रभा हि प्रकाशय सर्वभोगात्मकस्वरूपानन्दाविर्भावं प्रदिशेति यावत् । न केवलमेतावत् त्वं च मा मां प्रपद्यस्व मदपरोक्षतया मयि सर्वदा तिष्ठेत्यर्थः ।।१.९-१२।।

**रा.खं-** विद्याभ्यासिनो मेधाप्राप्त्यर्थं काञ्चन विद्यामाह- **यश्छन्दसामिति** । य इन्द्रः परमेश्वरः छन्दसामृषभोऽधिपतिर्नियन्तेति यावत् । विश्वरूपः पूर्णविग्रहस्वरूपः नानारूप इति वा, 'इन्द्रो मायाभिः पुरुरूप ईयते' इत्यादेः । अमृतात् अमृतेभ्यः व्यत्ययात् नित्येभ्यः छन्दोभ्यः वेदेभ्यः अधिसम्बभूव अधिकतया सुव्यक्तः स इन्द्रः मा मां मेधया प्रज्ञया स्पृणोतु । स्पृक् प्रीतिरक्षणयोः इति धातुपाठात् । स्पृक् प्रीतिरक्षणयोः इति धातुपाठात् । स्पृक् प्रीतिरक्षणयोः इति कविकल्पद्रुमोक्तेः । प्रीणयतु प्रीणनं बलम् बलयतु मेधाविनं करोतु । हे देव अमृतस्य नित्यस्य वेदस्य धारणः धारको भूयासम् तत्त्वज्ञानी भूत्वा क्षिप्रं मुक्तः स्यामिति भावः । मे शरीरं विचर्षणं विशिष्टाश्चर्षणयः प्रजाः यस्य तत् विशिष्टशिष्यप्रजायुक्तं भूयादिति विपरिणामेनान्वयः । मे जिह्वा मधुमत्तमा अतिशयेन मधुमती मधुरभाषिणी सुखसाधनभगवद्बोधकवेदोच्चारणवती भूयादित्यर्थः । कर्णाभ्यां

भूरि ब्रह्म विश्रुवम् । विशेषेण शृणवानीति व्याख्यातैषा श्रुतिः कर्मनिर्णयटीकायाम् । त्वत्तो मे वेदप्रार्थनं त्वद्विषयमेधाप्रार्थनं च युक्तम् । तव तदुभयवत्त्वादिति भावेनाऽह- **ब्रह्मण इति** । ब्रह्मणो वेदस्य कोशोऽसि आवासोऽसि । मेधया प्रज्ञया पिहितः आच्छादितः सम्पूर्णज्ञानोऽसीत्यर्थः । मे श्रुतं मया श्रुतं गोपाय रक्ष । गुपूरक्षणे गुपूधूपविच्छिपणिपनिभ्य आयः इति आयप्रत्ययः फलवत्कुर्वित्यर्थः ।।१.९।।

विद्याभ्यासिनो मनःक्षोभनिरासाय अन्नादिना भाव्यम् । अतस्तदर्थं काञ्चन विद्यामाह- **आवहन्तीति** । आत्मनो जीवजातस्य चीरं चिरं सर्वभोगानावहन्ती आनयन्ती वितन्वाना सनातनी, विपूर्वात्तनोतेर्लटः शानच् उ विकरणं यणादेशः, विस्तारवतीत्यर्थः, विस्तारश्च कालतो विवक्षितः । मम वासांसि गावश्च गाश्च अन्नपाने च कुर्वाणा यतस्ततः स्वाहा सुष्टु आहूयते वेदैः प्रतिपाद्यते इति स्वाहेत्युक्तो गोविन्दः सु आ इत्युपसर्गद्वयपूर्वकात् ह्वयतेः कर्मणि डाप्रत्यये वलोपे च सति स्वाहेति सिद्धेः शब्दस्वाभाव्यादव्ययत्वम् । लोमशां बहुकेशवर्तीं 'लोमादिपामादि-पिच्छादिभ्यः शने लचः' इति मत्वर्थे शप्रत्ययः । सुशिखण्डाम्, 'चतुष्कपर्दा युवतिः' इत्यादि श्रुतेः 'चतुः शिखण्डा' इति श्रुत्यन्तराच्च एवं भूतां श्रियं पशुभिस्सह सदा मे मयि आवह आनयेत्यर्थः ।।१.१०।।

अभ्यस्ता विद्या प्रवचनादधिकफला भवति । प्रवचनं च शिष्यसापेक्षम् । अतः शिष्यसम्पत्तये काञ्चन विद्यामाह- **आ मेति** । ब्रह्मचारिणो मा माम् आयन्तु । ते कीदृशाः वि विविधाः प्र प्रकृष्टाः, दमाः इन्द्रियनिग्रहवन्तः अर्श आदिभ्योजिति मत्वर्थेऽच्प्रत्ययः शमा विष्णुनिष्ठावन्तः । शिष्यागत्यर्थं यशो यशस्वी जने जनेषु असानि । व्याख्याताऽयं गुरुरिति कीर्तिमान् भवानीत्यर्थः । अस्तेर्लोटि उत्तमपुरुषैकवचनमसानीति । स्वाहेत्युक्तार्थम् । अभ्यास आदरार्थः । यश इत्यत्र मतुपो लुक् छान्दसः ।

वस्यसः सुखस्य विषये श्रेयान् प्रशस्ततरः श्रेष्ठो वा असानि अविरतसुखवान् स्यामित्यर्थः । तथात्व एव मनसोऽक्षोभेण नित्यं प्रवचनं भवति । नान्यथेत्यर्थः । हे भग षड्गुणपूर्ण तं ब्रह्मकोशत्वादिगुणकं मया प्रार्थितं च त्वां प्रविशानि । हे भग स त्वं मा सहस्राणि शाखा इव शाखाः रूपाणि यस्य तस्मिन्निति बहुरूपतया सहस्रशाखपदोक्ते तस्मिन् भगपदोक्ते त्वयि प्रविष्टोऽहं निमृजे पापमिति शेषः प्रक्षालये त्वदुपासनादिना निवृत्तकल्मषो मुक्तो भवानीति भावः ॥१.११॥

शिष्यागमनप्रयत्नेनास्त्विवति स दृष्टान्तं प्रार्थयते - **यथाऽऽप इति** । यथा प्रवताः निम्नभूमीः प्रति आपो यन्ति, अहर्जरम् अहानि जीर्यन्त्यत्रेत्यहर्जरं संवत्सरं प्रति यथा मासा यान्ति, एवं हे धातः मां ब्रह्मचारिणः सर्वत आयन्त्विति । प्रतिवेशोऽसि प्रवेष्टुं त्वं योग्योऽसि । श्रमापनयनस्थानम् आसन्नगृहं प्रतिवेशः तादृशोऽसीत्यर्थः । मां प्रति प्रभाहि व्यक्तो भव । मां प्रपद्यस्व प्राप्नुहि, मयि सन्निहितो भवेत्यर्थः । भाष्ये तु प्रमाणानुरोधेनाऽमायन्त्विति विद्यां पूर्वं लेशतो व्याख्याय पश्चादावहन्तीति विद्या व्याख्याता । तदनुरोधेन व्यासतीर्थटीकाऽपि तथैव प्रवृत्तेति ज्ञेयम् ॥१.१२॥

उपनिषत्

**भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः । तासामु ह स्मै तां चतुर्थीम् । माहाचमस्यः प्रवेदयते । मह इति । तद् ब्रह्म । स आत्मा । अङ्गान्यन्या देवताः ॥१.१३॥**

**भूरिति वा अयं लोकः । भुव इत्यन्तरिक्षम् । सुवरित्यसौ लोकः । मह इत्यादित्यः । आदित्येन वाव सर्वे लोका महीयन्ते । भूरिति वा अग्निः । भुव इति वायुः । सुवरित्यादित्यः । मह इति**

चन्द्रमाः । चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते । भूरिति वा ऋचः । भुव इति सामानि । सुवरिति यजूꣳषि । मह इति ब्रह्म । ब्रह्मणा वाव सर्वे वेदा महीयन्ते । भूरिति वै प्राणः । भुव इत्यपानः । सुवरिति व्यानः । मह इत्यन्नम् । अन्नेन वाव सर्वे प्राणा महीयन्ते । ता वा एताश्चतस्रश्चतुर्धा । चतस्रश्चतस्रो व्याहृतयः । ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति ॥१.१४॥

भाष्यम्

भूरादिव्याहृतीभिस्तु वाच्यं मूर्तिचतुष्टयम् ।
अनिरुद्धादिकं वासुदेवान्तं देहमध्यगः ॥
वासुदेवो महोनामा त्वनिरुद्धश्शिरो मतः ।
भूर्नामाऽथ भुवोनामा बाहू प्रद्युम्न ईरितः ॥
सङ्कर्षणस्सुवर्नामा पादौ तस्य महात्मनः ।
अनन्योऽप्यन्यशब्देन चतुरात्मा प्रकीर्त्यते ॥
निर्विशेषोऽपि भगवान् सङ्ख्यामात्रविशेषतः ।
लोकज्योतिः प्राणवेदेष्वेकस्स पुरुषोत्तमः ॥
प्रत्येकशश्चातुरात्म्यात् षोडशात्मा प्रकीर्तितः ।
महीयते महति च स्वयं स भगवान् हरिः ॥
पूज्यपूजकभेदोऽत्र नैव कश्चिदपीष्यते ।
नामप्रवृत्तिहेतुत्वान्नाम लोकादिकं हरेः ॥
अयं समीपस्थतया त्वसौ प्राणे स्थितत्वतः ।
ईक्षणादन्तरिक्षं चाथाऽदित्यस्थोऽदितेस्सुतः ॥
अग्निरग्नौ स्थितत्वाच्च वायुर्वयति यज्जगत् ।
चन्द्र आह्लादरूपत्वादृगर्च्यत्वाज्जनार्दनः ॥

यजुर्याज्यस्वरूपत्वात्साम चासौ समत्वतः ।
बृहत्त्वाद् ब्रह्म वेदानां समुदायेऽखिले स्थितः ।।
तत्सम्बन्धाद्वेदराशिर्ब्रह्मशब्देन कीर्तितः ।
प्रकृष्टनयनात् प्राणोऽपानोऽवाङ्नयनाद्धरिः ।।
विविधं नयनाद् व्यानस्सोऽन्नं सर्वोपजीव्यतः ।
एवं षोडशरूपोऽसौ चतुरात्मा व्यवस्थितः ।
महाचमसनामाऽसौ यस्मादतिचमत्कृतिः ।।
माहाचमस्यस्तज्ज्ञानी ब्रह्मा सम्परिकीर्तितः ।
एवं षोडशरूपाणां ज्ञानयोग्यश्चतुर्मुखः ।
स एव ब्रह्मवित्तस्मात् पूज्यते मुक्तिगोऽपि सन् ।
सर्वदेवैरतितरां यस्सम्यक् षोडशात्मवित् । इति व्याहृतितत्त्वे ।

तस्य भूरिति शिरः । एकं शिरः । एकमेतदक्षरम् । भुव इति बाहू । द्वौ बाहू । द्वे एते अक्षरे । सुवरिति प्रतिष्ठे । द्वे प्रतिष्ठे । द्वे एते अक्षरे इत्यादिश्रुतेः । सर्वव्याहृतीनां प्रवेत्ता माहाचमस्यश्चतुर्थीत्वेनैतां प्रवेदयत इति विशेषः ।

भूर्नामा स्फूर्तिरूपत्वाद् भूरिवीर्यत्वतो भुवः ।
सुवस्सुबलरूपत्वान्महः पूर्णत्वतो विभुः ।।
तदेतच्चतुराकारं ब्रह्मोक्तं गुणबृंहणात् ।
स आत्मा सर्वदेवानां चतुरात्मा जनार्दनः ।।
तस्य ब्रह्मादयो देवा अङ्गमागन्तुकत्वतः ।
वासुदेवादिरूपोऽसौ षोडशात्मा चतुश्चतुः ।।
स एव सर्ववेदोक्तस्सर्वविद्यासु चेश्वरः ।
प्रणवार्था व्याहृतयो व्याहृत्यर्था ऋगादयः ।।
इतिहासः पुराणं च पञ्चरात्रं च सर्वशः ।

**सम्यग्व्याहरणाद् विष्णोः श्रुता व्याहृतयस्त्विति ।**
**सर्ववेदोक्तसर्वस्वव्याहृतेर्व्याहृतित्वमु ।**
**विशेषेणाऽहरन्तीमं विष्णुमित्यथवा स्मृताः ।**

**इति व्याहृतिसारे ।।**

**व्यास-** वेदविद्याभ्यासार्थिनां तत्प्राप्त्यर्थं पूर्वभाविनीव्याहृति-निष्ठोपास्तिरुक्ता भूर्भुवः सुवरिति । तां ब्रह्मपरत्वाप्रतीतेर्व्याचष्टे- **भूरित्यादिना** । माहाचमस्यः ब्रह्मा । तद्रूपचतुष्टयं ब्रह्म । भूरादिचतूरूपो भगवानित्युक्तं तथा च किं कर्तव्यमित्यतः स आत्मा अङ्गी अन्या देवताः भूराद्याः अङ्गानि इति चिन्त्यमित्युक्तम् । तद्व्याचष्टे- **देहेत्यादिना** । ननु भूरादीनां भगवतश्च परस्परमभेदात्कथमन्य इत्यन्यत्वोक्तिरित्यत आह- **अनन्य इति** । भेदाभावे कथमन्यत्वोक्तिरित्यत आह- **सङ्ख्येति** । भेदाभावेऽपि सङ्ख्याविशेषयुक्तत्वादन्यत्वोक्तिर्युक्तेत्यर्थः । भूरादिवाच्यानां अनिरुद्धादीनां अधिष्ठानमाह- **भूरिति वा अयं लोक इत्यादि** । तद्व्याचष्टे- **लोक इत्यादिना** । अनिरुद्धादिरूपो भगवान् लोकादिषु तिष्ठतीत्यर्थः । आदित्येन वाव सर्वे लोका महीयन्त इत्यादेरर्थमाह- **महीयत इति** । पूज्यपूजकभावेऽपि न लोकवद्भेदः शङ्कनीय इत्याह- **पूज्येति** । लोकादिषु तिष्ठति चेत् कथं भूरितिवायं लोक इति सामानाधिकरण्यव्यपदेश इत्यतस्तद्घटयन्नाह- **नामेत्यादि** । लोकादिकं शब्दजातं हरेर्नाम कुतः तत्तन्नामप्रवृत्तिहेतुभावात्, लोकादिषु स्थितत्वाच्च । अतः सामानाधिकरण्यं युक्तमित्यर्थः। नामप्रवृत्तिहेतुभावमेव दर्शयति- **अयमित्यादिना** । ब्रह्मणामनेकत्वात् मह इति ब्रह्मेत्युक्तं किमिति न ज्ञायतेऽत आह- **वेदानामिति** । भूतैरद्यत इत्यन्नमिति । उपजीव्यतः उपजीव्यत्वात् । एवं ता एताश्चतस्रो व्याहृतयः प्रत्येकं चतुर्धा याः प्रत्येकं चतस्रः चतस्रो व्याहृतयः । ता यो वेदेत्यत्र व्याहृतिवेत्तुः सर्वदेवोपास्यत्वं फलमुक्तम् ।

तद्यस्य कस्यापि तद्धेतुः प्रतीयते तदुपक्रमाननुगुणमिति दर्शयन्व्याचष्टे- **एवमिति** । अङ्गान्यन्या देवता इति भूरादयो भगवतोऽङ्गानीत्युक्तं तच्छुत्या समर्थयते- **तस्येति** । **सर्वव्याहृतिवेत्ता ब्रह्मेत्युक्तमयुक्तम्** । एतां चतुर्थीं प्रवेदयत इति विशेषोक्तेरित्यत आह- **सर्वेति** । इति हेतोर्विशेषतः एतामिति विशेषोक्तिर्घटत इत्यर्थः । भूरादिशब्दाः कया वृत्त्या भगवति प्रवर्तन्त इति जिज्ञासायां रूढियोगेनेत्याह- **भूर्नामेति** । तद्ब्रह्मेत्येतद्व्याचष्टे- **तदेतदिति** । स आत्मा अङ्गान्यन्या देवता इत्येतत्प्रकारान्तरेण व्याचष्टे- **स इति** । आगुन्तुकत्वादङ्गं गुणभूतम् । भूरिति वा अयं लोक इत्यादि भूरादिषोडशात्मा भगवानिति व्याख्यातम् । तत्र प्रमाणान्तरं पठति- **वासुदेवेति** । मह इति ब्रह्मेत्यस्यार्थः- **स एवेति** । सर्ववेदोक्तत्वं विशदयन्नाह- **प्रणवेति** । व्याहृतिषु व्याहृतिशब्दप्रवृत्तिनिमित्तं निरुच्य दर्शयति- **सम्यगिति** । सम्यगित्युक्तं विशदयन्नाह- **सर्ववेदेति** । उ एव व्याहृतेरेव । प्रकारान्तरेण निर्वक्ति- **विशेषेणेति** । आहरन्ति भक्तं प्रतीति शेषः ।।१.१३-१४।।

**वादि-** इदानीं सकलविद्याभ्यासकाले शुध्यर्थं प्रागवश्यं वक्तव्यां व्याहृतिविद्यामाह- **भूर्भुवः सुवरित्यादिना** । सव्याहृतिं सप्रणवम् इति हि श्रुतिः । प्रतिपाद्यदेवताज्ञानपूर्वकं मन्त्रोऽभ्यसनीय इति भावेनाऽह भाष्यकारो भूरादिव्याहृतीभिरिति । भूरित्यनेनानिरुद्धः कथ्यते । भुव इत्यनेन प्रद्युम्नः । सुवरित्यनेन सङ्कर्षणः । मह इत्यनेन वासुदेव इति विवेकः । तासां मध्ये चतुर्थीं मह इति व्याहृतिं महत् चमसं चमत्कारो यस्य स महाचमसः परमात्मा तस्य सम्बन्धी माहाचमस्यः ब्रह्मा प्रवेदयते । इतिहासादितोऽप्युत्तमत्वात् महागुणप्रतिपादकत्वात् सर्वगुणपूर्णत्व-प्रतिपादकत्वाच्च चतुर्थ्या ब्रह्मैव सम्यगुपास्त इति भावः । मह इति व्याहृतिप्रतिपाद्यं ब्रह्म सर्वगुणपूर्णं परं ब्रह्म । स वासुदेव आत्मा मध्यदेहः ।

अङ्गी नारायणः । अन्या देवताः अनिरुद्धप्रद्युम्नसंकर्षणाख्याः नारायणस्याङ्गानि शिरः पाणिपादाख्याख्याङ्गानि । अनिरुद्धः शिरः प्रद्युम्नो बाहू सङ्कर्षणः पादौ । एवं चतुमूर्त्यात्मको नारायण इत्यर्थः । प्रत्येकं मन्त्रार्था वासुदेवाद्या भगवदङ्गतया ध्येयाः समुदितमन्त्रप्रतिपाद्यो नारायणस्त्वङ्गितया ध्येय इति भावः ।।१.१३।।

इदानीं भूरादिवाच्यानिरुद्धादिदेवतानां सकलजगदाधारत्वद्योतनाय चतुर्धा चतुर्धा स्थानान्याह- **भूरिति वा अयं लोक इत्यादिना** । भूर्नामकोऽनिरुद्धः अयं लोको वै एतल्लोकस्थित्वात् लोकृ दर्शने इत्यस्माद्धातोः सर्वज्ञत्वात्समीपगत्वाच्च अयं लोकशब्दाभ्यां वाच्यो वै । भुवः भुवर्नाम प्रद्युम्नस्वरूपम् अन्तरिक्षस्थिततत्वादन्तरिक्षम् । सुवर्नाम सङ्कर्षणस्वरूपं प्राणे स्थितत्वात् प्रकाशरूपत्वादसौ लोकः । मह इति वासुदेवः आदित्यस्थिततत्वादादित्यः । एवं रूपचतुष्टयैर्लोकत्रयभासकमादित्यं च प्रवर्तयति । एवं ध्यात्वा त्रिलोक्यामैहिकं सुखं लब्ध्वा परलोकगमनसमये सूर्ये च सङ्गत्य स सुखी भवतीति । एवं भूरिति शब्दवाच्योऽनिरुद्धः अग्निः अग्निस्थिततत्वाच्चाङ्गभूतजगन्नेतृत्वाच्चाग्निशब्दवाच्यः । भुवः भुवश्शब्दवाच्यः प्रद्युम्नो वायुः वय गतौ इति धातोर्जगत्प्रवर्तकत्वाद्वायुगततत्वाच्च वायुशब्दवाच्यः । सुवः सुवश्शब्दवाच्यः सङ्कर्षणः आदित्यः आदित्यप्रवर्तकत्वाद् अदितिसुतत्वाच्चादित्यशब्दवाच्यः । महः महश्शब्दवाच्यो वासुदेवः चन्द्रमाः । चन्द्रगततत्वात् 'चदि आह्लादने' इति धातोः सुखकरत्वाच्चन्द्रमाः चन्द्रमश्शब्दवाच्यः । एवं ध्यातुरग्निवाय्वादयस्सर्वे अनुकूला भवन्तीति भावः ।

भूश्शब्दवाच्योऽनिरुद्धः ऋग्वेदगततत्वात् ऋ पूजायाम् इति धातोरर्च्यत्वाच्च ऋक्शब्दवाच्यः । प्रत्यृचं बहुरूपत्वादृचः इति बहुवचनम् । भुवः भुवश्शब्दवाच्यः प्रद्युम्नः सामवेदगततत्वात् सर्वरूपेषु समत्वाच्च

सामशब्दवाच्यः । साम्नां ऋगाधिरूढत्वाद् ऋचस्सामानि इति श्रुतेः क्रमोल्लङ्घनम् । प्रतिसाम बहुरूपत्वाद् बहुवचनम् । सुवस्सङ्कर्षणो यजूंषि यजुर्वेदस्थितत्वाद् इज्यत्वाच्च यजुश्शब्दवाच्यः । बहुवचनं तु पूर्ववद् द्रष्टव्यम् । महः वासुदेवः ब्रह्म वेदसमुदाये स्थितत्वात् गुणबृंहितत्वाच्च ब्रह्मशब्दवाच्यः । एवं ध्यातुर्वेदाः फलप्रदा भवन्तीति भावः । एवं भूः शब्दवाच्योऽनिरुद्धः प्राणे स्थितत्वात् णीञ् प्रापणे इति धातोः प्रकृष्टान् ब्रह्मादीन् आ समन्तान्नयतीति व्युत्पत्या च प्राणशब्दवाच्यः । भुवर्नामकप्रद्युम्नः अपानः अपानवायुगतत्वात् सर्वजगदयं स्वस्याधस्तादा सम्यक् नयतीति व्युत्पत्त्या चापानशब्दवाच्यः । सुवर्नामस्सङ्कर्षणो व्यानाख्यवायुगतत्वाद्विविधतया जगदासमन्तान्नयतीति व्युत्पत्त्या च व्यानशब्दवाच्य इत्यर्थः । महः शब्दवाच्यो वासुदेवोऽन्नगतत्वात् अद्यतेऽत्ति च इति श्रुतेस्सर्वोपजीव्यत्वाच्चान्ननामेत्यर्थः । एवं ध्यायन् चिरं जीवो यथेष्टान्नवान् लोकोपजीव्यश्च भवतीति भावः । ता एता अनिरुद्धादिदेवताः पुनश्चतस्रः पुनश्चतुर्धा । पुनश्चतस्रः पुनश्चतस्र इति षोडशधा भूत्वा सर्वं जगत् प्रवर्तयन्ति । यो ब्रह्मा ताः व्याहृतिप्रतिपाद्यदेवताः वेद अविच्छिन्नतया वेद स एव ब्रह्म वेद । अस्मै मुक्ताय ब्रह्मणे सर्वे देवा बलिं पूजामावहन्तीत्यर्थः । अनेनैतदुपनिषद्विद्योक्तोपास्तौ ब्रह्मण एव मुख्याधिकारित्वमिति सूचितम् ।।१.१४।।

**श्री.भा-** पूर्वं वेदविद्याभ्यासिनो मेधादिप्राप्त्यर्थं विद्या निरूपिताः । इदानीं व्याहृतिनिष्ठां विद्यामाह- **भूर्भुवः सुवरिति वेत्यादिना** । अस्याः विद्यायाः ब्रह्मपरत्वाप्रतीतेस्तां प्रमाणेनैव सम्यक् व्याचष्टे- **भूरादिव्याहृतीभिस्त्वित्यादिना** । तत्र भूर्भुवस्सुवरित्यादेस्तात्पर्यं भूरादीति । मह इत्यन्ताभिरित्यर्थः । स आत्मा अङ्गान्यन्या देवता इत्यस्यार्थमाह-

**देहमध्यग इत्यादिना** । महो नामा वासुदेवो देहमध्यगः मूलरूपस्य हरेः देहमध्यग इत्यादिना च आत्मशब्दोऽगित्वार्थको मध्यदेहपर इत्युक्तं भवति । तस्य महात्मनो वासुदेवस्येत्येतदनिरुद्धः शिरो मत इत्यादावपि सम्बध्यते । नन्वनिरुद्धादिमूर्तीनां परस्परमत्यन्ताभिन्नत्वात् अन्या देवता इति कथमन्यत्वोक्तिः । तथा हीनोच्चभावशून्यत्वात्स आत्मा अंगानीत्यंगांगिभावोक्तिश्चेत्यत आह- **अनन्योऽपीति** । भेदशून्योऽपीत्यर्थः । चतुरात्मा भगवाननन्योऽपि श्रुतौ अन्यशब्देन प्रकीर्त्यते । तथा निर्विशेषोऽपि हीनोच्चभावरूपविशेषशून्योऽपि भगवान् स आत्मा अंगानीति च प्रकीर्त्यते इत्यध्याहारेण योज्यम् ।

ननु भेदाभावे कथमन्यत्वोक्तिरित्यत आह- **संख्येति** । भेदाभावेऽपि विशेषबलेन केवलं द्वित्वादिसंख्याविशेषयुक्तत्वादन्यत्वोक्तिर्युक्तेत्यर्थः । यथोक्तमनुव्याख्याने 'अभेदेऽपि विशेषेणैवान्य इत्युदितो हरिः' इति । भगवानिति वचनेन ऐश्वर्यादंगांगिभावोक्तिरपि युक्तेति सूचितमित्यपि द्रष्टव्यम् । यथोक्तं भाष्ये 'अंगांगित्वेन भगवान् क्रीडते पुरुषोत्तमः । ऐश्वर्यान्न विरोधश्च चिंत्यस्तस्मिन् जनार्दने' इति । भूरादिव्याहृतिवाच्यानां अनिरुद्धादिमूर्तीनां उपास्त्यर्थमधिष्ठानान्याह- **भूरिति वा अयं लोक इत्यादिना** । तत्र भूरादिशब्दवाच्यभगवन्मूर्तीनां लोकाद्यभेद उच्यत इत्यन्यथाप्रतीतिनिरासाय तदभिप्रायमाह- **लोकेति** । लोकशब्देन भूम्यन्तरिक्षासौ लोकानां ग्रहणम् । मह इत्यादित्य इत्युक्तादित्यस्यापि लोकप्रकाशकत्वात् लोकशब्देन ग्रहणमिति मन्तव्यम् । ज्योतिःशब्देनाग्निवाय्वादित्यचन्द्रमसां ग्रहणम् । प्राणवेदेत्यत्र क्रमो न विवक्षितः । प्राणेत्यनेन प्राणापानव्यानां संग्रहः । तदाप्यायकत्वादन्यस्यापि प्राणशब्देनैव ग्रहणम् । वेदशब्देन ऋक्सामयजुषां ब्रह्मेत्युक्तवेदसमुदायस्य च ग्रहणम् । तथाचानिरुद्धादिरूपो भगवान् लोकादिषु तिष्ठतीति श्रुत्यर्थो द्रष्टव्यः ।

'सप्तसु प्रथमा' इति सूत्रादिति भावः । तावा एताश्चतस्रश्चतुर्धा इत्यस्यार्थः प्रत्येकञ्च इति ।'आदित्येन वाव सर्वे लोका महीयन्ते' 'चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते'। 'ब्रह्मणा वाव सर्वे वेदा महीयन्ते' । 'अन्नेन वाव सर्वे प्राणा महीयन्ते' इति वाक्यचतुष्टयाभिप्राय-माह- **महीयत इति** । पूज्यत इत्यर्थः । महपूजायामिति धातोः । महति पूजयति । अत्र पूज्यपूजकभावोक्त्या भेदः प्रतीयते अत आह- **पूज्येति** । अत्र भगवद्रूपसमुदाये । अपिशब्दो यद्यपि तथापीत्यर्थे । तथाच यद्यपि अत्र भगवद्रूपसमुदाये पूज्यपूजकसमुदाये पूज्यपूजकभेदो नैवेष्यते तथापि क्रीडयैव पूज्यपूजकभाव इत्यभिप्रायः । यथोक्तं 'सोऽर्चन्नचरत्' इत्यत्र बृहद्भाष्ये । सोऽत्मानमर्चन्नचरत्क्रीडया तत्तदात्मकमित्यादि । एवं भूरिति वा अयं लोक इत्यादावयं लोक इत्यादिकं सप्तम्यन्तमित्यंगीकृत्य व्याख्यातम् ।

इदानीं तत्प्रथमान्तमंगीकृत्यापि व्याख्याति- **नामेति** । हेतुत्त्वात् हेतुमत्त्वात् लोकादिकं लोक इत्यादिकम् । तथाचायं लोक इत्यादिनाम्नां प्रवृत्तिहेतुभूताः ये धर्मास्तद्वत्त्वात् भूरादिशब्दवाच्यस्य हरेर्लोकादिकं अयं लोक इत्यादिशब्दजातं नाम अतोऽयं लोक इति सामानाधिकरण्यं युक्तमित्यर्थः । अयं लोक इत्यादिनामप्रवृत्तिहेतुभूतधर्मवत्त्वमेव दर्शयति - **अयमित्यादिना** । तुशब्दश्च शब्दार्थः । तेनोत्तरत्र च लोकः प्रकाशरूपत्वा-दिति लोकशब्दव्याख्यानसंग्रहः । अतो न न्यूनतेति ज्ञातव्यम् । असुशब्दस्य सप्तमी असाविति तस्यार्थः प्राणे स्थितत्वत इति । तथाच प्राणे स्थितत्वादसुशब्दवाच्य इत्यर्थः । ईक्षणादित्यतः पूर्वं अन्तरिति शेषः । अन्तस्स्थित्वा ईक्षणयोगतः । 'अभावाद्व्यवधानस्य ह्यन्तरीक्षमितीर्यत' इति- **अदितेः सुत इति** । वामनरूपेणेति भावः । चाथशब्दावन्योन्य-समुच्चये- **वयतीति** । वय श्रेष्ठत्व इति धातोः । यद्यस्माज्जगत्प्रति वयति

श्रेष्ठो भवति तस्मात् वायुरित्यर्थः यद्वा वयबन्धन इति धातोः यद्यस्माज्जगद्वयति विधिनिषेधाभ्यां बध्नाति तस्माद्वायुरित्यर्थः । आह्लादरूपत्वात्सुखरूपत्वादित्यर्थः । चदि आह्लादन इति धातोः । अर्च्यत्वात् पूज्यत्वात् । याज्यस्वरूपत्वात् पूज्यस्वरूपत्वात् । समत्वतः सर्वरूपेष्विति शेषः । मह इति ब्रह्मेत्यनेन किमधिष्ठानमुक्तमिति न प्रतीयते अत आह- **वेदानामिति** । तन्निर्वक्ति **बृहत्त्वादिति**। तथाचाखिलवेदानां समुदाये प्रतिपाद्यतयावस्थितो भगवान् बृहत्त्वात्पूर्णत्वात् ब्रह्मेत्युच्यत इत्यर्थः ।

ननु तर्हि ब्रह्मशब्दस्य बृह जातिजीवकमलासन शब्दराशिषु इति वेदरूपशब्दराशिषु प्रसिद्धिविरोध इत्यत आह- **तत्सम्बन्धादिति** । स्वप्रतिपाद्यतयावस्थितब्रह्मशब्दवाच्यभगवत्सम्बन्धादित्यर्थः- **प्रकृष्टनयनादिति** । प्रकृष्टं प्रकर्षेण ऊर्ध्वलोकं प्रति देवानामासम्यगित्यपि ग्राह्यम् नयनादित्यर्थः । अपेत्यस्यार्थोऽवागिति । अवाक् अधो दैत्यानां आ सम्यगित्यपि ग्राह्यम् । नयनात् हरिरपान इत्यर्थः । वीत्यस्यार्थो विविधमिति । विविधं यथा स्यात् तथा अनेकप्रकारेण सत्ताप्रतीतिप्रवृत्तिदानेन इति यावत् । आसम्यगित्यपि ग्राह्यम् । नयनात्प्रेरणादित्यर्थः । सर्वोपजीव्यतः 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत' इति श्रुतेरद्यत्वमेवान्नत्वम् । अद्यत्वं च न चर्व्यत्वं किन्तूपजीव्यत्वमेवेति भावेनैतदुक्तम् । यथोक्तं भाष्ये । उपजीव्यत्वमेवाद्यत्वमिति । 'तावा एता' इति वाक्यं प्रत्येकश इति पूर्वं व्याख्यातम् ।

इदानीं तदुपसंहारपरमिति सूचयन्नुपसंहरति- **एवमिति** । अनिरुद्धादिरूपेण चतुरात्माऽसौ भगवान् एवं भूरिति वा अयं लोक इत्यादि प्रकारेण षोडशात्मा षोडशरूपी सन् व्यवस्थित इत्यर्थः । अनेन पूर्वं प्रत्येकश इति वचनेन अत्र च एवं वचनेन तावा एता इत्यत्र एवं

प्रत्येकश इति पदद्वयाध्यार इत्युक्तं भवति । तथा च तावा एताश्चतस्रोऽनिरुद्धादिमूर्तयः एवं भूरिति वेत्यादिप्रकारेण प्रत्येकश्चतुर्धा । तथाच भगवन्मूर्तयः षोडशसंख्याकाः सम्पद्यत इति व्याख्यातं भवतीति ज्ञातव्यम् । 'तायो वेद स वेद ब्रह्म सर्वेऽस्मै देवा बलिमावहन्ति' इत्यत्र व्याहृतिवेत्तुः सर्वदेवतापूज्यत्वरूपं फलमुक्तं तत्सर्वं तद्वेत्तृसाधारणमिति प्रतीयते तदयुक्तं माहाचमस्यः प्रवेदयते इत्युपक्रमविरोधादिति भावेन महाचमसशब्दार्थकथनपूर्वकं माहाचमस्यशब्दार्थमाह- **महाचमसनामासाविति** । असौ भगवान् अतिचमत्कृतिः अतिशीघ्रं कर्ता । येत्यस्यार्थमाह- **तज्ज्ञानीति** । यातेर्गत्यर्थत्वात् तज्ज्ञानस्य सर्वसाधारण्यात्समित्युक्तम् । तथाच सं सम्यक् तज्ज्ञानीति सम्बन्धः । स परिकीर्तित इत्यपि कचित्पाठः । तथाच महाचमसं भगवन्तं समग्याति जानातीति माहाचमस्यो ब्रह्मेत्युक्तं भवति । स वेद ब्रह्म इत्येतत्सावधारणमित्यभिप्रेत्य व्याचष्टे- **स एवेति** । ब्रह्मवित् षोडशात्मपरब्रह्मज्ञानी ।

सर्वेऽस्मै देवा बलिमावहन्तीत्यस्यार्थमाह- **तस्मादिति** । अनेन सर्वेऽस्मा इत्यतः पूर्वं तस्मादिति शेष इत्युक्तं भवति- **मुक्तिगोऽपीति** । न केवलं संसारग इत्यर्थः । अनेन बलिमावहन्तीति संसारे मुक्तौ चेति शेषः कार्य इति सूचितं भवति । सर्वे देवा बलिमावहन्ति इत्यस्य तात्पर्यतो व्याख्यानं सर्वदेवैः अतितरां पूज्यत इति । आङोऽर्थोऽतितरामिति । पूज्यत इत्युक्त्या बलिं पूजां वहन्ति वह प्रापण इति धातो प्रापयन्ति कुर्वन्तीति यावत् । तस्मादित्युक्तं हेतुं व्यनक्ति- **यस्सम्यगिति**। स आत्मा । अंगान्यन्या देवता इति भूरादिशब्दावाच्यानिरुद्धादिमूर्तित्रयाणां महःशब्दवाच्यवासुदेवांगत्वमुक्तम् । तत्र बृहदारण्यकवाक्यं प्रमाणयति- **तस्य भूरिति शिर इति** । 'य एष एतस्मिन्मण्डले पुरुष' इति पूर्ववाक्यमप्यत्र ग्राह्यम् । इत्यादीत्यादिपदेन योऽयं दक्षिणेऽक्षन् पुरुषः

तस्य भूरिति शिर इत्युत्तरखंडस्थवाक्यग्रहणम्। तथाच योऽयं एतस्मिन्सूर्यमण्डले दक्षिणेऽक्षन् अक्षणि च पुरुषो वासुदेवस्तस्य भूर्नामानिरुद्धः शिर इत्यर्थः । भूरित्यस्य शिरस्त्वे युक्तिमाह- **एकं शिर इत्यादि** । शिर एकं एतदक्षरं भूरित्येतदक्षरमप्येकं अतः तद्वाच्यो अनिरुद्धः शिर इत्यर्थः । एवमुत्तरत्रापि योज्यम् । प्रतितिष्ठति आभ्यामिति प्रतिष्ठे पादौ । यथोक्तं बृहद्भाष्ये । 'स वासुदेवो भगवानादित्यस्थो जनार्दनः' । 'स एव दक्षिणाक्षिस्थश्च' इत्यादि ।

ननु 'चतस्रः चतस्रो व्याहृतयः' 'ता यो वेद' इत्येतदेवं षोडशरूपाणां ज्ञानयोग्यश्चतुर्मुख इति प्रमाणेन सर्वव्याहृतिवेत्ता ब्रह्मेति व्याख्यातम् । तदयुक्तं 'तासामु ह स्मै तां चतुर्थीं' 'माहाचमस्यः प्रवेदयते' इत्युपक्रमे तासां तिसृणां व्याहृतीनां मह इत्येतां व्याहृतिं माहाचमस्यो ब्रह्मा चतुर्थीं चतुर्थीत्वेन वेदयते जानातीति ब्रह्मणो विशिष्य चतुर्थव्याहृतिज्ञानवत्त्वोक्तिविरोधादित्यतः तासामु ह स्मै तां चतुर्थीम् इति वाक्यं अध्याहारपूर्वकं सम्यग्व्याचष्टे- **सर्वव्याहृतीनामिति**। भूरादिचतसृणां व्याहृतीनां प्रवेत्ताऽपीत्यध्याहारकरणादुक्तशंकानिरास इति ज्ञेयम्। रुद्रादीनामपि व्याहृतिवेत्तृत्वात्प्रेत्युपसर्गः । चतुर्थीमित्यस्यार्थश्चतुर्थीत्वेनेति । एतां मह इति व्याहृतिं विशेषो विशिष्यवचनं युक्त इति शेषः । अनिरुद्धादिचतुर्षु मूर्तिषु भूरादिशब्दचतुष्टयप्रवृत्तौ निमित्तं दर्शयति- **भूर्नामेति** । स्पूर्तिरूपत्वात्स्वप्रकाशस्वरूपत्वादित्यर्थः । भूशब्दः पूर्णार्थकभूरिवाची । वशब्दः पराक्रमापरपर्यायवीर्यवाचीत्यभिप्रायेण भूरिवीर्यत्वत इत्युक्तम् । वशब्दः शरीरबलवाचीत्यभिप्रेत्य सुबलरूपत्वादि-त्युक्तम् । तद्ब्रह्मेत्यत्राव्यवधानेन प्रकृतस्य महोनामकव्याहृतिप्रतिपाद्यस्य वासुदेवस्यैव गुणपूर्णत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय तद्वाक्यं व्याचष्टे- **तदेतदिति** । चतुराकारं भूरादिशब्दचतुष्टयेनाक्रियमाणं तदेतदनिरुद्धादि-

प्रत्येकश इति पदद्वयाध्यार इत्युक्तं भवति । तथा च तावा एताश्चतस्रोऽनिरुद्धादिमूर्तयः एवं भूरिति वेत्यादिप्रकारेण प्रत्येकश्चतुर्धा । तथाच भगवन्मूर्तयः षोडशसंख्याकाः सम्पद्यत इति व्याख्यातं भवतीति ज्ञातव्यम् । 'तायो वेद स वेद ब्रह्म सर्वेऽस्मै देवा बलिमावहन्ति' इत्यत्र व्याहृतिवेत्तुः सर्वदेवतापूज्यत्वरूपं फलमुक्तं तत्सर्वं तद्वेत्तृसाधारणमिति प्रतीयते तदयुक्तं माहाचमस्यः प्रवेदयते इत्युपक्रमविरोधादिति भावेन महाचमसशब्दार्थकथनपूर्वकं माहाचमस्यशब्दार्थमाह- **महाचमसनामासाविति** । असौ भगवान् अतिचमत्कृतिः अतिशीघ्रं कर्ता । येत्यस्यार्थमाह- **तज्ज्ञानीति** । यातेर्गत्यर्थत्वात् तज्ज्ञानस्य सर्वसाधारण्यात्समित्युक्तम् । तथाच सं सम्यक् तज्ज्ञानीति सम्बन्धः । स परिकीर्तित इत्यपि क्वचित्पाठः । तथाच महाचमसं भगवन्तं समग्याति जानातीति माहाचमस्यो ब्रह्मेत्युक्तं भवति । स वेद ब्रह्म इत्येतत्सावधारणमित्यभिप्रेत्य व्याचष्टे- **स एवेति** । ब्रह्मवित् षोडशात्मपरब्रह्मज्ञानी ।

सर्वेऽस्मै देवा बलिमावहन्तीत्यस्यार्थमाह- **तस्मादिति** । अनेन सर्वेऽस्मा इत्यतः पूर्वं तस्मादिति शेष इत्युक्तं भवति- **मुक्तिगोऽपीति** । न केवलं संसारग इत्यर्थः । अनेन बलिमावहन्तीति संसारे मुक्तौ चेति शेषः कार्य इति सूचितं भवति । सर्वे देवा बलिमावहन्ति इत्यस्य तात्पर्यतो व्याख्यानं सर्वदेवैः अतितरां पूज्यत इति । आङोऽर्थोऽतितरामिति । पूज्यत इत्युक्त्या बलिं पूजां वहन्ति वह प्रापण इति धातो प्रापयन्ति कुर्वन्तीति यावत् । तस्मादित्युक्तं हेतुं व्यनक्ति- **यस्सम्यगिति**। स आत्मा । अंगान्यन्या देवता इति भूरादिशब्दावाच्यानिरुद्धादिमूर्तित्रयाणां महःशब्दवाच्यवासुदेवांगत्वमुक्तम् । तत्र बृहदारण्यकवाक्यं प्रमाणयति- **तस्य भूरिति शिर इति** । 'य एष एतस्मिन्मण्डले पुरुष' इति पूर्ववाक्यमप्यत्र ग्राह्यम् । इत्यादीत्यादिपदेन योऽयं दक्षिणेऽक्षन् पुरुषः

तस्य भूरिति शिर इत्युत्तरखंडस्थवाक्यग्रहणम्। तथाच योऽयं एतस्मिन्सूर्यमण्डले दक्षिणेऽक्षन् अक्षणि च पुरुषो वासुदेवस्तस्य भूर्नामानिरुद्धः शिर इत्यर्थः । भूरित्यस्य शिरस्त्वे युक्तिमाह- **एकं शिर इत्यादि** । शिर एकं एतदक्षरं भूरित्येतदक्षरमप्येकं अतः तद्वाच्यो अनिरुद्धः शिर इत्यर्थः । एवमुत्तरत्रापि योज्यम् । प्रतितिष्ठति आभ्यामिति प्रतिष्ठे पादौ । यथोक्तं बृहद्भाष्ये । 'स वासुदेवो भगवानादित्यस्थो जनार्दनः' । 'स एव दक्षिणाक्षिस्थश्च' इत्यादि ।

ननु 'चतस्रः चतस्रो व्याहृतयः' 'ता यो वेद' इत्येतदेवं षोडशरूपाणां ज्ञानयोग्यश्चतुर्मुख इति प्रमाणेन सर्वव्याहृतिवेत्ता ब्रह्मेति व्याख्यातम् । तदयुक्तं 'तासामु ह स्मै तां चतुर्थीं' 'माहाचमस्यः प्रवेदयते' इत्युपक्रमे तासां तिसृणां व्याहृतीनां मह इत्येतां व्याहृतिं माहाचमस्यो ब्रह्मा चतुर्थीं चतुर्थीत्वेन वेदयते जानातीति ब्रह्मणो विशिष्य चतुर्थव्याहृतिज्ञानवत्त्वोक्तिविरोधादित्यतः तासामु ह स्मै तां चतुर्थीम् इति वाक्यं अध्याहारपूर्वकं सम्यग्व्याचष्टे- **सर्वव्याहृतीनामिति**। भूरादिचतसृणां व्याहृतीनां प्रवेत्ताऽपीत्यध्याहारकरणादुक्तशंकानिरास इति ज्ञेयम्। रुद्रादीनामपि व्याहृतिवेत्तृत्वात्प्रेत्युपसर्गः । चतुर्थीमित्यस्यार्थश्चतुर्थीत्वेनेति । एतां मह इति व्याहृतिं विशेषो विशिष्यवचनं युक्त इति शेषः । अनिरुद्धादिचतुर्षु मूर्तिषु भूरादिशब्दचतुष्टयप्रवृत्तौ निमित्तं दर्शयति- **भूर्नामेति** । स्पूर्तिरूपत्वात्स्वप्रकाशस्वरूपत्वादित्यर्थः । भूशब्दः पूर्णार्थकभूरिवाची । वशब्दः पराक्रमापरपर्यायवीर्यवाचीत्यभिप्रायेण भूरिवीर्यत्वत इत्युक्तम् । वशब्दः शरीरबलवाचीत्यभिप्रेत्य सुबलरूपत्वादि-त्युक्तम् । तद्ब्रह्मेत्यत्राव्यवधानेन प्रकृतस्य महोनामकव्याहृतिप्रतिपाद्यस्य वासुदेवस्यैव गुणपूर्णत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय तद्वाक्यं व्याचष्टे- **तदेतदिति** । चतुराकारं भूरादिशब्दचतुष्टयेनाक्रियमाणं तदेतदनिरुद्धादि-

मूर्तिचतुष्टयमपि गुणबृंहणाद्धेतोर्ब्रह्मेत्युक्तमित्यर्थः । तदेतत् चतुराकारम् इति **श्रौततच्छब्दार्थ** इत्यवधेयम् ।

तथाचायं तच्छब्दः पूर्वप्रकृतमूर्तिचतुष्टयपरामर्शक एव नाव्यवहित-वासुदेवमात्रपरामर्शक इति भावः । स आत्मा अंगान्यन्या देवता इति वाक्यं प्रकारान्तरेण प्रमाणेन व्याचष्टे- **स आत्मेति** । स इत्यनूद्य चतुरात्मा जनार्दन इति व्याख्यातम् । सर्वदेवानामात्मा स्वामीत्यर्थः । अंगमिति समुदायापेक्षमेकवचनम् । तस्यार्थमाह- **आगंतुकत्वत इति** । भगवता जातत्वादिति भावः । तथाचांगानि अप्रधानानि परिवारतया सेवका इति यावदित्यर्थ उक्तो भवति । ता वा एताश्चतस्र इति वाक्यं एवं षोडशरूपोऽसाविति प्रमाणेन व्याख्यातम् । तत्रैव प्रमाणान्तरमाह- **वासुदेवादीति** । वासुदेवादिरूपोऽसौ जनार्दनो यतः चतुश्चतुः चतुर्गुणितचतुःसंख्यया युक्तोऽतः षोडशात्मेत्यर्थः । मह इति ब्रह्मेत्यस्यार्थः- **स एवेति** । वासुदेवरूपी जनार्दन एवेत्यर्थः । सर्ववेदोक्त इत्यनेन पूर्वोदाहृतप्रमाणे वेदानां समुदायेऽखिले स्थित इत्येतत्प्रतिपाद्यतया स्थित इति व्याख्येयमिति सूचितं भवतीति ज्ञातव्यम् । ननु स एव सर्ववेदोक्त इति कथं ब्रह्मादीनामपि तत्तद्विद्योक्तत्वादित्यत आह- **सर्वविद्यास्विति** । सर्वविद्यासु च सर्वविद्यास्वपि अयमेवेश्वरो मुख्यप्रतिपाद्य इत्यर्थः । ब्रह्मादीनां चामुख्यप्रतिपाद्यत्वाद्युक्तमवधारणमिति भावः ।

यद्वा सर्वविद्यासु चोक्त इति बुद्ध्या विवेकेन योज्यम् । तथाच स एवेश्वरः सर्ववेदोक्तो यतोऽतस्तदंतर्गतासु सर्वविद्यासु चोक्तः प्रतिपाद्य इत्यर्थः । ननु सर्वस्यापि वेदस्येश्वरविषयता कुत इति चेत् तद्व्याख्येय-प्रणववाच्यत्वादिति वदामः । तथाहि । ॐकारस्तावत् भगवतः ईश्वरस्य वाचकः ॐइति ब्रह्मेति श्रुतेः किमेतावता । नहि प्रणव एव वेद इति चेत् प्रणवार्थतया तावत्परमेश्वरस्य व्याहृत्यर्थतावगम्यते कुत इत्यत आह-

**प्रणवार्था व्याहृतय इति** । तिस्रो व्याहृतयो वर्णत्रयात्मकोंकारार्थ-प्रतिपादिकास्तद्व्याख्यानरूपा इति यावत् । तथाच व्याख्यानव्याख्येय-योश्चैकविषयता सुप्रसिद्धेति । अनेन व्याहृतीनामग्निवायुसूर्यदेवताकत्व प्रसिद्ध्या तत्प्रतिपादकत्वभ्रांतिरप्यपास्ता । अग्न्यादीनामभिमानि-देवतात्वेनापि प्रसिद्ध्युपपत्तेः । अन्यथा भगवत्परप्रणवव्याख्यान-रूपतानुपपत्तिप्रसंग इति भावः । किमतो नहि व्याहृतय एव वेद इति चेन्न । व्याहृत्यर्थतया परमेश्वरस्य गायत्रीप्रतिपाद्यतावगम्यते । त्रिपदाया गायत्र्या व्याहृतित्रयव्याख्यानरूपत्वस्यागमसिद्धत्वादित्याशयेनाह-**व्याहृत्यर्थेति** । अत्र व्याहृत्यर्थेति पदं छेद्यम् । गायत्रीति शेषः ।

ननु गायत्र्यां यो भर्गो नोऽस्माकं धियः प्रचोदयात्प्रेरयेत्तस्य सवितुर्देवस्य तत् वरेण्यरूपं धीमहीति भर्गनामकः सविता प्रतिपाद्यो दृश्यते तत्कथं भगवत्परत्वमिति चेन्न । भरणगमनयोगेन जगत्प्रसवहेतुत्वेन च भगवानेव भर्गसवितृशब्दयोरर्थो न सूर्यः । तथात्वे गायत्र्याः भगवत्पर-व्याहृत्यर्थतानुपपत्तेः । 'ध्येयस्सदा सवितृमण्डलमध्यवर्ती नारायणः' इत्याद्यागमविरुद्धत्वाच्चेति भावः । अस्तु गायत्र्यर्थो नारायणः किमेतावतापि । नहि गायत्र्येव वेद इति चेन्न । गायत्र्यर्थत्वात्पुरुषसूक्तार्थोऽपि स एवेति सिध्यति । वर्गत्रयात्मकस्य तस्य त्रिपदा गायत्रीव्याख्यानरूपतायाः तद्भेदः पौरुषं सूक्तम् इत्याद्यागमसिद्धत्वादित्याशयेनाह- **व्याहृत्यर्था इति** । नारायणस्य सम्यग्व्याहरणात् व्याहृतिर्गायत्री । तदर्थाः पुरुषसूक्तगतास्त्रयो वर्गा इति शेषः । पुरुषसूक्ते च न पुरुषपशोर्हिरण्यगर्भस्य वा प्रतिपाद्यत्वं शंक्यम् । पूर्णत्वादिना निमित्तेन तस्यैव परमेश्वरस्य पुरुषशब्दवाच्यत्वात् । 'यथैव पौरुषं सूक्तं विष्णोरेवाभिधायकम् । सर्वतः पौरुषे सूक्ते गुणाविष्णोरुदीरिता' इत्याद्यागमाच्च । अन्यथा नारायणपरगायत्रीव्याख्यान-रूपताया अनुपपत्तिप्रसंगादिति भावः । नन्वेवं सिद्धे विष्णोः

पुरुषसूक्तार्थत्वे किंस्यात् नहि पुरुषसूक्तमेव वेद इति चेत् पुरुषसूक्तार्थत्वेन भगवतः सर्ववेदार्थत्वमेव सिद्धम् । वेदाः पुरुषसूक्तगा इत्यागमेन वेदानां पुरुषसूक्तार्थताया अवगतत्वादित्याह- **व्याहृत्यार्था ऋगादय इति** । सर्ववेदोक्तसर्वस्वव्याहृतेर्हेतोः व्याहृतिशब्देन वर्गत्रयात्मकं पुरुषसूक्तं ग्राह्यम् । इतिहासपुराणं चेति द्वन्द्वैकवद्भावः । इतिहासः पुराणं चेत्यपि क्वचित्पाठः । न सर्वमपि पञ्चरात्रं प्रमाणं वासुदेवात्संकर्षणो नामजीवो जायत इत्यादिनाऽ-सम्भाविताया एव जीवोत्पत्तेस्तत्राभिधानादेतेषां जीवजननादिप्रतिपादक-वाक्यानामप्रामाण्यमेवेति केचित् तन्निरासाय सर्वश इत्युक्तम् । तथाच यथाजीवजननादिप्रतिपादकवाक्यत्वं नास्ति तत्प्रकारश्च जीवाभिमानिशेषस्य नाम्ना संकर्षणस्य तु इत्यनुव्याख्यानोक्तरीत्या द्रष्टव्यः ।

तथाच ऋगादय श्चत्वार इतिहासपुराणं सर्वशः समस्तं पंचरात्रं चेत्येते सर्वे ग्रंथा व्याहृत्यर्थपुरुषसूक्तार्थास्तद्व्याख्यानरूपा इत्यर्थः । ननु सर्ववेदानां कार्यपरत्वोक्तेः कथमीश्वरपरत्वमिति चेन्न । इष्टेष्टसाधनतातिरिक्त-कार्यत्वस्याप्रामाणिकत्वात् । भगवत एवेष्टत्वादिष्टसाधनत्वाच्च । यथोक्त-मनुव्याख्याने । 'तदिष्टंसाधनंतथा । कार्यं साधनमिष्टस्य भगवानिष्टदेवता । मुख्येष्टं वा सुमनसाम्' इति । अन्यथा भगवत्परपुरुषसूक्तव्याख्यान-रूपतानुपपत्तिरिति भावः । 'सर्वे वेदा यत्पदमामनन्ति' इत्यादि श्रुतिसिद्धमपि भगवतः ईश्वरस्य सर्ववेदार्थत्वं न्यायेनोपपादयितुं प्रमाणकर्तुः प्रयत्नः । अनेनेश्वरः सर्ववेदार्थो भवितुमर्हति सर्ववेदव्याख्येयपुरुषसूक्त-व्याख्येयगायत्रीव्याख्येयव्याहृतिव्याख्येयोंकारार्थत्वात् । यो यद्व्याख्येयार्थः स तदर्थो यथा सम्प्रतिपन्न इत्यनुमानमुक्तं भवतीति द्रष्टव्यम् ।

स्यादेतत् ईश्वरः सर्ववेदार्थस्तद्व्याख्येयोंकारार्थत्वात् यो यद्व्याख्येयार्थः स तदर्थो यथासम्प्रतिपन्न इति वा सर्वो वेद ईश्वरपरः तत्परोंकार-व्याख्यानरूपत्वादिति वा साक्षादेवानुमानं किं न क्रियते । तद्यथा शंकुना

सर्वाणि पर्णानि संतृण्णान्येव ओंकारेण सर्वा वाक् संतृण्णेत्यादिश्रुत्या हेत्वर्थसमर्थनं भविष्यति । किमनेन परम्पराश्रयणेन । सत्यम् । तथापि तद्यथेति वाक्यान्तरबलेनापि न सर्वावागोंकारव्याख्यानं साक्षात् किंनामोक्तप्रकारेण परंपरयैवेति ज्ञापयितुमेव युक्तम् परम्पराश्रयणमित्यदोषः । प्रसंगात् भूरादिचतुर्णां व्याहृतिशब्दवाच्यत्वं कुत इत्याशंकायां तेषु व्याहृतिशब्दं निर्वक्ति- **सम्यगिति** । विष्णोः सम्यग्व्याहरणात् प्रतिपादनात् व्याहृतयस्त्विति श्रुताः श्रुत्युक्ताः भूरादय इति शेषः । प्रकारांतरेणार्थमाह- **सर्वेति** । उ शब्द एवार्थे । सर्ववेदोक्तं यत्सर्वस्वं स्फूर्तिरूपत्वभूरिवीर्यत्व-सुबलरूपत्वपूर्णत्वरूपं तस्य व्याहृतेरेव भूरादीनां व्याहृतित्वं व्याहृति-शब्दवाच्यत्वमित्यर्थः । अनभिमतव्यावृत्त्यर्थमवधारणम् । तेन नोक्तवक्ष्यमाणनिर्वचनविरोध इति ज्ञेयम् । पुनरपि प्रकारान्तरेण निर्वक्ति- **विशेषेणेति** । अथवा भक्तं प्रति इमं अनिरुद्धादिरूपिणं विष्णुं विशेषेण इतरमंत्रापेक्षाऽतिशयेनाहरंति अभीष्टदातारं कुर्वंतीति यावत् । इति व्युत्पत्त्या भूरादयो व्याहृतिशब्दवाच्याः स्मृता इत्यर्थः ॥१.१३-१४॥

**श्री.खं-** तथाच भूर्भुवः सुवरिति वेत्यादेरित्थमक्षरयोजना । पूर्वं वेदविद्याभ्यासिनो मेधादिप्राप्त्यर्थं विद्या निरूपिताः इदानीं व्याहृतिनिष्ठां विद्यामाह- **भूर्भुवः सुवरिति वा इत्यादिना** । भूर्भुवः सुवरित्येताः वै प्रसिद्धाः तिस्रो व्याहृतयः विष्णोः सम्यक् व्याहरणात् सर्ववेदोक्त-सर्वस्वव्याहृतेर्वा विशेषेणाहरंति भक्तं प्रति अनिरुद्धादिरूपिणं विष्णुमिति वा व्याहृतिशब्दवाच्याः । तथा व्याहृतयो व्याहृतिवाच्याः भूर्भुवः सुवरित्येताः तिस्रोऽनिरुद्धादिमूर्तयो वै प्रसिद्धाः । तत्र स्फूर्तिरूपत्वादनिरुद्धो भूर्नामा, भूरिवीर्यत्वतः प्रद्युम्नो भुवर्नामा, सुबलरूपत्वात्सुवर्नामा संकर्षणः, माहाचमस्यः अतिचमत्कृतित्वान्महाचमसनामा विष्णुस्तं याति जानातीति माहाचमस्यो ब्रह्मा समस्तव्याहृतीनां प्रवेत्तापि मह इति एतां व्याहृतिं

पूर्णत्वतस्तत्प्रतिपाद्यां वासुदेवाख्यां तासां तिसृणां व्याहृतीनां तत्प्रतिपाद्यानां अनिरुद्धादिमूर्तीनां चतुर्थी चतुर्थीत्वेन प्रवेदयते जानाति इत्येतत् ह स्म प्रसिद्धमित्यर्थः । तत् व्याहृतिचतुष्टयप्रतिपाद्यं अनिरुद्धादि-रूपचतुष्टयं गुणबृंहणाद्ब्रह्मेत्युच्यते । सः मह इति व्याहृतिप्रतिपाद्यस्तन्नामा वासुदेव आत्मा अंगी मध्यदेहः मूलरूपस्य हरेर्मध्यदेहग इति यावत् । तस्य वासुदेवस्य भूरादिव्याहृतिप्रतिपाद्यास्तन्नामिकाः अन्याः विशेष-बलेनैवान्यत्वादिव्यवहारभाजिन्यो देवताः अनिरुद्धादिमूर्तयः अंगानि । तत्र भूर्नामाऽनिरुद्धः शिरः भुवोनामा प्रद्युम्नो बाहू । सुवर्नामा सङ्कर्षणः पादाविति विवेकः । यद्वा सः अनिरुद्धादिचतुरात्मा जनार्दनः आत्मा ब्रह्मादिसर्वदेवानां स्वामी । अन्या देवताः ब्रह्माद्या अंगानि तेनैव जातत्वादागंतुकानि अप्रधानानि परिवारतया सेविका इति यावत्

॥१.१३॥

भूरादिव्याहृतिवाच्यानां तन्नामकानिरुद्धादिमूर्तीनां उपास्त्यर्थमधिष्ठानानि नामांतराणि चाह- **भूरिति वा इत्यादिना** । भूरिति व्याहृतिवाच्योऽनिरुद्धः अयं अपरोक्षः लोकः । भूलोकः तत्र स्थितः । तथा समीपस्थत्वात्प्रकाश-रूपत्वाच्चायं लोकशब्दवाच्यः इत्येतत् वै प्रसिद्धम् । भुव इति व्याहृतिवाच्यः प्रद्युम्नः अंतरिक्षं अंतरिक्षलोकस्थितः । अंतरीक्षणादंतरिक्षशब्दवाच्यश्च । सुवरिति व्याहृतिवाच्यः संकर्षणः असौ परोक्षः इंद्रियागोचर इति यावत् । लोकः स्वर्गलोकः तत्र स्थितः तथा प्राणे स्थितत्वादसुशब्दवाच्यः प्रकाशरूपत्वाल्लोकः असुश्चासौ लोकश्चेत्यसुलोक इति भाष्ये छांदसं समासे विभक्त्यलोपमंगीकृत्यासौ लोक इत्युक्तम् । 'विशेषणं विशेष्येण बहुलम्' इत्यत्र बहुलग्रहणाद्विशेषणयोरेव समासः । तथाच पूर्वयोजनायां पदद्वयम् । अत्रत्वेकं पदमिति द्रष्टव्यम् । मह इति व्याहृतिवाच्यो वासुदेवः आदित्यः आदित्यस्थः वामनरूपेणादितेः सुतत्वादादित्यशब्दवाच्यश्च । महशब्दोऽय-

मकारान्तो नतु सकारान्तः । तथात्वे महरित्यादिप्रयोगापत्तेरिति ज्ञातव्यम् । आदित्यस्य महत्वमुपपादयति- **आदित्येन वावेति** । प्रसिद्धादित्येन सर्वे लोकाः भूम्यंतरिक्षासौलोकाः महीयन्ते प्रकाशदानेन पूज्यन्ते प्रकाश्यन्त इति यावत् । इत्येतत् । वाव प्रसिद्धम् । तथा आदित्येन तत्रस्थेन तन्नामकेन वासुदेवेन सर्वे लोकाः अयं लोकान्तरिक्षासौ लोकशब्दवाच्य अनिरुद्धप्रद्युम्नसंकर्षणा महीयन्ते पूज्यन्ते स्वेच्छयेत्यर्थः । भूः अनिरुद्धः अग्निः अग्न्यन्तर्गतः अग्नौ स्थितत्वादग्निशब्दवाच्यश्च । भुवः प्रद्युम्नो वायुः वाय्वंतर्गतः । जगद्बन्धकत्वाज्जगच्चेष्टकत्वाद्वा वायुशब्दवाच्यश्च । सुवः संकर्षणः आदित्यः तत्रस्थः वामनरूपेणादितेः सुतत्वात्तच्छब्दवाच्यश्च । महो वासुदेवः चन्द्रमाः तत्र स्थितः आल्हादकत्वात् चन्द्रमश्शब्दवाच्यश्च । तस्य महत्त्वमुपपादयति- **चन्द्रमसेति** । सर्वाणि ज्योतींषि अग्निवाय्वादित्याख्यानि चन्द्रमसा महीयन्ते पूज्यन्ते । अलं क्रियन्त इति यावत् । तथा चन्द्रमसा तत्रस्थेन तन्नामकेन वासुदेवेन सर्वाणि ज्योतींषि अग्निवाय्वादित्यसंज्ञकानि अनिरुद्धादीनि महीयन्त इत्यर्थः । एवमुत्तरत्रापि योजना द्रष्टव्या । ऋचः ऋग्वेदान्तर्गतः अर्च्यत्वात्तच्छब्दवाच्यश्च सामानि सामवेदांतर्गतः सर्वरूपेषु समत्वात् सामशब्दवाच्यश्च । यजूंषि यजुर्वेदान्तर्गतः याज्यत्वाद्यजुःशब्दवाच्यश्च । अत्रानिरुद्धादीनां बहुरूपत्वादृच इत्यादिबहुवचनान्तशब्दवाच्यत्वं युक्तमिति द्रष्टव्यम् । ब्रह्म अखिलवेदे प्रतिपाद्यतया स्थितत्वात् बृहत्त्वाद्ब्रह्मशब्दवाच्यश्च । ब्रह्मणा प्रतिपाद्येन निमित्तेन सर्वे वेदाः ऋगाद्याः महीयन्ते शोभन्ते । तथा ब्रह्मणा वेदप्रतिपाद्येन बृहत्त्वात् तच्छब्दवाच्येन च वासुदेवेन सर्वे वेदा ऋगादिशब्दवाच्या अनिरुद्धाद्याः । प्राणः प्राणान्तर्गतः प्रकर्षेण आ सम्यक् ऊर्ध्वलोकं प्रति देवानां नयनात्तच्छब्दवाच्यश्च । अपानः तदन्तर्गतः अप अवाक् आ सम्यक् दैत्यानां नयनात्तच्छब्दवाच्यश्च । व्यानस्तदन्तर्गतः

विविधं यथा स्यात् तथा अनेकप्रकारेणेति यावत् । सत्ताप्रतीतिप्रवृत्ति-दानेन आसम्यक् नयनात्प्रेरणात्तच्छब्दवाच्यश्च । अन्नमन्नस्थः अद्यत्वेन सर्वोपजीव्यत्वेनान्नशब्दवाच्यश्च । अन्नेन प्रसिद्धेन सर्वे प्राणाद्याः महीयन्ते पूज्यन्ते आप्यायिताः भवन्ति । तथान्नेन तत्रस्थेन तच्छब्दवाच्येन वासुदेवेन सर्वे प्राणाः प्राणादिशब्दवाच्या अनिरुद्धाद्याः महीयन्ते इत्यर्थः ।

उपसंहरति- **ता वा एता इति** । अत्रैवं प्रत्येकश इति पदद्वयमध्याहार्यम् । तथाच तावा एताश्चतस्रोऽनिरुद्धादिमूर्तयः एवं भूरिति वा अयं लोक इत्यादिप्रकारेण प्रत्येकशश्चतुर्धा । एवं सति षोडशमूर्तयः सम्पन्ना इत्यर्थः । एवं षोडशमूर्तिवेत्तुः फलमाह- **चतस्रश्चतस्र इति** । या इति शेषः । याश्चतस्रः व्याहृतयो भूरादिव्याहृतिचतुष्टयप्रतिपाद्या अनिरुद्धादिमूर्तयः याश्च प्रत्येकशश्चतस्रश्चतस्रः भूरिति वा अयं लोक इत्यादिप्रकारेण षोडशमूर्तय इति यावत् । ताः यो माहाचमस्यनामा चतुर्मुखो वेद सः सावधारणमेतत् । स एव ब्रह्मवेद सम्यक् परब्रह्मज्ञानी तस्यैव सम्यक् षोडशात्मस्वरूपवित्त्वादिति भावः । तस्मादिति शेषः । अस्यैव सम्यक्षोडशात्मवित्त्वादस्मै सम्यक् षोडशात्मविदे चतुर्मुखाय अमुक्तिगाय मुक्तिगाय च सर्वे देवाः शेषगरुडाद्याः अमुक्ताः मुक्ताश्च बलिं पूजां च आ अतितरां वहन्ति प्रापयन्ति कुर्वन्तीति यावदित्यर्थः ।। १.१४ ।।

**वरद-** वेदतदर्थादिज्ञानसाधनत्वेन व्याहृतिविषयोपास्तिर्निरूप्यते- **भूर्भुवः सुवरित्यादिना** । तद्व्याचष्टे- **भूरादीति** । स आत्मा 'अङ्गान्यन्या देवताः' इत्यस्यार्थः- **देहमध्यग इति** । महोनामा 'मह' इति व्याहृति-प्रतिपाद्यो वासुदेवः देहमध्यगः । भगवतैव विनोदार्थं निर्मितस्य स्वरूपभूतदेहस्य मध्यमभाग इत्यर्थः ।

ननु भूरादिव्याहृतिप्रतिपाद्यरूपाणामपि वासुदेवाभिन्नत्वात् कथमन्या देवता इति वासुदेवादन्यत्वकथनं घटत इत्यत आह- **अनन्य इति** ।

अनिरुद्धादिरूपेण चतुरात्मा विष्णुः परस्परमन्यत्वरहितोऽपि विशेष-बलादन्यशब्देन कीर्त्यत इत्यर्थः । तथापि चतुरात्मेत्याद्युक्त्या हरौ बहुत्वसङ्ख्यादर्शनात् तदविनाभूतभेदापत्तिरित्यत आह- **निर्विशेषोऽपीति** । सङ्ख्यामात्रविशेषो नाम भेदासहचरितसङ्ख्यागुणः तेन बहुत्वसङ्ख्यागुणेन निमित्तेन निर्विशेषो निर्भेदोऽपि हरिश्चतुरात्मा पञ्चात्मेत्यादिशब्दैः प्रतिपाद्यत इत्यर्थः । 'भूरिति वा अयं लोकः' इत्यादेरर्थः- **लोक-ज्योतीत्यादि** । ननु भूरादिलोकस्थितरूपविशेषाणां महःशब्दवाच्यत्वेना-दित्यादिषु स्थितरूपस्य च भगवद्रूपत्वेनाभिन्नत्वात् कथमादित्येन वाव सर्वे वेदा महीयन्ते इत्यादिना पूज्यपूजकभावोक्तिरित्यत आह- **महीयन्त इति** । अनिरुद्धादिरूपी भूरादिशब्दवाच्यः पुरुषोत्तमो लोकज्योतिः-प्राणवेदेषु स्थित इति यदुक्तं तन्न । 'भूरिति वा अयं लोकः' इत्यादौ भूरादिशब्दवाच्यानां लोकादिभिः सामानाधिकरण्यव्यपदेशेन तदभेदोक्ति-विरोधादित्यत आह- **नामेति** । लोकादिनामप्रवृत्तिहेतुगुणयोगेन लोकादिनामवत्वादेव भूरादिशब्दवाच्यस्य विष्णोः लोकादिभिः सामानाधि-करण्योक्तिः, नत्वभेदादित्यर्थः । कथं लोकादिनामप्रवत्तिहेतुगुणयोगित्वं हरेरित्यतस्तद्दर्शयति- **अयमित्यादिना** । लोकशब्दप्रवृत्तिनिमित्तं तु लोकप्रकाशरूपत्वादित्यन्यत्रोक्तमत्रानुसन्धेयम् । 'भूरित्यग्निः' इत्यादौ श्रुताग्न्यादिशब्दानामपि प्रवृत्तिनिमित्तं ब्रह्मणि दर्शयति- **अग्निरित्यादिना** । वयति बध्नाति वयबन्धन इति धातोः । ननु भूरादिव्याहृतिप्रतिपाद्यस्य हरेः ऋग्वेदादिवेदेष्ववस्थितिकथनावसरे मह इति ब्रह्मेति विजातीयम् । ब्रह्म किमर्थमुच्यत इत्यतो ब्रह्मशब्देनापि वेदसमूह एवोच्यते । न तु वेदापेक्षया विजातीयता अस्त्वित्याह- **देवानामिति** । न चैतावता ब्रह्मशब्दवाच्य-वेदराशिसम्बन्धादेव विष्णोरपि ब्रह्मशब्दवाच्यत्वं न स्वत इति मन्तव्य-मित्याह- **तत्सम्बन्धादिति** ।

एवं भूरादिव्याहृतिज्ञानस्य फलमुच्यते- 'ता यो वेद स वेद ब्रह्म सर्वेऽस्मै देवा बलिमावहन्ति' इति । तच्च फलं न सर्वोपासकसाधारणं किन्तु ब्रह्मण एव तस्यैव 'तासामु ह स्मैतां चतुर्थीं महाचमस्य प्रवेदयते' इति व्याहृतिज्ञानित्वेन पूर्वप्रकृतत्वादिति भावेन 'तासामु ह स्मैतां चतुर्थीं महाचमस्य प्रवेदयते' इति वाक्यं व्याख्याति- **महाचमस्येति** । यदुक्तं भूर्भुवस्वरिति व्याहृतिप्रतिपाद्यं वस्तु भगवतः शिरआद्यवयवरूपमिति तत्रैव श्रुत्यन्तरसंवादं चाह- **तस्येति** । ननु यदुक्तं ब्रह्मण एव मुख्यतः सर्वव्याहृतिनेतृत्वात्सर्वदेवपूज्यत्वं फलं तस्यैवेति तन्न । तस्यापि 'तासामु ह स्मै तां चतुर्थीं महाचमस्यः प्रवेदयते मह इति' इत्यत्र विशेष्य-महर्नामकव्याहृतिज्ञत्वस्यैव प्रतीतेः अन्यथा विशेषोक्त्ययोगादित्यत आह-**सर्वेति** । अनिरुद्धादिमूर्तिचतुष्टयं भूरादिव्याहृतिभिर्वाच्यमित्युक्तम् । तत्र केन निमित्तेनानिरुद्धादेः भूरादिशब्दवाच्यत्वमित्यत आह- **भूर्नामेति** । 'तद् ब्रह्म स आत्मा' इत्यस्यार्थान्तरं चाह- **तदेतदिति** । 'ता वा एताश्चतस्रश्चतुर्धा' इत्यस्यार्थो वासुदेवादिरूपोऽसाविति प्रत्येकं रूपचतुष्टयवत् वासुदेवादिरूपी विष्णुः षोडशात्मको वर्तत इति व्याहृत्यर्थत्वादेव सर्ववेदार्थश्च भवति भगवानित्याह- **स एवेति** । सर्वविद्यासु चेश्वर इति वेदातिरिक्तेतिहास-पुराणादिविद्यासु चेश्वर इत्यर्थः । कथं व्याहृत्यर्थत्वेन सर्ववेदाद्यर्थत्वसिद्धि-र्विष्णोरित्यत आह- **प्रणवार्था इति** । व्याहृतीनां सर्ववेदाद्यर्थत्वं व्याहृतिशब्दपर्यालोचनात् विज्ञायत इति भावेन व्याहृतिशब्दार्थमाह-**व्याहृत्यर्था इति** । भूरादिव्याहृतिचतुष्टयप्रतिपाद्यस्य मूर्तिचतुष्टयस्य स्थानान्तरेऽप्यवस्थानमुच्यते ।।१.१३-१४।।

**काशी**- इदानीं व्याहृतीनां सर्ववेदव्याख्येयत्वेन तज्ज्ञानस्यावश्यकत्वात् व्याहृतिनिष्ठां विद्यामाह- **भूरित्यादिना** । अत्र भूः भुवः सुवरित्येता तिस्रो व्याहृतयः प्रसिद्धास्तासां चतुर्थीं व्याहृतिं महइत्येतां महाचमसपुत्रः कश्चित्

ऋषिः प्रवेदयते तदेव ब्रह्म भूरादीनामात्मा च अन्या देवता इत्युपलक्षणं लोकवेददेवप्राणो अङ्गानि यतो लोकादयो व्याहृतयः महरात्मना महीयन्ते वर्धन्ते आत्मनैव ह्यङ्गानां वृद्धिरिति व्याख्या निरासार्थमेतद्विद्याया ब्रह्मविद्यात्वसिद्ध्यर्थं च प्रमाणेनैव व्याचष्टे- **भूरादिति** । भूः भुवः सुवः मह इत्येताभिर्व्याहृतिभिरनिरुद्ध आदिर्यस्य वासुदेवान्तो यस्य तदनिरुद्ध-प्रद्युम्नसङ्कर्षणवासुदेवाख्यरूपचतुष्टयं प्रतिपाद्यमित्यर्थः । भूरित्यादिशब्दानां व्याहृतिशब्दवाच्यत्वमात्रोक्तेर्वैय्यर्थ्यादिति भावः । स आत्मेत्यादेरर्थमाह- **देहमध्यग इति** । रूपचतुष्टयात्मकदेहमध्यगतो मध्यभागः इत्यर्थः । तथा च स आत्मेत्यत्र तच्छब्दो महःशब्दोक्तवासुदेवपरः आत्मशब्दश्च मध्यदेहपर इति भावः । महात्मनः पूर्णरूपस्य तस्य वासुदेवस्य भूर्नामाऽनिरुद्धः शिरः भुवो नामा प्रद्युम्नो बाहू सान्तोऽयं भुवः शब्दः सुवर्नामा सङ्कर्षणः पादाविति सम्बन्धः । एतेनाङ्गान्यन्या देवता इत्युक्तार्थम् । नन्वेवं अन्यशब्दानुपपत्तिः अनिरुद्धादीनां अनन्यत्वात् अत एव चतुष्ठ्वादि-सङ्ख्यायाः प्राधान्याप्राधान्यरूपविशेषाभावादङ्गाङ्गिभावस्य चानुपपत्तिरित्यत आह- **अनन्योऽपीति** । स्वगतभेदशून्योऽपि निर्विशेषोऽपि च भगवान् सङ्ख्या मीयते अनेनेति सङ्ख्यामात्रस्तेन विशेषेण अन्यशब्देन कीर्त्यते चतुरात्मा अङ्गाङ्गिभावापन्नचतुःस्वरूपश्च भवतीत्यर्थः । तथाच विशेषबलादेव तत्रान्यत्वव्यवहारस्य चतुष्ठ्वादिसङ्ख्याया अङ्गाङ्गिभावस्य चोपपत्तिः । तादृशविशेषश्च भगवत्वादेवेति भावः ।।१.१३.।।

तमेवाङ्गाङ्गिभावमुपपादयितुमुच्यते- **भूरिति वायं लोक इत्यादिना** । अत्र भूरादीनां लोकाद्यभेदस्य बाधितत्वादविद्यमानोपासनस्य चानर्थ-हेतुत्वात्तदर्थमाह- **लोकेति** । अत्र लोकशब्देन भूलोकादिचतुष्कं ज्योतिः शब्देनाग्न्यादिचतुष्कं प्राणशब्देन प्राणादिचतुष्कं वेदशब्देन ऋगादिचतुष्कं विवक्षितम् । तथा चायं लोक इत्यादिना लोकादिस्थ एव कीर्तित इति

एवं भूरादिव्याहृतिज्ञानस्य फलमुच्यते- 'ता यो वेद स वेद ब्रह्म सर्वेऽस्मै देवा बलिमावहन्ति' इति । तच्च फलं न सर्वोपासकसाधारणं किन्तु ब्रह्मण एव तस्यैव 'तासामु ह स्मैतां चतुर्थीं महाचमस्य प्रवेदयते' इति व्याहृतिज्ञानित्वेन पूर्वप्रकृतत्वादिति भावेन 'तासामु ह स्मैतां चतुर्थीं महाचमस्य प्रवेदयते' इति वाक्यं व्याख्याति- **महाचमस्येति** । यदुक्तं भूर्भुवस्वरिति व्याहृतिप्रतिपाद्यं वस्तु भगवतः शिरआद्यवयवरूपमिति तत्रैव श्रुत्यन्तरसंवादं चाह- **तस्येति** । ननु यदुक्तं ब्रह्मण एव मुख्यतः सर्वव्याहृतिनेतृत्वात्सर्वदेवपूज्यत्वं फलं तस्यैवेति तन्न । तस्यापि 'तासामु ह स्मै तां चतुर्थीं महाचमस्यः प्रवेदयते मह इति' इत्यत्र विशेष्य-महर्नामकव्याहृतिज्ञत्वस्यैव प्रतीतेः अन्यथा विशेषोक्त्ययोगादित्यत आह- **सर्वेति** । अनिरुद्धादिमूर्तिचतुष्टयं भूरादिव्याहृतिभिर्वाच्यमित्युक्तम् । तत्र केन निमित्तेनानिरुद्धादेः भूरादिशब्दवाच्यत्वमित्यत आह- **भूर्नामेति** । 'तद् ब्रह्म स आत्मा' इत्यस्यार्थान्तरं चाह- **तदेतदिति** । 'ता वा एताश्चतस्रश्चतुर्धा' इत्यस्यार्थो वासुदेवादिरूपोऽसाविति प्रत्येकं रूपचतुष्टयवत् वासुदेवादिरूपी विष्णुः षोडशात्मको वर्तत इति व्याहृत्यर्थत्वादेव सर्ववेदार्थश्च भवति भगवानित्याह- **स एवेति** । सर्वविद्यासु चेश्वर इति वेदातिरिक्तेतिहास-पुराणादिविद्यासु चेश्वर इत्यर्थः । कथं व्याहृत्यर्थत्वेन सर्ववेदाद्यर्थत्वसिद्धि-र्विष्णोरित्यत आह- **प्रणवार्था इति** । व्याहृतीनां सर्ववेदाद्यर्थत्वं व्याहृतिशब्दपर्यालोचनात् विज्ञायत इति भावेन व्याहृतिशब्दार्थमाह- **व्याहृत्यर्था इति** । भूरादिव्याहृतिचतुष्टयप्रतिपाद्यस्य मूर्तिचतुष्टयस्य स्थानान्तरेऽप्यवस्थानमुच्यते ।।१.१३-१४।।

**काशी-** इदानीं व्याहृतीनां सर्ववेदव्याख्येयत्वेन तज्ज्ञानस्यावश्यकत्वात् व्याहृतिनिष्ठां विद्यामाह- **भूरित्यादिना** । अत्र भूः भुवः सुवरित्येता तिस्रो व्याहृतयः प्रसिद्धास्तासां चतुर्थीं व्याहृतिं महइत्येतां महाचमसपुत्रः कश्चित्

ऋषिः प्रवेदयते तदेव ब्रह्म भूरादीनामात्मा च अन्या देवता इत्युपलक्षणं लोकवेददेवप्राणो अङ्गानि यतो लोकादयो व्याहृतयः महरात्मना महीयन्ते वर्धन्ते आत्मनैव ह्यङ्गानां वृद्धिरिति व्याख्या निरासार्थमेतद्विद्याया ब्रह्मविद्यात्वसिद्ध्यर्थं च प्रमाणेनैव व्याचष्टे- **भूरादिति** । भूः भुवः सुवः मह इत्येताभिव्याहृतिभिरनिरुद्ध आदिर्यस्य वासुदेवान्तो यस्य तदनिरुद्ध-प्रद्युम्नसङ्कर्षणवासुदेवाख्यरूपचतुष्टयं प्रतिपाद्यमित्यर्थः । भूरित्यादिशब्दानां व्याहृतिशब्दवाच्यत्वमात्रोक्तेर्वैय्यर्थ्यादिति भावः । स आत्मेत्यादेरर्थमाह- **देहमध्यग इति** । रूपचतुष्टयात्मकदेहमध्यगतो मध्यभागः इत्यर्थः । तथा च स आत्मेत्यत्र तच्छब्दो महःशब्दोक्तवासुदेवपरः आत्मशब्दश्च मध्यदेहपर इति भावः । महात्मनः पूर्णरूपस्य तस्य वासुदेवस्य भूर्नामाऽनिरुद्धः शिरः भुवो नामा प्रद्युम्नो बाहू सान्तोऽयं भुवः शब्दः सुवर्नामा सङ्कर्षणः पादाविति सम्बन्धः । एतेनाङ्गान्यन्या देवता इत्युक्तार्थम् । नन्वेवं अन्यशब्दानुपपत्तिः अनिरुद्धादीनां अनन्यत्वात् अत एव चतुष्ठ्वादि-सङ्ख्यायाः प्राधान्याप्राधान्यरूपविशेषाभावादङ्गाङ्गिभावस्य चानुपपत्तिरित्यत आह- **अनन्योऽपीति** । स्वगतभेदशून्योऽपि निर्विशेषोऽपि च भगवान् सङ्ख्या मीयते अनेनेति सङ्ख्यामात्रस्तेन विशेषेण अन्यशब्देन कीर्त्यते चतुरात्मा अङ्गाङ्गिभावापन्नचतुःस्वरूपश्च भवतीत्यर्थः । तथाच विशेषबलादेव तत्रान्यत्वव्यवहारस्य चतुष्ठ्वादिसङ्ख्याया अङ्गाङ्गिभावस्य चोपपत्तिः । तादृशविशेषश्च भगवत्वादेवेति भावः ।।१.१३.।।

तमेवाङ्गाङ्गिभावमुपपादयितुमुच्यते- **भूरिति वायं लोक इत्यादिना** । अत्र भूरादीनां लोकाद्यभेदस्य बाधितत्वादविद्यमानोपासनस्य चानर्थ-हेतुत्वात्तदर्थमाह- **लोकेति** । अत्र लोकशब्देन भूलोकादिचतुष्कं ज्योतिः शब्देनाग्न्यादिचतुष्कं प्राणशब्देन प्राणादिचतुष्कं वेदशब्देन ऋगादिचतुष्कं विवक्षितम् । तथा चायं लोक इत्यादिना लोकादिस्थ एव कीर्तित इति

नोक्तानुपपत्तिरिति भावः । **यद्यपि श्रौतक्रमेण वेदप्राणेष्विति** वक्तव्यं तथापि सृष्टेषु लोकेषु तदाश्रिताग्न्यादिसृष्टिस्ततः प्राणादिमद्देहसृष्टिस्ततो वेदाभिव्यक्तिरिति भावेन **प्राणवेदेष्वित्युक्तम्** । उपसनायां मृगादिगत-रूपाभिव्यक्तौ सत्यां प्राणादिगतरूपाभिव्यक्तिरिति ज्ञापनाय श्रुतौ ऋगादेः पूर्वमुक्तिः ।

नन्वेवं अनिरुद्धादीनां स्थानभूतभूम्यादिवद्भेदस्तारतम्यं च स्यादित्यत उक्तम्- **एकः पुरुषोत्तम इति** । सर्वत्रैक एव पुरुषोत्तम एव नतु भेदतारतम्योपेत इत्यर्थः । अधिष्ठानभूतभूम्यादितारतम्यं तु स्वतन्त्र-तदिच्छाधीनमिति भावः । नन्वेकस्यैवानेकसङ्ख्यावत्वे भूम्यादि-ष्वनिरुद्धादिरूपो हरिः किमेकैकरूपेण तिष्ठत्युतानेकरूपैरित्यपेक्षायामाह- **प्रत्येकश इति** । अनिरुद्धादीनां प्रत्येकं चतुर्मूर्तित्वात् भूम्यग्निप्राणऋक्षु अनिरुद्धमूर्तयश्चतस्रः अन्तरिक्षवाय्वपानसामसु प्रद्युम्नमूर्तयश्चतस्रः स्वर्गादि-त्यव्यानयजुःसु सङ्कर्षणमूर्तयश्चतस्रः आदित्यचन्द्रब्रह्मान्नेषु वासुदेवमूर्तय-श्चतस्र इत्येवं षोडशमूर्तिरित्यर्थः । चतुर्धेति चतुर्विधत्वोक्त्या प्रत्येक-मनिरुद्धादीनाम् अतिबहुत्वमिति प्रतीतिनिरासाय चतस्रश्चतस्रो व्याहृतयः इत्युच्यते । अनिरुद्धाद्याश्चतस्रः प्रत्येकं चतस्र एवेत्यर्थः । एतदभिप्रायेण चातुरात्म्यादित्युक्तं अन्यथा चातुर्विध्यादित्यवक्ष्यत् । चतुर्धेत्युक्तिस्तु लोकादिनामप्रवृत्तिनिमित्तगुणभेदेनेत्येकः सम्प्रदायः । अन्यस्तु चतुर्धेति धाल् प्रत्ययस्वारस्यादनिरुद्धादयोऽनिरुद्धप्रद्युम्नसंकर्षवासुदेवरूपैश्चतुर्धेत्यर्थः । तथाच अनिरुद्धानिरुद्धः अन्तरिक्षेऽनिरुद्धप्रद्युम्नः स्वर्गे अनिरुद्धसंकर्षणः आदित्येऽनिरुद्धवासुदेवः एवमग्नौ प्रद्युम्नानिरुद्ध इत्यादिरीत्या षोडशमूर्तय इति । आदित्येन वाव सर्वे लोका महीयन्ते प्रकाश्यन्ते इत्याद्यर्थस्य सुप्रसिद्धत्वादवक्तव्यतेत्यत तदर्थमाह- **महीयत इति** । आदित्यादिना निमित्तेनान्यैर्महीयन्त इति प्रतीतिवारणाय महति चेत्युक्तम् - **पूज्येति** ।

न केवलं पूज्यते किन्तु पूजयति चेत्यर्थः । नन्वेवं पूज्यपूजकरूपयो-रुत्कृष्टापकृष्टभावादिः स्यादित्यत आह अत्र हरिरूपेषु पूज्यपूजकयोर्भेदः उत्कृष्टापकृष्टनियन्तृनियम्यभावादिर्नेष्यते किन्तु प्रकाश्यप्रकाशकभावादि-रूपः पूज्यपूजकभावः अत एव वासुदेवाधिष्ठितस्यादित्यस्य प्रकाशकत्वं अनिरुद्धाद्यधिष्ठितानां लोकानां प्रकाश्यत्वं चेति भावः । नन्वयं लोक इत्यादेर्लोकादिस्थपरत्वे लक्षणा मुख्यार्थत्वानुपपत्तिरत आह- **नामेति** । नाम्नां प्रवृत्तिहेतवः प्रकाशरूपत्वादयो यस्मिन् स तथा तस्य भावस्तत्त्वं तस्मात् लोकादिशब्दप्रवृत्तिनिमित्तवत्वात् लोक इत्यादिकं लोकादिस्थस्य हरेर्नामवाचकमेवेत्यर्थः । अयं लोक इत्यादौ सप्तम्याः प्रथमादेशमङ्गीकृत्य लोकज्योतिःप्राणवेदेष्विति व्याख्याय प्रथमान्तत्वमेवोपेत्यापि व्याख्याति । नामेत्यादिनेत्यप्याहुः श्रुतावयं शब्दस्यादिमत्वेऽपि विशेषणत्वेनाप्राधान्या-द्विशेष्यस्य लोकशब्दस्यात्र मुखतो ग्रहणम् । नामप्रवृत्तिहेतुमत्वं विवृणोति- **अयमिति** ।

यद्यपीदमदःशब्दयोरपरोक्षत्वपरोक्षत्वे प्रवृत्तिनिमित्ते तथापि भूलोकगतेऽपि हरावपरोक्षत्वस्यासम्भवात् परोक्षत्वस्य चातिप्रसक्तत्वात् अपरोक्षत्व-परोक्षस्थत्वयोर्ग्रहणाय समीपस्थत्वप्राणस्थत्वयोरुपादानं तथा च समीपस्थत्वेन पृथिव्यामस्थितत्वेनापरोक्षत्वप्रदत्वादयमिति कीर्तितः । प्राणे वायावेव स्थितत्वात् स्वर्गादेः परोक्षत्वप्रदत्वादसाविति कीर्तित इत्यर्थः। अस्मादेव वचनात्समीपस्थत्वमपीदं शब्दप्रवृत्तिनिमित्तमित्यसत् । इदमिति च दृश्यमानसन्निहितत्वादिति सूत्रभाष्ये लक्षणाङ्गीकारविरोधात् असावित्यस्य तु सप्तम्यन्तासुशब्दरूपत्वेऽपि न विरोधः । 'प्राणे स्थितत्वतः' इति व्याख्यानोपपत्तेः । सुवः सुबलरूपत्वेनेति वचनात्पूर्णबलरूपत्वेन सुवःशब्दवाच्यस्य सङ्कर्षणस्य सन्निधानाद्वायोरपि पूर्णबलरूपत्वमिति ज्ञापनाय वायुस्थत्वोक्तेः स्वारस्याच्च । ईक्षणादित्यस्यान्तरित्यादिः भूःस्वर्गयोरन्तराले ज्ञानिनिरीक्षणादित्यर्थः ।

यद्वा अन्तःस्थित्वा जगदीक्षणादित्यर्थः । अत एवान्तःशब्दस्य भूः स्वर्गरूपप्रतिसम्बन्धिसापेक्षत्वात्पूर्वश्रुतस्याप्यन्तरिक्षशब्दस्य तदनन्तरं व्याख्यानम् । अदितेः सुत आदित्य इति कीर्त्तितः अग्रे पूज्यतामग्रे प्रथमपूज्यत्वादित्यर्थः । अग्रे प्रळये स्थितत्वादित्यर्थः । यत् यस्मात् जगद्वयति बध्नाति धारयतीति यावत् तस्माद्वायुरिति कीर्तितः । आह्लादो हर्षः तद्रूपत्वाच्चन्द्रः अर्च्यत्वात् ऋक् । याज्यस्वरूपत्वात् यज्ञभोक्तृरूपत्वात् यजुः असौ जनार्दनः समत्वतः सर्वरूपेष्वेकप्रकारत्वात् सर्वेषां कर्मानुसारिफलप्रदत्वेनावैषम्यात् साम । बृहत्वात् गुणतश्च पूर्णत्वात् ब्रह्म मह इति ब्रह्मेत्यत्र विवक्षितं रूपमाह वेदानामिति अखिले निःशेषे नन्वेवं वेदराशौ ब्रह्मशब्दस्य कथं प्रसिद्धिरित्यत आह- **सम्बन्धादिति** । ब्रह्मशब्दमुख्यवाच्यपरमात्मा - धिष्ठितत्वादमुख्यवाच्यता वेदराशेरिति भावः । एतेन वेदराशिरप्यमुख्य-वृत्या ब्रह्मशब्देनात्र विवक्षित इति सूचितम् । अयं लोक इत्यादावप्ययं न्यायो द्रष्टव्यः । प्रकृष्टमिति क्रियाविशेषणं प्रकर्षेण आसमन्तात् उन्नयति उत्तमानिति प्राणः अप अवाक् आसमन्तात् नयति अधमानित्यपानः । विविधं विविधत्वेन मिश्रत्वेन आ समन्तात् नयति मध्यमानिति व्यान इत्यर्थः ।

यद्वा प्राणादिगतप्रकृष्टनयनादिहेतुत्वात्प्राणादिरित्यर्थः । सर्वेषां प्राणिनामुपजीव्यतः उपजीव्यत्वादन्नमित्युच्यते अद्यते उपजीव्यत इति व्युत्पत्तेः । यद्यप्यद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत इत्यतृत्व-मप्यन्नशब्दप्रवृत्तिनिमित्तं वक्ष्यते तथाप्यन्नेन वा व सर्वे प्राणा महीयन्त इत्युपजीव्यत्वस्यैवात्रोक्त्या तस्यैव ग्रहणं नन्वेकस्यैवादित्यस्य चतुष्कद्वये प्रवेशात्कथं षोडशत्वमित्याशङ्क्य परिहरन्नुपसंहरति- **एवमिति** । आदित्यस्य रूपद्वयविवक्षयेत्यर्थः । आदित्यशब्देन प्रसिद्धादित्यविवक्षायामेव षोडशत्वानुपपत्तेरिति भावः । अत्र ता यो वेद स वेद ब्रह्म सर्वेऽस्मै देवा बलिमावहन्तीत्यनेन व्याहृतिवेत्तुः सर्वदेवपूज्यत्वादिकं फलमुच्यते । तच्च न

सर्वसाधारणं उपक्रमे माहाचमस्य इत्यनेन ब्रह्मण एव व्याहृतिवेत्तृत्वो-क्तेरित्याशयेन तद्वाक्यमत्रैव व्याचष्टे- **महाचमसेति** । यस्मादति चमत्कृतिः अत्याश्चर्यकारि तस्मात् महाचमसनामकोऽसौ हरिः तत्सम्बधिज्ञानं माहाचमसं तद्याति प्राप्नोतीति माहाचमस्यः ब्रह्मेत्यर्थः ।

यद्वा महाचमसं जानातीत्यर्थे ण्यः आदिवृद्धिः । इदानीं ता यो वेदेत्यादिकं व्याचष्टे- **एवमिति** । एवमुक्तप्रकारेण मुक्तिगोऽपि अतितरामित्याभ्यां सर्वदा सर्वप्रकारेण इत्याङोऽर्थः सूचितः । तथा च यो ब्रह्मान्ताः षोडशव्याहृतीः वेद स एव ब्रह्म सम्यग्वेदेति तस्मादस्मै चतुर्मुखाय सर्वे रुद्राद्या देवा आ समन्तात् सर्वदा संसारे मुक्तौ सर्वदा सर्वप्रकारेण बलिं पूजां वहन्ति कुर्वन्तीति श्रुत्यर्थ उक्तो भवति । नन्वितरेषां व्याहृतिज्ञानायोग्यत्वे तदुपदेशवैय्यर्थ्यं अस्मदादीनां तद्वाक्यादर्थबोधानुपपत्तिश्चेत्यतस्ता यो वेद स वेद ब्रह्मेत्यस्य विवक्षितार्थं स्पष्टयति- **य इति** । वेदेत्यनेन सम्यज्ज्ञानमेव विवक्षितं तच्च ब्रह्मण एव अन्येषां तु यथा योग्यमेवेति भावः । सम्यक्त्वं च जीवान्तरावेद्य-विशेषविषयकत्वं तज्जातीयस्पष्टताधिकस्पष्टतावत्त्वं चेत्यवधेयम् । भूरादिवाच्यं शिर आद्यंगमित्युक्तं तदुपपादकश्रुतिमाह- **भूरिति** । आदित्यमण्डलस्थस्य वासुदेवस्य भूरिति शब्दवाच्यमनिरुद्धाख्यरूपं शिरः तदुपपादयति- **एकमिति** । वाचकस्यैकत्वाद्वाच्यस्यैकत्वं अनेकेषामेक-वाचकत्वेऽक्षरान्तरवैय्यर्थ्यात् एकस्यानेकवाचकत्वं तु सकृदुच्चरितः शब्दः सकृदेवार्थं गमयतीति न्यायविरुद्धमिति भावः । द्वे एते अक्षरे प्रत्येकं द्वयोर्वाचके तदुक्तं बृहद्भाष्ये 'उत्पादनाद्भुनामा स्याद्दक्षिणो बाहुरस्य तु । विनाशनाद्व इत्युक्तः सव्यो बाहुः परात्मनः'। 'स्वित्यानन्दः समुद्दिष्टो वरिति ज्ञानमुच्यते । मुक्तिदानेन तद्दानात्सुवरस्य पदद्वयम्' । 'दक्षिणश्चैव सव्यश्च क्रमाद्वर्णद्वयोदितौ । पादावस्य हि तत्प्राप्तिर्मुक्तिरित्यभिधीयत'

इति । यद्यप्येषा श्रुतिरक्ष्यादित्यमण्डलस्थभगवद्रूपविषये प्रवृत्ता तथापि तन्न्यायेन रूपान्तरावयवानामपि तथैव तच्छब्दवाच्यतेति भावः ।

नन्वेवं षोडशरूपाणां ज्ञानयोग्यश्चतुर्मुख इत्युक्तं 'तासामु ह स्मैतां चतुर्थीं माहाचमस्यः प्रवेदयते' इति चतुर्मुखस्य चतुर्थव्याहृतिवेत्तृत्वस्यैव श्रुतत्वादित्याशङ्कां निराह- **सर्वव्याहृतीनामिति** । तासां चतुर्थीमित्येतन्नोप-लक्षणम् । येन तासां या चतुर्थी तामेव प्रवेदयत इत्यर्थः स्यात् किन्तु विशेषणं तथा सति तासां चतुष्ट्वसंख्यापूरकत्वेनैतां प्रवेदयत इत्यर्थो लभ्यते तेन सर्वव्याहृतिप्रवेत्तृत्वमेव सिध्यति विशिष्टज्ञानस्य विशेषणादिज्ञाननियतत्वात् । न चैवं चतस्रो व्याहृतयः तां माहाचमस्यः प्रवेदयत इत्येव निर्देशः स्यादिति न शङ्क्यं, यतः तिस्रः प्रसिद्धास्तासां चतुर्थीत्वेनैतां ब्रह्मैव प्रवेत्तीति विशेषोऽत्र विवक्षितोऽत एवं विशेषोक्तिरिति भावः । 'भूरादिव्याहृतिभिस्तु वाच्यं मूर्तिचतुष्टयम्' इत्युक्तम् । तत्र निमित्ताकाङ्क्षायामाह- **भूर्नामेति** । स्फूर्तिः प्रतिभा ज्ञप्तिविशेषः भूरिर्वीर्यत्वात् पूर्णपराक्रमत्वात् भुवः, भूशब्दस्य पूर्णार्थत्वात् सान्तस्य वःशब्दस्य वीर्यार्थत्वादिति भावः । अत्र भुवःशब्दस्य बाहुद्वये खण्डशः पृथग्वृत्तावपि प्रद्युम्नाख्यैकरूपेणैका वृत्तिः, एवं सुवःशब्दस्यापीति बोध्यम् । सुबलरूपत्वात् पूर्णबलात्मकत्वात् रेफान्तस्य वरित्यस्य बलार्थत्वादिति भावः । पूर्णत्वतः नित्यव्याप्तत्वात् । तद्ब्रह्मेत्यत्र तच्छब्दस्य महः शब्दोक्तवासुदेवमात्रपरामर्शकत्वप्रतीतिनिरासाय तदर्थमाह- **तदेतदिति** । तच्छब्दपरामृश्यं एतत् भूरादिशब्दचतुष्टयोक्तं चतुर्णामाकाराणां समाहारश्चतुराकारं अनिरुद्धादिरूपचतुष्टयं न तु वासुदेवमात्रं गुणबृंहणात् स्वात्मनि गुणपूरणान्निमित्ताद्ब्रह्मेत्युक्तमित्यर्थः ।

चतुर्भिर्भूरादिशब्दैराक्रियमाणमेतदनिरुद्धादिरूपचतुष्टयमित्यपि व्याचक्षते । स आत्मेत्ये तद्वासुदेवो मध्यदेहः अनिरुद्धादयस्तु शिरःप्रभृत्यङ्गानीति

व्याख्यातं अधुना प्रकारान्तरेणापि व्याचष्टे- **स इति** । सः तच्छब्दोक्त-श्चतुरात्मा चतुःस्वरूपो विष्णुः सर्वदेवानामात्मान्तर्नियामकः स्वामीति यावत् । तस्य चतुरात्मनो विष्णोरन्या देवता ब्रह्मादयोऽङ्गमिति जात्येकवचनं एकविधाङ्गत्वोपेताः इत्यर्थः । तदेव दर्शयति- **आगन्तुकत्वत इति** । तदधीनोत्पत्तिमत्त्वादित्यर्थः । एतदेवाङ्गत्वं अप्राधान्यरूपम् । भूरिति वा अयं लोक इत्यादिवाक्यं व्याहृतिप्रतिपाद्य-भूलोकादिस्थषोडशभगवद्रूपपरतया प्रमाणेन व्याख्यातं तत्रैव प्रमाणान्तर-माह- **वासुदेवादिरूप इति** ।

यद्वा भूरादिव्याहृतिभिरित्यादिना अनिरुद्धादिरूपैः भूरादिवाच्यं षोडशत्वमुक्तं, इदानीं वासुदेवादिरूपैर्भूरादिवाच्यानां षोडशत्वमाह- **वासुदेवादिरूप इति** । असावीश्वरो यतः चतुश्चतुः चतुष्कचतुष्टयोपेतः अतः षोडशात्मेत्यर्थः । पूर्वं लोकादिपदेन तत्स्थं भगवद्रूपं विवक्षित-मित्युक्तं, इदानीं ऋगादिपदेन ऋगादिस्थं तद्वाच्यं च विवक्षितमित्याह- **स एवेति** । सर्वविद्यासु स्थितश्चोक्त इत्यर्थः । तस्यैव सर्ववेदोक्तत्वे धर्माद्यसिद्धिरित्याशङ्कानिरासाय चेश्वर इत्युक्तम् । सर्ववेदमुख्यार्थ इत्यर्थः । अमुख्यार्थतया धर्मादिसिद्धिरिति भावः । विष्णोः सर्ववेदार्थत्वं व्याहृत्यर्थत्वं चोपपादयति- **प्रणवार्था इति** । प्रणवस्यार्थ एव अर्थः यासां इति वा, प्रणवः अर्थः व्याख्येयत्वेन विषयो यासामिति वा प्रणवार्थाः तथाच ईश्वरो व्याहृत्यर्थस्तद्व्याख्येयप्रणवार्थत्वात् यो यद्व्याख्येयार्थः स तदर्थः यथा स्मृतिव्याख्येयश्रुत्यर्थः सः स्मृत्यर्थः । अन्यथा व्याख्यान-व्याख्येयभावानुपपत्तेः । न च ब्रह्मणः प्रणवार्थत्वमसिद्धं, ओमिति ब्रह्म इत्यादिश्रुतेरिति भावः । पञ्चरात्रं चेत्येते वेदाः सर्वशो व्याहृत्यर्था इति सम्बन्धः । तथा चेश्वरः सर्ववेदार्थः सर्ववेदव्याख्येयव्याहृत्यर्थत्वादित्युक्तं भवति । व्याहृतीनां वेदव्याख्येयत्वं च न साक्षात्। किन्तु सुधाद्युक्तरीत्या

तद्व्याख्येयपुरुषसूक्तव्याख्येयगायत्रीव्याख्येयत्वेनेति ध्येयम् । भूरादिव्याहृतीनां व्याहृतिशब्दवाच्यत्वेऽपि विष्णुं व्याहरन्ति सम्यक् प्रतिपादयन्ति इति निर्वचनात् अन्यथानुपपत्त्या तद्वाच्यत्वं विष्णोः सिध्यतीत्याह- **सम्यगिति** । विष्णोः सम्यग्व्याहरणादेव निमित्तात् व्याहृतयः इति श्रुता व्याहृतयः व्याहृतिशब्दवाच्या इत्यर्थः । तथा च विष्णोर्व्याहृत्यर्थत्वाभावे व्याहृतीनां व्याहृतिशब्दवाच्यत्वं न स्यादिति भावः । व्याहृतीनां विष्णुप्रतिपादकत्वमात्रेण सर्ववेदव्याख्येयत्वासिद्धेः सम्यग्व्यवाहरणादित्युक्तं तद्विशदयति- **सर्ववेदोक्तेति** । सर्ववेदोक्तं सर्वस्वं निर्दोषनिखिलगुणपूर्णत्वविशिष्टं ब्रह्म तस्य व्याहृतेः प्रतिपादनादु एव व्याहृतीनां व्याहृतिशब्दवाच्यत्वमित्यर्थः सर्वधर्मप्रकारेण प्रतिपादनस्यैव सम्यक्त्वादिति भावः । व्याहृत्यर्थतया विष्णोरुपास्यत्वसिध्यर्थं प्रकारान्तरेण व्याचष्टे- **विशेषेणेति** । स्वनिष्ठं भक्तं प्रति विशेषेणापरोक्ष्येणेमं स्वप्रतिपाद्यं विष्णुमाहरन्ति प्रापयन्ति तदपरोक्षसाधनं भवन्तीति यावत् इति वा व्याहृतय इति स्मृता इत्यर्थः ।।१.१४।।

**का.खं-** तथा च भूर्भुवः सुवरिति वा इत्यादेरयमक्षरार्थः । भूः स्फूर्तिरूपो भूःशब्दसंस्थोऽनिरुद्धः, भुवः भूरिवीर्यो भुवःशब्दसंस्थः प्रद्युम्नः, सुवः सुबलरूपः सुवःशब्दसंस्थः सङ्कर्षणः इति वै प्रसिद्धम् । एता मूर्तयस्तिस्रः व्याह्रियन्ते विशेषेण समन्तात् वेदादौ प्रतिपाद्यन्ते इति वा, भक्तं याति भूरादिमन्त्रैर्नीयन्त इति वा व्याहृतयः तासां भूरादीनां महः पूर्णो महःशब्दसंस्थो वासुदेव इत्येतां मूर्तिं माहाचमस्यश्चतुर्मुखः प्रवेदयते सम्यग्वेत्ति उ हस्मेति निपातसमुदायः पूर्वप्रसिध्यर्थः । सुप्रसिद्धमेतदित्यर्थः । यद्वा भूर्भुवःसुवरित्येताः प्रसिद्धाः शब्दव्यक्तयः स्फूर्त्यादिरूपं विष्णुं व्याहरन्ति प्रतिपादयन्ति भक्तं प्रति नयन्ति वेति व्याहृतयः वैशब्देन प्रसिध्यर्थकेन रूढिरप्युक्ता । तासां चतुर्थी मह इत्येतां व्याहृतिं ब्रह्मा

प्रवेत्तीत्यर्थः । अत्र सर्वत्र योगरूढिरभिप्रेता । अत्र यद्यपि भूर्भुवःसुवर्मह इति वा एताश्चतस्रो व्याहृतयः महाचमस्यः प्रवेदयते इत्येव वक्तव्यं ब्रह्मणः सर्वव्याहृतिवेत्तृत्वात्तथापि तिस्रः क्रमेण प्रसिद्धाः मह इत्येतां तु चतुर्थीत्वेन ब्रह्मैव प्रवेत्तीति ज्ञापयितुं तिस्रः इत्युक्तिः । न च महाचमसपुत्रः कश्चिदृषिश्चतुर्थीमेव प्रवेत्तीति प्रतीतार्थे किं बाधकमिति वाच्यं माहाचमस्य तज्ज्ञानीत्यादिवचनविरोधात् । ता यो वेदेत्युपसंहारे सर्वदेवपूज्यत्वलिङ्गबलात् सर्वव्याहृतिवेत्तृत्वेन चतुर्मुखस्य ग्राह्यत्वे उपक्रमेऽपि मुख्यवेत्तुस्तस्यैव ग्रहणौचित्याच्चेति ध्येयम् । चतुर्थव्याहृतेर्विशेषत उपास्यत्वाभिप्रायेणाह- **तद्ब्रह्मेति** । तत् महःशब्दोक्तं ब्रह्म गुणपूर्णमोक्ष-प्रदवासुदेवाख्यं स वासुदेव आत्मा मध्यदेहः अन्या देवता अनिरुद्धा-द्यास्तिस्रोऽङ्गानि शिरोबाहूपादा यद्वा चतुरात्मकस्य हरेरुपासनार्थमुच्यते तत् चतुरात्मकं ब्रह्म गुणपूर्णं स आत्मा स्वामी अन्या देवता ब्रह्माद्या अङ्गानि तदधीनप्रवृत्तिका इत्यर्थः ।

अनिरुद्धादीनामुपासनार्थं प्रत्येकं स्थानादिभेदं वदन्नङ्गाङ्गिभावमुप-पादयति- **भूरिति वा अयं लोक इति** । अयं समीपस्थतया भूलोकस्य अपरोक्षत्वप्रदः लोकः सर्वाधारभूतो भूलोकस्थो भूः स्फूर्तिरूपोऽनिरुद्ध इति वै प्रसिद्धं अन्तः ईक्षत इति वा अन्तरिक्षं अन्तः द्यावापृथिव्योर्मध्ये ज्ञानिभिरीक्ष्यमाणं अन्तःस्थित्वा जगदीक्षितृत्वाद्वा अन्तरिक्षस्थः, भुवः भूरिवीर्यः प्रद्युम्नः इति प्रसिद्धमित्यर्थः । असौ लोक इति असौ वायुमात्राधारतया स्वर्गादेः परोक्षत्वप्रदो असुः प्राणः । लोकः प्रकाशरूपः स्वर्गादिलोकस्थः सङ्कर्षण इति प्रसिद्धम् । आदित्यः अदितेः सुतः आदित्यमण्डलस्थः महः व्याप्तो वासुदेव इति प्रसिद्धम् । यद्वा भूर्वासुदेवः भुवः सङ्कर्षणः सुवः प्रद्युम्नः महोऽनिरुद्ध इति वासुदेवादिरूपोऽसावित्युक्तेः । अन्यत्र च वासुदेवः शिरोऽपि वेति । एतेषामङ्गाङ्गिभावोपपादनेन

तद्व्याख्येयपुरुषसूक्तव्याख्येयगायत्रीव्याख्येयत्वेनेति ध्येयम् । भूरादिव्याहृतीनां व्याहृतिशब्दवाच्यत्वेऽपि विष्णुं व्याहरन्ति सम्यक् प्रतिपादयन्ति इति निर्वचनात् अन्यथानुपपत्त्या तद्वाच्यत्वं विष्णोः सिध्यतीत्याह- **सम्यगिति** । विष्णोः सम्यग्व्याहरणादेव निमित्तात् व्याहृतयः इति श्रुता व्याहृतयः व्याहृतिशब्दवाच्या इत्यर्थः । तथा च विष्णोर्व्याहृत्यर्थत्वाभावे व्याहृतीनां व्याहृतिशब्दवाच्यत्वं न स्यादिति भावः । व्याहृतीनां विष्णुप्रतिपादकत्वमात्रेण सर्ववेदव्याख्येयत्वासिद्धेः सम्यग्व्यवाहरणादित्युक्तं तद्विशदयति- **सर्ववेदोक्तेति** । सर्ववेदोक्तं सर्वस्वं निर्दोषनिखिलगुणपूर्णत्वविशिष्टं ब्रह्म तस्य व्याहृतेः प्रतिपादनादु एव व्याहृतीनां व्याहृतिशब्दवाच्यत्वमित्यर्थः सर्वधर्मप्रकारेण प्रतिपादनस्यैव सम्यक्त्वादिति भावः । व्याहृत्यर्थतया विष्णोरुपास्यत्वसिध्यर्थं प्रकारान्तरेण व्याचष्टे- **विशेषेणेति** । स्वनिष्ठं भक्तं प्रति विशेषेणापरोक्ष्येणेमं स्वप्रतिपाद्यं विष्णुमाहरन्ति प्रापयन्ति तदपरोक्षसाधनं भवन्तीति यावत् इति वा व्याहृतय इति स्मृता इत्यर्थः ॥१.१४॥

**का.खं-** तथा च भूर्भुवः सुवरिति वा इत्यादेरयमक्षरार्थः । भूः स्फूर्तिरूपो भूःशब्दसंस्थोऽनिरुद्धः, भुवः भूरिवीर्यो भुवःशब्दसंस्थः प्रद्युम्नः, सुवः सुबलरूपः सुवःशब्दसंस्थः सङ्कर्षणः इति वै प्रसिद्धम् । एता मूर्तयस्तिस्रः व्याह्रियन्ते विशेषेण समन्तात् वेदादौ प्रतिपाद्यन्ते इति वा, भक्तं याति भूरादिमन्त्रैर्नीयन्त इति वा व्याहृतयः तासां भूरादीनां महः पूर्णो महःशब्दसंस्थो वासुदेव इत्येतां मूर्तिं माहाचमस्यश्चतुर्मुखः प्रवेदयते सम्यग्वेत्ति उ हस्मेति निपातसमुदायः पूर्वप्रसिध्यर्थः । सुप्रसिद्धमेतदित्यर्थः । यद्वा भूर्भुवःसुवरित्येताः प्रसिद्धाः शब्दव्यक्तयः स्फूर्त्यादिरूपं विष्णुं व्याहरन्ति प्रतिपादयन्ति भक्तं प्रति नयन्ति वेति व्याहृतयः वैशब्देन प्रसिध्यर्थकेन रूढिरप्युक्ता । तासां चतुर्थीं मह इत्येतां व्याहृतिं ब्रह्मा

प्रवेत्तीत्यर्थः । अत्र सर्वत्र योगरूढिरभिप्रेता । अत्र यद्यपि भूर्भुवःसुवर्मह इति वा एताश्चतस्रो व्याहृतयः महाचमस्यः प्रवेदयते इत्येव वक्तव्यं ब्रह्मणः सर्वव्याहृतिवेत्तृत्वात्तथापि तिस्रः क्रमेण प्रसिद्धाः मह इत्येतां तु चतुर्थीत्वेन ब्रह्मैव प्रवेत्तीति ज्ञापयितुं तिस्रः इत्युक्तिः । न च महाचमसपुत्रः कश्चिदृषिश्चतुर्थीमेव प्रवेत्तीति प्रतीतार्थे किं बाधकमिति वाच्यं माहाचमस्य तज्ज्ञानीत्यादिवचनविरोधात् । ता यो वेदेत्युपसंहारे सर्वदेवपूज्यत्वलिङ्गबलात् सर्वव्याहृतिवेत्तृत्वेन चतुर्मुखस्य ग्राह्यत्वे उपक्रमेऽपि मुख्यवेत्तुस्तस्यैव ग्रहणौचित्याच्चेति ध्येयम् । चतुर्थव्याहृतेर्विशेषत उपास्यत्वाभिप्रायेणाह- **तद्ब्रह्मेति** । तत् महःशब्दोक्तं ब्रह्म गुणपूर्णमोक्ष-प्रदवासुदेवाख्यं स वासुदेव आत्मा मध्यदेहः अन्या देवता अनिरुद्धा-द्यास्तिस्रोऽङ्गानि शिरोबाहूपादा यद्वा चतुरात्मकस्य हरेरुपासनार्थमुच्यते तत् चतुरात्मकं ब्रह्म गुणपूर्णं स आत्मा स्वामी अन्या देवता ब्रह्माद्या अङ्गानि तदधीनप्रवृत्तिका इत्यर्थः ।

अनिरुद्धादीनामुपासनार्थं प्रत्येकं स्थानादिभेदं वदन्नङ्गाङ्गिभावमुप-पादयति- **भूरिति वा अयं लोक इति** । अयं समीपस्थतया भूलोकस्य अपरोक्षत्वप्रदः लोकः सर्वाधारभूतो भूलोकस्थो भूः स्फूर्तिरूपोऽनिरुद्ध इति वै प्रसिद्धं अन्तः ईक्षत इति वा अन्तरिक्षं अन्तः द्यावापृथिव्योर्मध्ये ज्ञानिभिरीक्ष्यमाणं अन्तःस्थित्वा जगदीक्षितृत्वाद्वा अन्तरिक्षस्थः, भुवः भूरिवीर्यः प्रद्युम्नः इति प्रसिद्धमित्यर्थः । असौ लोक इति असौ वायुमात्राधारतया स्वर्गादिः परोक्षत्वप्रदो असुः प्राणः । लोकः प्रकाशरूपः स्वर्गादिलोकस्थः सङ्कर्षण इति प्रसिद्धम् । आदित्यः अदितेः सुतः आदित्यमण्डलस्थः महः व्याप्तो वासुदेव इति प्रसिद्धम् । यद्वा भूर्वासुदेवः भुवः सङ्कर्षणः सुवः प्रद्युम्नः महोऽनिरुद्ध इति वासुदेवादिरूपोऽसावित्युक्तेः । अन्यत्र च वासुदेवः शिरोऽपि वेति । एतेषामङ्गाङ्गिभावोपपादनेन

गुणान्तरमुच्यते । आदित्येन आदित्यस्थेन वासुदेवेन सर्वे लोकाः भूम्यन्तरिक्षसुवर्लोकस्था अनिरुद्धास्त्रयोऽपि महीयन्ते पूज्यन्ते लीलयैव प्रकाश्यन्ते इत्येतद्भाव प्रसिद्धमित्यर्थः । अत एव तदधिष्ठानभूतभूरादिलोकानां आदित्यस्य च प्रकाश्यप्रकाशकभाव इति भावः । एवमादित्येन वासुदेवेन सह सर्वे लोका अनिरुद्धादयो ब्रह्मादिभिर्महीयन्ते पूज्यन्त इति व्याख्येयम् । अग्निः अग्रे पूज्यानामग्रे स्थित प्रथमपूज्यः अग्रे महाप्रलये स्थित इति वाऽग्निस्थो भूरनिरुद्ध इति प्रसिद्धम् । वायुर्वयति बध्नाति जगत्स्वस्मिन्निति वायुर्जगद्धारको वायुस्थो भुवः प्रद्युम्न इति प्रसिद्धम् । आदित्यः पूर्ववदादित्यस्थः सुवः सङ्कर्षण इति प्रसिद्धम् । चन्द्रमाः सतामाह्लादकश्चन्द्रसंस्थो महः वासुदेव इति प्रसिद्धम् । चन्द्रमसा चन्द्रस्थेन वासुदेवेन सर्वाणि ज्योतींषि अग्न्यादिगतानिरुद्धादिरूपाणि महीयन्ते इत्येतद्भाव प्रसिद्धम् । तथा चन्द्रमसा वासुदेवेन सह सर्वेऽग्न्यादिस्था अनिरुद्धादयो देवैः पूज्यन्त इति पूर्ववद्योज्यम् ।

अत्र बाह्यवायोर्ज्योतिरुपादानत्वेन त्रिवृत्कृतत्वेन वा जातं ओतमस्मिन्निति लोकाद्याधारत्वेन वा ज्योतिष्ट्वं बोध्यम् । ऋचः सर्वैरर्चनीयः ऋक्प्रतिपाद्य-ऋक्संस्थश्च भूरनिरुद्ध इति वै प्रसिद्धम् । अत्र कृत्स्नऋगादिप्रतिपाद्य-त्वाभिप्रायेण बहुवचनं ऋगादिस्थानिरुद्धादिरूपाणां बहुत्वापेक्षया बहुवचनमित्यप्याहुः । सामानि सर्वत्र समः सर्वसामप्रतिपाद्यः सामसंस्थश्च भुवः प्रद्युम्न इति वै प्रसिद्धम् । यजूंषि याज्यः सर्वयजुःप्रतिपाद्यः यजुःसंस्थश्च सुवः सङ्कर्षण इति वै प्रसिद्धम् । ब्रह्म गुणपूर्णः सर्ववेदराशि-प्रतिपाद्यः सर्ववेदराशिसंस्थश्च महो वासुदेव इति वै प्रसिद्धम् । ब्रह्मणेत्यादि-पूर्ववत् । प्राणः प्रकर्षेण आसमन्तादुत्तमानां नेता प्राणगतप्रकृष्टनयनहेतुर्वा प्राणसंस्थश्च भूरनिरुद्ध इति वै प्रसिद्धम् । अपानः अवाक् आसमन्तादधमानां नेता । अपानगताधोनयनहेतुर्वाऽपानसंस्थश्च भुवः

प्रद्युम्न इति वै प्रसिद्धम् । व्यानः विविधत्वेनासमन्तान्मध्यमानां नेता व्यानगतविविधनयनहेतुर्वा व्यानस्थश्च सुवः सङ्कर्षणः इति वै प्रसिद्धम् । अन्नं सर्वोपजीव्यः अन्नगताद्यत्वहेतुर्वा अन्नसंस्थश्च वासुदेव इति वै प्रसिद्धम् । अन्नेनेत्यादिपूर्ववत् ।

ननु भूरादिव्याहृतिवाच्यानिरुद्धादयः किमेकैकरूपैर्भूम्यादिस्था उतानेकरूपैः इत्यपेक्षायामाह- **तावा इति** । ताः भूरादिरूपाः एताः व्याहृतयः लोकादिस्थानिरुद्धादिमूर्तय इति यावत् । चतस्रोऽपि प्रत्येकं चतुर्धा इति यावत् । चतुर्धेति किमनिरुद्धादेः प्रत्येकमतिबहुत्वमभिप्रेतं, नेत्याह- **चतस्र इति** । चतस्रो व्याहृतयोऽनिरुद्धादिमूर्तयः प्रत्येकं चतस्रः भूम्यग्निऋक्प्राणेष्वनिरुद्धमूर्तयश्चतस्र स्वर्गादित्ययजुर्व्यानेषु प्रद्युम्नमूर्तयः चतस्रः आदित्यस्थचन्द्रब्रह्मान्नेषु सङ्कर्षणमूर्तयः चतस्रः अन्तरिक्षवायु-सामापानेषु वासुदेवमूर्तयश्चतस्र इति षोडश मूर्तयः इत्यर्थः । चतुर्धेति धाल्प्रत्ययस्तु भूम्यग्न्यादिस्थानवैचित्र्यं तत्तच्छब्दार्थगुणवैचित्र्यं चापेक्ष्येत्येकः सम्प्रदायः ।

अन्यस्तु चतुर्धेति धाल्प्रत्ययस्वारस्यानुरोधेन अनिरुद्धाद्याः प्रत्येक-मनिरुद्धादिरूपैश्चतुर्विधा इत्यर्थः । चतस्रश्चतस्र इत्यस्यापि चतस्रश्चतुर्विधा इत्यर्थः । नचैवं पुनरुक्तिः याश्चतुर्विधाश्चतस्रस्ता यो वेदेति फलार्थमनुवादात् । तथा च भूमावनिरुद्धानिरुद्धः । अन्तरिक्षेऽनिरुद्धप्रद्युम्नः । स्वर्गेऽनिरुद्ध-सङ्कर्षणः आदित्येऽनिरुद्धवासुदेव इत्यनिरुद्धव्यूहः । अग्नौ प्रद्युम्नानिरुद्धः । वायौ प्रद्युम्नप्रद्युम्नः । आदित्ये प्रद्युम्नसङ्कर्षणः चन्द्रमसि प्रद्युम्नवासुदेव इति प्रद्युम्नव्यूहः । ऋक्षु सङ्कर्षणानिरुद्धः। सामसु सङ्कर्षणप्रद्युम्नः । यजुःसु सङ्कर्षणसङ्कर्षणः । ब्रह्मणि सङ्कर्षणवासुदेव इति वासुदेवव्यूहः । प्राणे वासुदेवानिरुद्धः । अपाने वासुदेवप्रद्युम्नः । व्याने वासुदेवसङ्कर्षणः । अन्ये वासुदेववासुदेव इति वासुदेवव्यूह इति एवं वेत्तुः फलमाह- **ता इति** । ता

उक्तरूपाः षोडशमूर्तीः योऽधिकारी सम्यग्वेद स एव परं ब्रह्म सम्यग्वेद पश्यति स चतुर्मुख एवेत्याशयः । अत एव तद्योग्यं फलमुच्यते सर्वे देवा रुद्राद्या अस्मै उक्तविधव्याहृतिविदे चतुर्मुखाय बलिं पूजां आ समन्तात् मुक्तावमुक्तौ च सर्वप्रकारेण च वहन्ति कुर्वन्तीत्यर्थः ।।१.१३-१४ ।।

**रा.खं-** वेदविद्याभ्यासार्थिनस्तत्प्राप्त्यर्थं तत्पूर्वभाविनीं व्याहृति-निष्ठोपास्तिमाह- **भूर्भुवः सुवरिति** । इत्येता निर्दिष्टा भूरित्यादित्रयः शब्दाः व्याहृतयः अनिरुद्धादिचतुरात्मनो विष्णोर्व्याहरणाद्वा, व्याहृत्यर्था ऋगादय इति वचनात् सर्ववेदोक्तसर्वस्वव्याहरणाद्वा, विशेषेणाऽहरन्ति विष्णुं भक्तं प्रतीति वा व्याहृतय इत्युच्यन्ते । वै प्रसिद्धमेतत् । तासां व्याहृतीनां महरित्येतां व्याहृतिं चतुर्थीम् माहाचमस्यः ब्रह्मा प्रवेदयते स्वार्थे णिच् प्रवेत्ति । भूरादिव्याहृतित्रयं जानन्नपि ब्रह्मा महरिति व्याहृतिं चतुर्थतया जानातीति भावेनैतां चतुर्थीं माहाचमस्यः प्रवेदयते मह इति विशिष्योक्तिः न तु भूरादिव्याहृतित्रयं न जानातीति भावेनेति ज्ञेयम् । प्रवेदयते वरुणादीन् बोधयतीति वाऽर्थः । णिचश्चेत्यात्मनेपदम् । उ ह स्मेति निपातसमुदायः प्रसिद्धिद्योतकः । केन निमित्तेन भूरादयश्चत्वारः शब्दाः विष्णुं व्याहरन्तो व्याहृतिशब्दवाच्या अभूवन्निति चेदुच्यते । भुक् शुद्धिचिन्तयोरिति कविकल्पद्रुमोक्तेः चिन्तार्थकस्य भूधातोः क्विपि ज्ञानरूपत्वात् भूः । भू बहाविति छान्दोग्यभाष्योक्तेः भूशब्दो बहुत्ववाची व शब्दो वीर्यवाची भूः भूरि वः वीर्यं यस्येति व्युत्पत्तौ भूशब्दे ह्रस्वत्वे सति भूरिवीर्यत्वात् भुव इति ज्ञेयम् । व शब्दो बलवाची तेन तत्कार्यमारब्धान्तगामित्वं वीर्यं लक्षयित्वा भूरिवीर्यत्वात् भुव इति वा व्याख्येयम् । सुवः सुष्ठु बलं यस्येति विग्रहेण सुबलरूपत्वात्सुवः पूर्णत्वान्महः इत्यादिप्रवृत्तिनिमित्तेन विष्णोर्व्याहर्तृत्वात् भूरादेः व्याहृति-शब्दितत्वं ध्येयम् ।

उक्तं हि भूनामा स्फूर्तिरूपत्वादित्यादि । स्थलान्तरे च भावनाच्चैव सुत्वाच्चेति । पूर्णो भूतिवरोऽनन्तसुख इति च । चमस इत्यव्ययात् करोत्यर्थे असप्रत्यये अव्ययानां भमात्रे टिलोप इति टिलोपे चमस इति सिद्धेः । चमसशब्दस्य महत्पदेन समासे सति महाचमसशब्देनातिचमत्कृतिमत्त्वात् व्याहृति-चतुष्टयप्रतिपाद्यो वक्ष्यमाणदिशा षोडशात्मा हरिरुच्यते । तं महाचमसं जानातीत्यर्थे ण्यप्रत्यये आदिवृद्धौ यस्येति पूर्वान्तलोपे माहाचमस्यो व्याहृत्यर्थविष्णुज्ञानी ब्रह्मेति ध्येयम् । भूरादिचतुश्शब्दव्याहृतमनिरुद्धादि-रूपचतुष्टयं ब्रह्म गुणैर्बृंहितत्वाद् ब्रह्मेत्यर्थः । स चतुरात्मा ब्रह्मपदोक्तः आत्मा देवादीनां सर्वेषां स्वामी । अन्या देवता ब्रह्मादयः अङ्गानि गुणभूतानि तत्परिवारभूतानीत्यर्थः। 'अङ्गावयवबद्धास्तु न शाखासु हि प्रतिवेदम्' इत्युक्तेः ।

यद्वा तद् ब्रह्मेत्यत्र तत्पदेन महरिति चतुर्थव्याहृतिवाच्यं सन्निहितं विष्णुरूपं परामृश्य तस्य ब्रह्मेति वासुदेवाख्यचतुर्थरूपत्वमुच्यते । ब्रह्म पन्थाः सत्यं कर्मेति क्रमेण वासुदेवाद्याश्चतस्रो मूर्तय इत्यैतरेयभाष्योक्तेः । वासुदेवो महो नामेतीहैवोक्तेश्च स इति तस्यैव परामर्शः । स वासुदेवः आत्मा मध्यदेहः अन्या देवता अनिरुद्धप्रद्युम्नसङ्कर्षणरूपा देवता अङ्गानि शिरोबाहुपादरूपाङ्गानीत्यर्थः । भूरित्येकवर्णप्रतिपाद्यमनिरुद्धरूपं शिरस्त्वेन भुव इति वर्णद्वयप्रतिपाद्यं प्रद्युम्नरूपद्वयं बाहुद्वयतया सुवरिति वर्णद्वय-प्रतिपाद्यं सङ्कर्षणरूपद्वयं पादद्वयतया अस्तीत्यर्थः । रूपाणां न स्थानतोऽपीति न्यायेनाभेदेऽपि चत्वार इति विशेषशक्त्या सङ्ख्यामात्र विशेषेणान्या देवता इत्यन्यत्वोक्तिरिति ज्ञेयम् । 'अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तम' इति सूत्रभाष्योक्तेः । 'अङ्गाङ्गित्वेन भगवान् स्वानन्दानुभवे स्थितः । स एव व्यूह्य चात्मानं पृथग्रूप इव स्थित' इत्यैतरेयभाष्योक्तेश्च ।

भूरादिचतुश्शब्दव्याहृतमनिरुद्धादिरूपचतुष्टयं ब्रह्म गुणैर्बृंहितत्वाद् ब्रह्मेत्यर्थः । स चतुरात्मा भूरादिशब्दचतुष्ठयवाच्यरूपचतुष्ठयस्य लोकज्योतिर्वेदप्राणाख्यवर्गचतुष्ठयरूपस्थानान्याह- **भूरित्यादिना** । अयं लोक इति । समीपस्थत्व-सर्वाधारत्वहेतुभ्यामयं लोक इति शब्दवाच्यो भूलोकस्थोऽनिरुद्धः भूरित्युक्तानिरुद्धात्मा वै अनिरुद्धानिरुद्ध इति प्रसिद्ध इत्यर्थः । अन्तरिक्षणीयत्वहेतुनाऽन्तरिक्षनामाऽन्तरिक्षस्थोऽनिरुद्धः भुवः भुव इति शब्दवाच्यप्रद्युम्नात्मा सोऽयमनिरुद्धसङ्कर्षणः । आदित्यः अदितिसुतत्वहेतुना आदित्यस्थ आदित्यनामाऽनिरुद्धः । महरितिशब्द-वाच्यवासुदेवात्मा सोऽयमनिरुद्धवासुदेव इति । तस्य महिमानमाह- **आदित्येनेति** । आदित्येन महरिति शब्दवाच्यवासुदेवात्मना स्थितेन अनिरुद्धवासुदेवाख्येन सर्वे लोकाः पृथिव्यादिलोकत्रयस्थाः अनिरुद्धा-निरुद्धानिरुद्धप्रद्युम्नानिरुद्धसङ्कर्षणाख्यास्त्रिस्रो मूर्तयः सर्वे लोका इत्युच्यमाना महीयन्ते पूज्यन्ते, क्रीडया पूज्यपूजकभावेन वर्तन्त इत्यर्थः । वावेति किलार्थे ।

वस्तुतो न पूज्यपूजकभावकृतोच्चनीचत्वादीति भावः । भूरिति वा अग्निरिति । अङ्गनेतृत्वादिनाऽग्निनामाऽग्निस्थः प्रद्युम्नः भूरित्युक्तानिरुद्धः सोऽयं प्रद्युम्नानिरुद्धः वै प्रसिद्धः । वय बन्धने इत्यतो वयति बध्नाति जगदिति वायुनामा वायुस्थः प्रद्युम्नः । भुवः भुवश्शब्दवाच्यप्रद्युम्नात्मा सोऽयं प्रद्युम्नप्रद्युम्नः । आदित्यस्थः आदित्यनामा प्रद्युम्नः सुवरिति शब्दवाच्यसङ्कर्षणात्मा सोऽयं प्रद्युम्नसङ्कर्षणः । आह्लादरूपत्वेन चन्द्रमाः तच्छब्दवाच्यः चन्द्रस्थः प्रद्युम्नः महरिति शब्दवाच्यवासुदेवात्मा सोऽयं प्रद्युम्नवासुदेवः । चन्द्रमसा वावेति पूर्ववज्ज्ञेयम् । ऋचः अर्च्यत्वशब्दित-पूज्यत्वहेतुना ऋङ्नामा ऋक्स्थितः सङ्कर्षणः भूरिति व्याहृतिवाच्या-निरुद्धात्मा सोऽयं सङ्कर्षणानिरुद्धः । समत्वहेतुना सामनामा सामस्थितः सङ्कर्षणः भुव इति शब्दोक्तप्रद्युम्नात्मा सोऽयं सङ्कर्षणप्रद्युम्नः। याज्यस्वरूपतया

यजुर्नामा यजुषि स्थितः सङ्कर्षणः सुवरिति शब्दोक्तसङ्कर्षणात्मा सोऽयं सङ्कर्षणसङ्कर्षणः। बृहत्त्वादखिलवेदाद्युक्तत्वहेतुना ब्रह्मनामा ब्रह्मशब्दिताखिलवेदसमुदायस्थः सङ्कर्षणः महरित्युक्तवासुदेवात्मा सोऽयं सङ्कर्षणवासुदेवः । ब्रह्मणा वावेति प्राग्वत् । प्रकृष्टनयनहेतुना प्राणनामा प्राणस्थो वासुदेवः भूरित्युक्तानिरुद्धात्मा सोऽयं वासुदेवानिरुद्धः वै प्रसिद्धः ।

अवाङ्नयनहेतुनाऽपाननामा अपानस्थो वासुदेवः महरित्युक्तवासुदेवात्मा सोऽयं वासुदेववासुदेवः । अन्नेन वावेति प्राग्वत् । प्रागुक्तं बुध्यारोहाय सङ्गृह्योक्त्वा तदनुवादेन फलवत्तामाह- **ता वा एता इत्यादिना** । ताः भूर्भुवः सुवरिति वा इत्यत्र निर्दिष्टा एता भूरिति वाऽयं लोक इत्यादिना लोकज्योतिर्वेदप्राणेषु प्रत्येकं चतुरात्मकस्थानेषूक्ताः चतस्रो व्याहृतयः व्याहृतिशब्दवाच्यभूरादिशब्दवाच्या मूर्तयोऽनिरुद्धादयः प्रत्येकमनिरुद्धादिभेदेन चतुर्धा भवन्ति । वै खल्विति । कियन्त्यो मूर्तयो जाता इत्यत्र आह- **चतस्रश्चतस्रो व्याहृतय इति** । व्याहृतयः व्याहृतिभिर्वाच्या भगवन्मूर्तयः चतस्रश्चतस्रो व्याहृतय इति । व्याहृतयः, व्याहृतिभिर्वाच्या भगवन्मूर्तयः चतस्रश्चतस्रः षोडश भवन्ति । ताः षोडशमूर्तीर्यो वेद ब्रह्मपदयोग्यो यः कश्चिद्वेद उपास्ते साक्षात्करोति च स एव ब्रह्म गुणबृंहितं विष्णुं वेद, विशेषतो जानाति । अस्मै मुक्तब्रह्मणे सर्वे मुक्तौ स्थिता देवाः बलिं पूजाम् आवहन्तीति । तथाच सूत्रं प्रत्यक्षोपदेशादिति चेन्नाऽधिकारिकमण्डलस्थोक्तेः रिति ।।१.१३-१४।।

### उपनिषत्

**स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः । अन्तरेण तालुके । य एषस्तन इवावलम्बते । सेन्द्रयोनिः । यत्रासौ केशान्तो वि वर्तते । व्यपो ह्यशीर्षकपाले**
।।१.१५।।

भाष्यम्

य एष हृदयाकाशस्त्वनिरुद्धस्तु तद्गतः ।
प्रद्युम्नस्तालुमध्यस्थो लम्बिन्यामिन्द्रनामकः ।।
व्याख्यास्सुपर्णरूपत्वात् केशान्ते वर्तते तु यः ।
सङ्कर्षणस्सुपर्णात्मा वासुदेवो व्यपः स्मृतः ।।
यस्माद्व्यपगतस्थाता जगति प्रलये विभुः ।
अशीर्षकपालोऽसौ कपालादुपरि स्थितः ।।

**व्यास-** भूरादिनाम्नोऽनिरुद्धादेर्देहे चोपास्तिमधिष्ठानपूर्वमाह- **स य इत्यादिना**। मनोमयो ज्ञानमयः। हिरण्मयः सुखमयः । अन्तरेण मध्ये । तद्व्याचष्टे- **य एष इति** । तालुकमेव नामान्तरेणोक्तम् । य एषस्तन इवावलम्बते सेन्द्रयोनिरिन्द्रस्य स्थानमिति । तदर्थमाह- **लम्बिन्यामिन्द्रनामक इति** । यत्रासौ केशान्तो विवर्तत इत्येतद्व्याचष्टे- **व्याख्य इति** । सुपर्णरूपत्वात् विः व्याख्यः । यस्सुपर्णात्मा सङ्कर्षणः । असौ केशान्ते केशमूले वर्तत इति । व्यपोहीत्येतत्सयुक्तिकं व्याचष्टे- **वासुदेव इति** । तस्य स्थानमाह- **अशीर्षकपाल इति** । तद्व्याचष्टे- **अशीर्षेति** ।।१.१५।।

**वादि-** अधुना प्रकारान्तरेण जीवनियामकतया परमात्मनः स्थितिप्रकारमाह- **स य एषोऽन्तर्हृदय आकाश इति** । अन्तर्हृदये प्रसिद्धः स एष आकाशोऽस्ति । मनोमयो ज्ञानमयः । हिरण्मयः हिनोति भजकमिति व्युत्पत्त्या हिरुक् सुखं, तन्मयः । अमृतः जीवमरणेऽपि मरणरहितः । अयमनिरुद्धः तस्मिन् हृदयाकाशे जीवप्रेरकतया तिष्ठति । तालुके उत्तराधरतालुके अन्तरेण मध्ये य एष धातुविशेषेण स्तन इवावलम्बते सा इन्द्रस्य इन्द्रनामकप्रद्युम्नस्य योनिः स्थानम् । भुक्तान्नस्योदरान्तः प्रेषणाय प्रद्युम्नस्तत्र तिष्ठतीति भावः । यत्र केशान्तः केशमूलप्रदेशः वर्तते तत्र विशब्दवाच्यपक्षिसदृशरूपवत्त्वाद् विनामकसङ्कर्षणस्तिष्ठतीति । शिरसि

व्याप्तकेशोज्जीवनाय स्वपक्षौ विस्तार्य पक्षिरूपेण तिष्ठतीति भावः । व्यपः विनामकपक्षिरूपत्वादपगतदोषत्वाच्च । व्यपनामको वासुदेवः अशीर्षकपाले शीर्षभागकपालभिन्ने, तद्यत् कपालोपरिगतस्थानं तत्र पूर्ववत् सकलरक्षणाय तिष्ठतीत्यर्थः ।।१.१५।।

**श्री.भा**- एवं भूरादिनामिनोऽनिरुद्धादेर्लोकादावुपास्तिमभिधाय देहे चोपास्तिमधिष्ठानकथनपूर्वकमाह- **स य एषोन्तर्हृदय इत्यादिना** । अत्र मनोमयेन्द्रयोनिविव्यपशब्दान् कोशादिपरता प्रतीतिवारणाय प्रमाणेनैव अनिरुद्धादिरूपचतुष्टयपरतया व्याचष्टे- **य एष इत्यादिना** । मनोमयः पुरुष इत्यस्यार्थोऽनिरुद्ध इति । अन्तरेण तालुके इत्यादेरर्थः प्रद्युम्न इत्यादि तालुके अन्तरेणेत्यस्यार्थः तालुमध्यस्थ इति । य एषस्तन इवावलम्बते इत्यस्यार्थो लम्बिन्यामिति । इन्द्रनामकः प्रद्युम्नः तालुमध्यस्थः । किन्तत्तालुमध्यमित्यत उक्तम्- **लम्बिन्यामिति** । अजागलस्तनवल्लम्ब-मानायां अणुजिह्वायामित्यर्थः । यत्रासौ केशान्तो विवर्तत इत्येतद्व्याचष्टे- **व्याख्य इति** । य इति श्रवणात्स इति लभ्यते । यः संकर्षणः सुपर्णात्मा सुपर्णस्वरूपः । अतः सुपर्णरूपत्वादेव सः व्याख्यः वीति आख्या यस्यासौ तथोक्तः । 'विःपक्षिपरमात्मनोः' इत्यभिधानाद्विशब्दस्य विष्णुवाचित्वात् । सः केशान्ते केशानां मूलभागे वर्तत इत्यर्थः । अनेन केशान्त इति प्रथमा सप्तम्यर्थ इत्युक्तं भवति । व्यपो ह्यशीर्षकपाल इत्यस्यार्थमाह- **वासुदेव इति** । हीत्यस्याभिप्रायः स्मृत इति । वासुदेवस्य व्यपशब्दवाच्यत्वे निमित्तमाह- **यस्मादिति** । विभुरपरिच्छिन्नो वासुदेवः प्रलयकाले जगति व्यपगते नष्टे सति यतः स्थाता तस्माद्वासुदेवो व्यपः स्मृत इत्यर्थः । अशीर्षकपाले इत्यत्र नञ्पर्युदासार्थः । तथाच शीर्षसम्बन्धिनी ये कपाले उभयपार्श्वभागाविति यावत्। ताभ्यां भिन्ने स्थाने कपालादुपरिगतस्थान इति यावदित्यर्थमभिप्रेत्याह- **अशीर्षकपालेऽसाविति** ।।१.१५।।

**श्री.खं-** एवं भूरादिनामिनोऽनिरुद्धादेर्लोकादावुपास्तिमभिधाय देहे चोपास्तिमधिष्ठानकथनपूर्वमाह- **स य एष इत्यादिना** । य एषः प्रसिद्धः हृदयेऽन्तराकाशे वर्तते तस्मिन्दहराकाशे सोऽयं मनोमयः मनःप्रधानो मनस्पतिरिति यावत् । पुरुषोऽनिरुद्धोऽस्ति । स कीदृश इत्यत आह- **अमृत इत्यादि** । अमृतो देहनाशेऽपि नाशशून्यः । हिरण्मयः हिरण्यं बाह्यसुखविलक्षणं सुखं हिरुक्सुखं हिरण्यं स्यात् इति स्मृतेः । छान्दसो यकारलोपः । मयट्चाधिक्यार्थे । तथाचेतरविलक्षणपूर्णानन्दस्वरूप इत्यर्थः । यथोक्तं स एव च हिरण्मयः । 'हिरुक् सुखं हिरण्यं स्याद्बाह्यानन्दा-त्पृथग्यतः । आधिक्यार्थे मयड्यस्मादधिकानन्दरूपक' इति । यद्वा मयट्पूर्णत्वार्थकः । तथाच पूर्णौ हि हितौ निहितौ रश्च णश्च रणौ रत्यानन्दौ यस्मिन्स हिरण्मयः । रत्यानंदौ पूर्णनित्यौ हितौ तेन हिरण्मय इति वचनात् । अथवा सुवर्णवर्णत्वाद्धिरण्मयः । 'स्वर्णवर्णतया वापि हिरण्मय इतीरित' इत्युक्तेः । प्रद्युम्नस्य स्थानमाह- **अन्तरेणेति** । तालुके तालुकस्य अन्तरेण मध्ये य एषः प्रसिद्धः स्तन इव अजागलस्तन इवावलम्बते सा इन्द्रस्य तन्नामकस्य प्रद्युम्नस्य योनिरावासस्थानम् । योनिशब्दापेक्षया सेति स्त्रीलिंगम् । 'योनिष्ठ इन्द्र निषदे अकारि' इति प्रयोगेण योनिशब्दस्य स्थानार्थत्वावगमात् । संकर्षणस्थानमाह- **यत्र साविति** । यत्र यः वि सुपर्णरूपत्वात् विनामकः संकर्षणः । असौ यत्र देहे केशान्तः प्रथमा सप्तम्यर्थे । केशान्ते केशमूले वर्तते । वासुदेवस्थानमाह- **व्यपोहीति** । जगति व्यपगते सति प्रलयकाले स्थातृत्वेन व्यपः व्यपशब्दवाच्यः हि तथात्वेन स्मृत्यादिप्रसिद्धः वासुदेवः अशीर्षकपाले नञ्पर्युदासार्थः । तथाच शीर्षसम्बन्धिनी ये कपाले उभयपार्श्वभागाविति यावत् । ताभ्यां भिन्ने स्थाने कपालादुपरिगतस्थान इति यावत् । तिष्ठतीत्यर्थः ।। १.१५ ।।

**वरद**- 'य एषोऽन्तर्हृदय आकाशः' इत्यादिना तद्व्याख्याति- **य एष हृदयाकाश इति** । तालुमध्यस्थ इति शिरसो यो वामदक्षिणकपालभागौ सन्धिनौ तौ तालू इत्युच्येते । तयोर्मध्ये स्थित इत्यर्थः । यः सङ्कर्षणः सुपर्णरूपत्वात् पक्षिरूपत्वाद् व्याख्यः । स केशान्ते केशस्य कपाला-दन्तस्थितो भागः, मूलमिति यावत् । तस्मिन् केशान्ते वर्तत इत्यर्थः ॥१-१५॥

**काशी**- भूरादिव्याहृतिवाच्यस्यानिरुद्धादिरूपचतुष्टयस्योपासनार्थं स्थान-विशेषो गुणविशेषश्चोच्यते- **स य इति** । अन्ये तु महःशब्दोक्तस्य ब्रह्मणः साक्षादुपलब्ध्यर्थमुपासनार्थं च हृदयाकाशः स्थानमुच्यते य एष हृत्पुण्डरीकस्यान्तराकाशस्तस्मिन् सोऽयं पुरुषो मनोमयत्वादिगुणकस्तस्य साक्षात्कृतस्वात्मन आत्मभूतेन्द्रस्वरूपप्रतिपत्तये मार्गोऽभिधीयते तालुके तालुकयोरन्तरेण मध्ये य एषस्तन इवावलम्बते तदन्तरेण गता यत्रासौ केशान्तः केशमूलं विभागेन वर्तते तत्र मूर्धप्रदेशे शीर्षकपाले व्यपोह्य विदार्य निःसृता सुषुम्नाख्या नाडी सा इन्द्रस्येश्वरस्य योनिः स्वरूप-प्रतिपत्तिद्वारं तयोर्ध्वं निष्क्रम्य भूरिति व्याहृत्यात्मन्यग्नौ प्रतितिष्ठति अग्न्यात्मना लोकं व्याप्नोति एवमुत्तरत्रापीत्यन्यथा व्याचक्षते तदसत् । य एष यत्रासाविति यच्छब्दोक्तस्य सेन्द्रयोनिरिति तच्छब्देन परामर्शात् तत्र गता तत्र निर्गता या नाडी इत्यध्याहारात् अग्न्याद्यात्मत्वस्याप्रामाणिक-त्वादुदक्षरत्वात् स्मृतिविरुद्धत्वाच्चेत्याशयेन स्मृत्यैव व्याचष्टे- **य एष इति** । अनिरुद्धस्त्वित्यनेन तस्मिन्नयमित्येतद्व्याख्यातम् । तालुमध्यस्थे लम्बिन्यां वर्तमान इति तालुमध्यगतलम्बिन्यां वर्तमान इत्यर्थः । इन्द्रनामक इत्यनेनेन्द्रयोनिरित्येतदिन्द्रस्य प्रद्युम्नस्य योनिः स्थानमिति व्याख्यातं भवति । 'यो निष्ठ इन्द्र निषदे अकारि' इत्यादौ योनिशब्दस्य स्थानार्थत्वदर्शनादिति भावः । यः सुपर्णरूपत्वात् पक्षिरूपत्वात् व्याख्यः

'विः पक्षिपरमात्मनोः' इत्यभिधानात् केशानामन्तो मूलं यत्र शिरः कपाले तत्र वर्तते स तु सुपर्णात्मा **सङ्कर्षण** इत्यनेन यत्रासौ केशान्तो विवर्तत इति वाक्यं व्याख्यातम् । वीत्यविभक्तो निर्देशः इति भावः । व्यपोह्य शीर्षकपाले इत्यत्र व्यपः हि अशीर्षकपाले इति पदच्छेदमुपेत्य तदर्थमाह- **वासुदेव इति** । व्यपशब्दप्रवृत्तौ निमित्तमाह- **यस्मादिति** । यस्मात्प्रलये जगति व्यपगते लीने सति स्थाता तस्माद्व्यपः स्मृत इत्यन्वयः । उपसर्गा हि धातुसम्बन्धे तदर्थविशेषकाः केवलास्तु ससाधनां क्रियामाहुः इत्युक्ते र्व्यपशब्दो व्यपगते स्थातेत्यर्थकः यद्वा स्वपरात् व्यपशब्दात् अर्श आद्यचि व्यपशब्दवत् व्यपगते जगति स्थातेति वाक्यं व्यपशब्देनोच्यते तेन तदर्थो लक्ष्यते द्विरेफादिशब्दवत् इति भावः । ननु शीर्षकपालयोः केशान्तत्वेन सङ्कर्षण-स्थानत्वाद्वासुदेवस्थानं किमित्यत उक्तम्- **अशीर्षकपाल इति** । तदर्थमाह- **अशीर्षेति** । शीर्ष्णः ये कपाले दक्षिणोत्तरभागे तद्भिन्नस्थान इत्यर्थः । तस्य तात्पर्यं कपालादुपरीति । अशीर्षकपाले इत्युक्त्या कपालद्वयमध्य-निर्गतसुषुम्नायां कपालद्वयमध्योपरितनभागे इति विवक्षितमिति भावः ।।१.१५।।

**काशी.खं-** तथा चेयमक्षरयोजना । आदावध्यात्ममुच्यते । अन्तःहृदये हृत्पद्मस्यान्तः स दहराकाशत्वेन श्रुत्यन्तरप्रसिद्ध एषः अव्याकृतोऽयं आकाशस्तस्मिन्नयं दृश्यमानदेहसन्निहितः पुरुषः पूर्णषड्गुणः अमृतो देहनाशेऽप्यविनाशी हिरण्मयः यतः चलस्वभावात् बाह्यानन्दहिरुक्-विलक्षणं णं सुखं हिरण्यं तन्मयः अलौकिकपूर्णानन्दरूपः स एव हिरण्मयः ।

**'हिरुक् सुखं हिरण्यं स्याद्बाह्यानन्दात्पृथक् यतः ।**

आधिक्यार्थे मयट् च स्यादधिकानन्दरूपकः' इत्यैतरेयभाष्योक्तेः । अथवा हितौ निहितौ रणौ रत्यानन्दौ यस्मिन् सः हिरणः प्राचुर्येण हिरणो हिरण्मयः प्रचुररत्यानन्दवानित्यर्थः । सुवर्णवर्ण इति वा, 'रत्यानन्दौ

पूर्णनित्यौ हितौ तेन हिरण्मयः । स्वर्णवर्णतया वापि हिरण्मय इतीरितः । इति बृहद्भाष्योक्तेः । देशतः कालतश्च प्राचुर्यं मयडर्थ इति भावेन पूर्णनित्यावित्युक्तं अत्र वर्णविपर्ययवर्णविकारवर्णविनाशाः यथायथमवगन्तव्याः । मनोमयः मनोनियामको अनिरुद्धो वर्तते स तत्रोपास्य इति भावः । एवमुत्तरत्रापि तालुके अन्तरेण तालुकयोर्मध्ये य एष प्रत्यक्षसिद्धः स्तन इवावलम्बते सा इन्द्रस्य पूर्णैश्वर्यस्य प्रद्युम्नस्य योनिः स्थानं विधेययोनिशब्दापेक्षया सेति स्त्रीलिङ्गम् । 'शैत्यं हि यत्साप्रकृतिर्जलस्य' इतिवत् । यत्र केशान्तः केशमूलं तत्र शीर्षकपालप्रदेशे । वीति सुलोपश्छान्दसः । विः सुपर्णरूपोऽसौ सङ्कर्षणो वर्तते यद्वा योऽसौ केशान्तस्तत्र विः सुपर्णात्मा सङ्कर्षणो वर्तते इत्यर्थः । व्यपः व्यपगते जगति स्थाता वासुदेवः अशीर्षकपाले शीर्षकपालभिन्ने तदुपरितनमध्यप्रदेशे वर्तते हि प्रसिद्धमेतदित्यर्थः ।।१.१५।।

**रा.खं-** भूरादिव्याहृतिचतुष्टयवाच्यस्य अनिरुद्धादिदेहेऽपि स्थानविशेषानुपास्त्यार्थमाह - **स य एष इति** । सः प्रसिद्धो य एष हृदयेऽन्तराकाशः तस्मिन्नाकाशे अयं भूरित्युक्तः, मनोमयः ज्ञानप्रचुरः अमृतः नित्यः हिरण्मयः विलक्षणानन्दप्रचुरः हिरुक् सुखं हिरण्यं स्यात् इतिस्मृतेः । पुरुषोऽनिरुद्धः वर्तते इत्याकृष्यते । तालुके तालुकयोः अन्तरेण मध्ये य एषः स्तन इवावलम्बते सा इन्द्रयोनिः इन्द्रस्य परमेश्वरस्य प्रद्युम्नस्य योनिः स्थानम् विधेययोन्यपेक्षया सेति स्त्रीलिङ्गोक्तिः । यत्रासौ केशान्तः बहुव्रीहिः केशमूलम् तत्रेति शेषः । वि अविभक्तिको निर्देशः विः सुपर्णरूपः सङ्कर्षणो वर्तते अशीर्षकपाले शिरः कपालादुपरीति यावत् । व्यपः व्यप इत्युक्तो वासुदेवो वर्तते हि प्रसिद्धमेतदिति । उपसर्गा हि धातुसम्बन्धेन तदर्थबोधादिहेतवः केवलास्तु ससाधनक्रियावाचिनो भवन्तीति यो व्यतीरफाणयदित्यत्र कर्मनिर्णये टीकाकृदुक्तेः ।

'विः पक्षिपरमात्मनोः' इत्यभिधानात् केशानामन्तो मूलं यत्र शिरः कपाले तत्र वर्तते स तु सुपर्णात्मा सङ्कर्षण इत्यनेन यत्रासौ केशान्तो विवर्तत इति वाक्यं व्याख्यातम् । वीत्यविभक्तो निर्देशः इति भावः । व्यपोह्य शीर्षकपाले इत्यत्र व्यपः हि अशीर्षकपाले इति पदच्छेदमुपेत्य तदर्थमाह- **वासुदेव इति** । व्यपशब्दप्रवृत्तौ निमित्तमाह- **यस्मादिति** । यस्मात्प्रलये जगति व्यपगते लीने सति स्थाता तस्माद्व्यपः स्मृत इत्यन्वयः । उपसर्गा हि धातुसम्बन्धे तदर्थविशेषकाः केवलास्तु ससाधनां क्रियामाहुः इत्युक्ते र्व्यपशब्दो व्यपगते स्थातेत्यर्थकः यद्वा स्वपरात् व्यपशब्दात् अर्श आद्यचि व्यपशब्दवत् व्यपगते जगति स्थातेति वाक्यं व्यपशब्देनोच्यते तेन तदर्थो लक्ष्यते द्विरेफादिशब्दवत् इति भावः । ननु शीर्षकपालयोः केशान्तत्वेन सङ्कर्षण-स्थानत्वाद्वासुदेवस्थानं किमित्यत उक्तम्- **अशीर्षकपाल इति** । तदर्थमाह- **अशीर्षेति** । शीर्ष्णः ये कपाले दक्षिणोत्तरभागे तद्भिन्नस्थान इत्यर्थः । तस्य तात्पर्यं कपालादुपरीति । अशीर्षकपाले इत्युक्त्या कपालद्वयमध्य-निर्गतसुषुम्नायां कपालद्वयमध्योपरितनभागे इति विवक्षितमिति भावः ।।१.१५।।

**काशी.खं-** तथा चेयमक्षरयोजना । आदावध्यात्ममुच्यते । अन्तःहृदये हृत्पद्मस्यान्तः स दहराकाशत्वेन श्रुत्यन्तरप्रसिद्ध एषः अव्याकृतोऽयं आकाशस्तस्मिन्नयं दृश्यमानदेहसन्निहितः पुरुषः पूर्णषड्गुणः अमृतो देहनाशेऽप्यविनाशी हिरण्मयः यतः चलस्वभावात् बाह्यानन्दहिरुक्-विलक्षणं णं सुखं हिरण्यं तन्मयः अलौकिकपूर्णानन्दरूपः स एव हिरण्मयः ।

**'हिरुक् सुखं हिरण्यं स्याद्बाह्यानन्दात्पृथक् यतः ।**

आधिक्यार्थे मयट् च स्यादधिकानन्दरूपकः' इत्यैतरेयभाष्योक्तेः । अथवा हितौ निहितौ रणौ रत्यानन्दौ यस्मिन् सः हिरणः प्राचुर्येण हिरणो हिरण्मयः प्रचुररत्यानन्दवानित्यर्थः । सुवर्णवर्ण इति वा, 'रत्यानन्दौ

पूर्णनित्यौ हितौ तेन हिरण्मयः । स्वर्णवर्णतया वापि हिरण्मय इतीरितः । इति बृहद्भाष्योक्तेः । देशतः कालतश्च प्राचुर्यं मयडर्थ इति भावेन पूर्णनित्यावित्युक्तं अत्र वर्णविपर्ययवर्णविकारवर्णविनाशाः यथायथमवगन्तव्याः । मनोमयः मनोनियामको अनिरुद्धो वर्तते स तत्रोपास्य इति भावः । एवमुत्तरत्रापि तालुके अन्तरेण तालुकयोर्मध्ये य एष प्रत्यक्षसिद्धः स्तन इवावलम्बते सा इन्द्रस्य पूर्णैश्वर्यस्य प्रद्युम्नस्य योनिः स्थानं विधेययोनिशब्दापेक्षया सेति स्त्रीलिङ्गम् । 'शैत्यं हि यत्साप्रकृतिर्जलस्य' इतिवत् । यत्र केशान्तः केशमूलं तत्र शीर्षकपालप्रदेशे । वीति सुलोपश्छान्दसः । विः सुपर्णरूपोऽसौ सङ्कर्षणो वर्तते यद्वा योऽसौ केशान्तस्तत्र विः सुपर्णात्मा सङ्कर्षणो वर्तते इत्यर्थः । व्यपः व्यपगते जगति स्थाता वासुदेवः अशीर्षकपाले शीर्षकपालभिन्ने तदुपरितनमध्यप्रदेशे वर्तते हि प्रसिद्धमेतदित्यर्थः ।।१.१५।।

**रा.खं-** भूरादिव्याहृतिचतुष्टयवाच्यस्य अनिरुद्धादिदेहेऽपि स्थानविशेषानुपास्त्यार्थमाह - **स य एष इति** । सः प्रसिद्धो य एष हृदयेऽन्तराकाशः तस्मिन्नाकाशे अयं भूरित्युक्तः, मनोमयः ज्ञानप्रचुरः अमृतः नित्यः हिरण्मयः विलक्षणानन्दप्रचुरः हिरुक् सुखं हिरण्यं स्यात् इतिस्मृतेः । पुरुषोऽनिरुद्धः वर्तते इत्याकृष्यते । तालुके तालुकयोः अन्तरेण मध्ये य एषः स्तन इवावलम्बते सा इन्द्रयोनिः इन्द्रस्य परमेश्वरस्य प्रद्युम्नस्य योनिः स्थानम् विधेययोन्यपेक्षया सेति स्त्रीलिङ्गोक्तिः । यत्रासौ केशान्तः बहुव्रीहिः केशमूलम् तत्रेति शेषः । वि अविभक्तिको निर्देशः विः सुपर्णरूपः सङ्कर्षणो वर्तते अशीर्षकपाले शिरः कपालादुपरीति यावत् । व्यपः व्यप इत्युक्तो वासुदेवो वर्तते हि प्रसिद्धमेतदिति । उपसर्गा हि धातुसम्बन्धेन तदर्थबोधादिहेतवः केवलास्तु ससाधनक्रियावाचिनो भवन्तीति यो व्यतीरफाणयदित्यत्र कर्मनिर्णये टीकाकृदुक्तेः ।

व्यपगतवाचिव्यपशब्दे उपपदे अस्तेः क्विपि अन्तलोके शकन्ध्वादित्वात् पररूपे व्यप इति रूपसिद्धेः व्यपगतेऽपि जगति स्थातेति व्यपो वासुदेवो ज्ञेयः ॥१.१५॥

### उपनिषत्

**भूरित्यग्नौ प्रतितिष्ठति । भुव इति वायौ । सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यम् । आप्नोति मनसस्पतिम् । वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिः । एतत् ततो भवति ॥१.१६॥**

### भाष्यम्

अनिरुद्धस्तु भूर्नामा हुताशे संव्यवस्थितः ।
प्रद्युम्नो भगवान् वायौ भुव इत्येव कीर्तितः ॥

सङ्कर्षणस्सुवर्नामा सूर्ये तिष्ठति केशवः ।
महोनामा वासुदेवो ब्रह्मणि स्थश्चतुर्मुखे ॥

स वासुदेवस्स्वाराज्यं व्याप्यास्मिन् मनसस्पतौ ।
अनिरुद्धे च संव्याप्तः ततो वागादिनां पतिः ॥

वागादिषु स्थितो नित्यं भवत्येष जनार्दनः ।
स्वव्यापी च जगद्व्यापी नित्यैश्वर्यात् स ईश्वरः ॥

**व्यास-** चतुर्णामन्यत्रोपास्तिमाह- **भूरित्यादिना** । तद्व्याचष्टे- **अनिरुद्ध इत्यादिना** । परिच्छिन्ने ब्रह्मणि स्थितो वासुदेवोऽपि परिच्छिन्नः किं इत्यतो नेत्याह- **आप्नोतीति** । स्वाराज्यं जगत् आप्नोति व्याप्नोति । यत आप्नोति मनसस्पतिं चाप्नोति । ततो वाक्पतिः चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिः एतत्ततो भवतीति । तद्व्याचष्टे- **स इति** ॥१.१६॥

**वादि-** भूरिति वा अग्निरित्यादिनोक्ताग्न्यादिषोडशाधिष्ठानेषु सामानाधिकरण्येनोक्त्या ऐक्यशङ्कां निवारयन् चतुर्णां स्थानान्तरेऽप्युपास्तिमाह- **भूरित्यग्नौ प्रतितिष्ठतीति** । भूर्नामा हूताशे संव्यवस्थितः इति भष्योक्तेः । प्रागुक्ताग्निर्गार्हपत्यः । अत्रोक्ताग्निस्त्वाहवहनीयः । वायुश्चतुर्मुखपङ्क्तौ पठितत्वान्मुख्यवायुः । प्रागुक्तस्त्वमुख्यः । अतो न पौनरुक्त्यम् । अत्र स्पष्टमधिकरणत्वोक्त्या सप्तसु प्रथमा इत्यनुशासनात् प्रागुक्तप्रथमा सप्तम्यर्थ इति सूचितम् । ब्रह्मा चतुर्मुखः, आदित्यो द्वादशादित्येष्वेकः । अतो न पौनरुक्त्यम् । परिच्छिन्नब्रह्मादिस्थितत्वेन वासुदेवादेरपि परिच्छिन्नत्वभ्रमनिवारणाय तस्य महिमानमाह- **आप्नोतीति** । स्वाराज्यं स्वराट् चक्रवर्ती तत्सम्बन्धि जगत् स्वाराज्यं आप्नोति व्याप्नोति । मनसस्पतिं मनोभिमानिमनिरुद्धं च व्याप्नोति । एवं प्रधानेन्द्रियमनोभिमानिव्याप्तत्वात् । वाक्पतिः वागिन्द्रियस्यापि पतिः चक्षुष्पतिः चक्षुरिन्द्रियस्यापि पतिः श्रोत्रेन्द्रियस्यापि पतिः । न केवलमेतावत् किन्तु विज्ञानपतिश्च । विज्ञानतत्त्वाभिमानिनोस्सरस्वतीब्रह्मणोरपि पतिरित्यर्थः ।।१.१६।।

**श्री.भा-** पुनरपि भूरादिनामिनोऽनिरुद्धादेरधिदैवमग्न्यादावधिष्ठाने उपास्तिप्रकारमाह- **भूरित्यग्नावित्यादिना** । तत्र भूरित्यादिशब्दः अग्न्यादौ विषये तद्वाचकत्वेनेति यावत् । प्रतितिष्ठतीत्यन्यथाप्रतीतिवारणाय प्रमाणेनैव व्याख्याति- **अनिरुद्धस्त्विति** । भूर्नामानिरुद्धो हुतमश्नातीति हुताशे अग्नौ संव्यवस्थित इत्यर्थः । भुव इति कीर्तितो भगवान्प्रद्युम्नो वायौ संव्यवस्थित इति तिष्ठतीति वा सम्बन्धः । सुवर्नामा संकर्षण इत्यन्वयः । ब्रह्मशब्दस्यानेकार्थत्वाद्ब्रह्मणीत्यनूद्य चतुर्मुखे स्थ इति व्याख्यातम् । वासुदेवस्य परिच्छिन्ने चतुर्मुखाद्यधिष्ठाने स्थितत्वोक्त्या प्राप्तपरिच्छिन्नत्वशंकां वारयितुं तन्महिमानं वक्तुं प्रवृत्तं आप्नोति स्वाराज्यं इत्यादिवाक्यं व्याचष्टे- **स वासुदेव इत्यादिना** । स्वाराज्यं स्वस्याधीनतया

आसमंताद्विद्यमानं राज्यं अव्याकृताकाशादिकं जगत् व्याप्नोतीति शेषः । आप्नोतिमनसस्पतिमित्यस्यार्थः स्वाराज्यं व्याप्य स्थितत्वादेवास्मिन् देहस्थिते मनसस्पतौ अनिरुद्धे स्वकीये परिच्छिन्ने रूपे च संव्याप्त इति । आप्नोति मनसस्पतिं वाक् पतिरित्यादेर्हेतुहेतुमद्भावमभिप्रेत्यार्थमाह- **तत इति** । मनसस्पतित्वादेव वागादिनां वागादीनां पतिरित्यर्थः । नामि दीर्घाभावश्छान्दसः । न राजादिवत् बाह्यत एवास्य वासुदेवस्य वागादिषु ततो नित्यं स्थित इति वाक्यार्थ उक्तो भवति । अयं भावः । मनोनधिष्ठितेन्द्रियाणां स्वकार्यजननाक्षमत्वान्मनोधिष्ठितत्वं तावदिन्द्रि-याणामपेक्षितम् । मनसि चानिरुद्धस्य सत्त्वेन तेषां तद्व्याप्तत्व-प्राप्तौमनोनामकानिरुद्धे च वासुदेवस्य व्याप्ततयावस्थि तत्वेन वागादीन्द्रियेषु वासुदेवास्तिष्ठन्तीति प्राप्त्या भवति वासुदेवो वागादिपतिरिति । ननु भगवतः इतरत्रादृष्टं जगद्व्यापकत्वं कथं युक्तम् । अनिरुद्धाख्यस्वरूप-व्याप्तत्वं च सुतरामयुक्तम्। व्याप्यव्याप्तृभावस्य भेदनियतत्वाद्भगवति च तदभावादित्याशंकायामाह- **स्वव्यापीचेति** । सः वासुदेवरूपी स्वकीयानिरुद्धादिरूपव्यापी । नित्यैश्वर्योपपादनायैवेश्वर इत्युक्तम् ।

**श्री.खं-** पुनरपि भूरादिनामानि अनिरुद्धादेरधिदैवमग्न्यादावधिष्ठाने उपास्तिप्रकारमाह- **भूरित्यग्नावित्यादिना** । भूरिति नामा अनिरुद्धोऽग्नौ प्रतितिष्ठति संव्यवस्थितः । भुव इति कीर्तितः प्रद्युम्नो वायौ तिष्ठति । सुवरिति नामा संकर्षणः आदित्ये सूर्ये तिष्ठति । मह इति नामा वासुदेवो ब्रह्मणि चतुर्मुखे तिष्ठति । वासुदेवस्य परिच्छिन्ने चतुर्मुखाख्याधिष्ठाने स्थितत्वोत्त्या प्राप्तपरिच्छिन्नत्वशंकां परिहरति- **आप्नोतीति** । प्रकृतः चतुर्मुखस्थो वासुदेवः स्वाराज्यं स्वस्याधीनतया आसमंताद्विद्यमानं यद्राज्यं अव्याकृताकाशादिकं जगत् तत् आप्नोति । तथा मनसस्पतिं स्वकीय-मनिरुद्धाख्यं रूपं च नित्यैश्वर्ययुक्तत्वादाप्नोति । अत एव वाक्पति-

रित्यादि । विज्ञानपतिः बुद्धिरूपेन्द्रियपतिः । न राजादिवत् बाह्यत एवास्य वागादिपतित्वमित्याह- **एतदिति** । एतत् एतेषु वागादीन्द्रियेषु ततो नित्यं स्थित इत्यर्थः । मनोऽनधिष्ठितेन्द्रियाणां स्वकार्यजननाक्षमत्वान्मनोधिष्ठितत्वं तावदिन्द्रियाणामपेक्षितं मनसि चानिरुद्धस्य सत्त्वेन तेषां तद्व्याप्तत्वप्राप्तौ मनोनामकानिरुद्धे च वासुदेवस्य व्याप्ततयावस्थितत्वेन वागादीन्द्रियेषु वासुदेवस्तिष्ठतीति प्राप्त्या भवति वासुदेवो वागादिपतिरिति भावः ।। १.१६ ।।

**वरद-** हृदयाकाशस्थरूपाणि किं नामकानीत्यत उच्यते- **भूरित्यग्नौ प्रतितिष्ठतीत्यादि** । तस्यार्थः- **अनिरुद्धस्त्वित्यादि** । अत्र सर्वत्रापि योऽनिरुद्धहृदयाकाशस्थितो भूर्नामासौ भू इति तस्य भूर्नामकत्वं स एव चानिरुद्धो भूताकाशे व्यवस्थितः । तस्य भूताकाशे व्यवस्थितत्वं प्रतिपादयद्वाक्यद्वयं द्रष्टव्यम् । मह इति व्याहृतिप्रतिपाद्यं विष्णुरूपं ब्रह्मणि स्थितं चेत् तस्य ब्रह्मणः परिच्छिन्नत्वात् तदन्तर्गतस्यापि हरेः परिच्छिन्नता स्यादित्यत उच्यते– **आप्नोति स्वाराज्यमित्यादि** । तस्यार्थः- **स वासुदेवमित्यादि** । अतः स्वाराज्यमिति जगदुच्यते । जगतः परमेश्वरराज्यत्वात् अनिरुद्धे च सम्प्राप्त इति । हृदयाकाशगते मनोमयेऽनिरुद्धे एकीभावेन संव्याप्त इत्यर्थः ।।१.१६।।

**काशी-** प्रकृतस्यानिरुद्धादिरूपचतुष्टयस्याधिदैवमुपासनार्थमुच्यते- **भूरित्यग्नावित्यादिना** । अत्र भूरिति व्याहृतिरूपेऽग्नौ प्रतितिष्ठति अग्न्यात्मनेमं लोकं व्याप्नोतीत्याद्यन्यथाव्याख्यानं बाधितमुदक्षरमप्रामाणिकं चेति भावेन प्रमाणेनैव व्याचष्टे- **अनिरुद्धस्त्विति** । भूर्नामाऽनिरुद्धो हुताशेऽग्नौ संव्यवस्थितः, तुशब्दो अनिरुद्धजीवव्यावृत्यर्थः । अनेन भूरिति व्याहृतिवाच्योऽनिरुद्धोऽग्नौ नियामकतया तिष्ठति स तत्रोपास्य इत्युक्तं भवति । एवमुत्तरत्र द्रष्टव्यम् । भगवानेवेति केशव इति च

प्रद्युम्नसङ्कर्षणाख्यजीवव्यावृत्यर्थं 'मह इति ब्रह्म' इत्यादाविवात्र ब्रह्मशब्देन वेदराशिग्रहणे पुनरुक्तिरधिदैवप्रकरणविरोधश्चेत्यतो ब्रह्मणीत्यस्य चतुर्मुख इति व्याख्यानं, अस्यैव चतुर्मुखस्थवासुदेवस्य सर्वस्वामित्वसर्वव्यापित्वादि-माहात्म्यमुपासनार्थमुच्यते- **आप्नोतीत्यादिना** । तद्व्याचष्टे- **स इति** । सः चतुर्मुखस्थः स्वमात्मीयमासमन्ताद्राजमानं प्रमितं च जगद्व्याप्तेन चतुर्मुखस्थरूपेणैव व्याप्तिरुच्यते अस्मिन् देहस्थे मनसस्पतौ मनोनियामकानिरुद्धाख्यरूपे च सम्यक् मनोनियामकत्वेनैव व्याप्तः । ततो मनःप्रेरकतया तत्र स्थितत्वादेव वागादीन्द्रियाणां प्रभुः पतिः प्रेरकः, वागादीनां मनोऽधीनत्वात्तस्य च तदधीनत्वादिति भावः । वागादिनामिति नामि दीर्घाभावश्छान्दसः । न केवलं मनोद्वारेणैव वागादिप्रेरणं, किन्तु साक्षादपीत्युच्यते- **एतदिति** । तद्व्याचष्टे- **वागादिष्विति** । अनेन एषः वासुदेवरूपी जनार्दनः एतत् एतेषु वागादिषु ततो नियामकतया स्थित इति श्रुत्यर्थ उक्तो भवति । नित्यमित्यनेन भवतीति लडर्थवर्तमानत्व-मविवक्षितमिति सूचितम् । ननु नियामकत्वेन सर्वव्यापित्वं स्वव्यापित्वं च कथमस्य घटते अन्यत्रादृष्टत्वादित्यत आह- **स्वव्यापीचेति** । नित्यैश्वर्यात् अचिन्त्यानन्तशक्तित्वात् स ईश्वर इत्यनेन तथाविधश्रुतिं प्रमाणमत्र सूचयति ।।१.१६।।

**काशी.खं-** अथाधिदैवमुच्यते पूर्वोक्तस्फूर्त्यादिरूपत्वेन भूरित्युक्तो अनिरुद्धोग्नौ प्रतितिष्ठति नियामकत्वेन वर्तते भुव इत्युक्तः प्रद्युम्नो वायौ सुवरित्युक्तः सङ्कर्षणआदित्ये मह इत्युक्तवासुदेवो ब्रह्मणि चतुर्मुखे प्रतितिष्ठतीति सर्वत्रानुषङ्गः चतुर्मुखस्थोप्ययं न परिच्छिन्न इत्याह स्वाराज्यं जगदाप्नोति व्याप्नोतीति न केवलमेतावत् मनसस्पति अनिरुद्धं स्वात्मभूतमप्यचिन्त्यैश्वर्याद्व्याप्नोति अत एव वाक् पतिरित्यादिवागादीनां मनोधीनत्वदर्शनात् वाक् पदं सकलकर्मेन्द्रियोपलक्षणं चक्षुः श्रोत्रपदाभ्यां

पञ्चज्ञानेन्द्रियाण्युपलक्ष्यन्ते विज्ञानमिति बुद्धीन्द्रियं साक्षी वोच्यते पतिशब्देन च तत्तदभिमानिप्रेरकत्वादिकं विवक्षितम् । नायं मनोद्वारेणैव वागादिप्रेरकः किन्तु साक्षादपीत्याह एतदिति एतत् एतेषु वागादिषु ततो नियामकतया व्याप्तो भवति नित्यं वर्तते ।।१.१६।।

**रा.खं-** भूरादिव्याहृतिवाच्यानामनिरुद्धादीनामुपसनार्थं स्थानान्तराण्याह - **भूरित्याग्नावित्यादिना** । प्रागुक्तनिरुक्त्या भूरित्युक्तोऽनिरुद्धोऽग्नौ प्रतितिष्ठति । भुव इत्युक्तः प्रद्युम्नः । वायौ प्रतितिष्ठतीत्यनुषङ्गः । सुवरित्युक्तः सङ्कर्षणः आदित्ये महरित्युक्तो वासुदेवः ब्रह्मणि चतुर्मुखे प्रतितिष्ठति । चतुर्मुखस्थोऽपि वासुदेवः न परिच्छिन्न इत्याह - **आप्नोतीति** । स्वाराज्यं जगत् आप्नोति व्याप्नोति, जगद्व्याप्य वर्तत इत्यर्थः । मनसस्पतिमनिरुद्धं चऽप्नोतीत्यर्थः । नित्यैश्वर्यबलात् स्वव्यापी जगद्व्यापी च यतस्ततः वाक्पतिः वाचि स्थितः वाङ्नियन्ता चक्षुष्पतिः श्रोत्रपतिः विज्ञान-पतिरित्येतद् भवति इत्येवंरूप एष भवतीत्यर्थः ।।१.१६।।

### उपनिषत्

**आकाशशरीरं ब्रह्म । सत्यात्म प्राणारामं मन आनन्दम् । शान्तिसमृद्धममृतम् । इति प्राचीनयोग्योपास्व ।।१.१७।।**

### भाष्यम्

आकाशवद्व्याप्तदेहस्सत्यात्मा गुणपूर्तितः ।
वायोर्विशेषरमको बलानन्दस्वरूपवान् ।।

ज्ञानानन्दस्वरूपोऽसौ शान्तिनामा सुखोन्नतेः ।
अन्तगत्वात् स्वतः पूर्तेस्समृद्धं तत् प्रकीर्तितम् ।।

**इत्युपास्व प्राथमिको योग्यस्त्वं मदुपासने ।**
**प्राधान्यादिति पूर्वं हि प्राह विष्णुश्चतुर्मुखम् ।।**

**इति ब्रह्मसारे ।।**

**व्यास-** वासुदेवस्य गुणानाह- **आकाशशरीरमित्यादिना** । तद्व्याचष्टे- **आकाशवदिति** । प्राणाराममित्यस्यार्थान्तरमाह- **बलेति** । आनन्दादिगुणा न तस्माद्भिन्ना इत्युक्तं- **मन आनन्दमिति** । तद्व्याचष्टे- **ज्ञानेति** । सुखोन्नतिश्च नान्यप्रसादादित्युक्तम्- **समृद्धमिति** । तद्व्याचष्टे- **अन्तगत्वादिति** । स्वतः स्वस्मात्स्वभावादेव पूर्तेरन्तगत्वात्समृद्धम् । इति प्राचीनेत्येतदप्रतीतेर्व्याचष्टे- **इतीति** । मदुपासने प्रथमयोग्यत्वे निमित्तमाह- **प्राधान्यादिति** ।।१.१७।।

**वादि-** स्वव्यापी च जगद्व्यापीत्यत्र एतेष्विन्द्रियेष्वाविष्टस्वांशव्यापित्व-मप्यस्तीति भावेन स्वव्यापीत्युक्तम् । तद् ब्रह्म आकाशशरीरम् आकाशवद् व्याप्तशरीरम् । सत्यात्म सत्यः साधुपूर्णगुण एव आत्मा देहो यस्य तत् सत्यात्म । प्राणं मुख्यप्राणम् आ सम्यक् रमयतीति प्राणारामम् । एतद्घटनायर्थान्तरमप्याह बलानन्दस्वरूपवानिति । प्र प्रकर्षेण अनं चेष्टा बलं वा यस्मात् प्राणम्, आ सम्यक् रमणमानन्दो यस्येति प्राणाराममित्युक्तं भवति । एवं च स्वयं बलवत्त्वादानन्दवत्त्वाच्च, प्राणस्यापि बलं दत्वा सर्वेभ्योऽपराजितं च कृत्वाऽनन्दयतीति भावः । शान्तिः सुखस्यान्तः । सर्वेषां सुखगणनायां 'यतो वाचो निवर्तन्ते' इत्यन्तिमवाक्योक्तनिरवधिकत्वमस्यास्तीति शान्तीत्यर्थः । शत्रून् शमयतीति व्युत्पत्या च शान्तिशब्दवाच्यं परं ब्रह्मैव इति भावेन आह- **अन्तगत्वादिति** । सं सम्यक् परनिरपेक्षया ऋद्धं पूर्णं समृद्धम् । अमृतं मरणरहितम् । प्राचीनयोग्य अधिकारिषु प्रथमयोग्य ब्रह्मन् इत्युपास्व इति ब्रह्माणं प्रति भगवानुपदिशतीत्यर्थः ।।१.१७।।

**श्री.भा-** प्रकृतस्यैव वासुदेवस्य महिमानं वक्तुं आकाशशरीरं ब्रह्मेत्यादिप्रवृत्तम्। तत्राकाशस्यैव साक्षाच्छरीरत्वमुच्यत इति प्रतीतिनिरासाय व्याचष्टे- **आकाशवदिति** । मध्यमपदलोपीसमास इत्यभिप्रेत्याकाशवदित्युक्तम् । आकाशवत्सर्वगतश्च नित्य इति श्रुत्यनुसारेण वत्यर्थभूतं सादृश्यं व्याप्तेति विवृत्तम्- **गुणपूर्तित इति** । निर्दोषगुणपूर्णस्वरूपत्वादित्यर्थः । यथोक्तम् । निर्दोषगुणपूर्णत्वाद्यमाहुः सत्यमच्युतमिति। प्राणाराममित्यस्यार्थमाह - **वायोरिति** । अङ्गोर्थो विशेषेति । तथाच प्राणस्याधिकारिवर्गेषु आसम्यक् विशेषत इति यावत् । रामं रमकं सुखकारीति व्याख्यातं भवति । प्राणाराममित्यस्यैवार्थांतरमाह- **बलेति** । तथाच प्राणं बलरूपं च तत् आराममानन्दरूपं चेति प्राणाराममिति व्याख्यातं भवति । मनआनन्द-मित्यस्यार्थमाह- **ज्ञानेति** । मनु अवबोधन इति धातोर्मनो ज्ञानरूप च तत् आनन्दरूपं चेति मनआनन्दमिति व्याख्यातं भवति । शान्तिशब्दार्थमाह- **शान्तिनामेति** । तथाच शस्य सुखस्य सुखोन्नति-परम्परायाः इति यावत् । अन्ति अन्तेस्थितं निरवधिकसुखोन्नति-युक्तमित्यर्थ उक्तो भवति । समृद्धमित्यस्यार्थमाह- **स्वतः पूर्तेरिति** । तथाच सम्यक् स्वतः अन्यप्रसादमन्तरेणेति यावत् । ऋद्धं पूर्णं समृद्धमित्यर्थ उक्तो भवति । इति प्राचीनयोग्योपास्वेत्येतदप्रतीतेर्व्याचष्टे- **इत्युपास्वेति** । प्राचीनशब्दार्थः प्राथमिक इति । प्राथमिको योग्यो मुख्याधिकारीत्यर्थः । तत्र हेतुमाह । प्राधान्यादिति । अधिकार्युत्तमत्वात् इत्यर्थः । इति प्राचीनयोग्योपास्वेति कं प्रति को विधत्ते इत्यत आह- **इति पूर्वं हीति** । अनेन मदुपासने त्वं योग्य इत्यस्मद्युष्मच्छब्दविषयोऽपि दर्शितो भवति ।।१.१६।।

**श्री.खं-** प्रकृतस्यैव वासुदेवस्य महिमानमाह- **आकाशेति** । वासुदेवाख्यं ब्रह्म आकाशशरीरं आकाशवत् व्याप्तशरीरं सत्यात्म निर्दोषगुणस्वरूपं

प्राणारामं प्राणस्य अधिकारिवर्गे आ सम्यक् विशेषत इति यावत् । रामं रमकं सुखकारि । यद्वा प्राणं बलरूपं च तत् आराममानन्दरूपं चेति प्राणारामम् । मन आनन्दं मनु अवबोधन इति धातोः मनोज्ञानरूपं च तत् आनन्दं आनन्दरूपं चेति तथोक्तम् । शान्ति शस्य सुखस्य तदुन्नतिपरम्पराया इति यावत् । अन्ति अन्ते स्थितम् । निरवधिकसुखोन्नतियुक्तमित्यर्थः । समृद्धं सं सम्यक् स्वतः अन्य प्रसादमन्तरेण ऋद्धं पूर्णम् । अमृतं नित्यमुक्तम् । हे प्राचीनयोग्य अधिकारिवर्गेषु प्राधान्यात्प्राथमिकयोग्य मुख्याधिकारी इति यावत् । इति पूर्वोक्तप्रकारेण । अनिरुद्धादिरूपिणं मामुपास्व ममोपास्तिं कुर्विति चतुर्मुखं प्रति विष्णोर्वचनम् ।। १.१७ ।।

**वरद-** ततो मनोमयेनानिरुद्धेनैकीभूतत्वादेव महोनामा वासुदेवो वागादीन्द्रियाणामपि पतिर्भवतीत्यर्थः । मनोगतस्यानिरुद्धस्य सर्वेन्द्रियपतित्वादिति । ननु सकलजगद्व्यापित्वं च स्वेनैव स्वस्य व्याप्यत्वं चान्यत्रादृष्टं कथं विष्णोर्घटत इत्यत आह- **स्वव्यापीति** । अस्यैव चतूरूपस्य विष्णोर्माहात्म्यन्तरमुच्यते- **आकाशशरीरं ब्रह्मेत्यादि** । तस्यार्थः आकाशवद्व्याप्तदेह इति । प्राणाराममित्यस्यार्थान्तरमाह- **बलानन्द-स्वरूपवानिति** । स चानन्दो न मनोविकाररूप इत्युच्यते- **मन आनन्दमिति** । तस्यार्थः- **ज्ञानानन्दस्वरूप इति** । ज्ञानं च आनन्दश्चेति ज्ञानानन्दः सः स्वरूपं यस्य सः । तथा स चानन्दो निरवधिक इत्युच्यते- **शान्तीति** । तस्यार्थः- **शान्तिनामेति** । तच्च निरवधिकानन्दादिकं परमेश्वरस्य न पराधीनं किन्तु स्वाभाविकमेवेत्युच्यते- **समृद्धमिति** । तस्यार्थः- **स्वतः पूर्तेरिति** । वेदविद्यादिप्राप्तिसाधनत्वेन स्थानान्तरेऽपि पञ्चरूपस्य हरेरूपासनं विधीयते ।।१.१७।।

**काशी-** ननु वासुदेवस्य देहवत्वे परिच्छिन्नत्वदुःखित्वादिप्रसङ्गः । देहिनः परिच्छिन्नत्वादिनियमात् । तदभावे ज्ञानाद्यभाव इत्युभयथापि

नियामकत्वेन जगद्व्यापित्वमनुपपन्नमित्यत उक्तम्- **आकाशशरीरमिति** । तत्राकाश एव शरीरमस्येति विग्रहप्रतीतिनिरासाय व्याचष्टे- **आकाशवदिति** । आकाश इव शरीरमस्येत्येव विग्रहः । इवार्थसादृश्यं च व्याप्तत्वेनेति भावः । अनेन च देहपरिच्छेदप्रयुक्तो देहिनः परिच्छेदो देहाभावप्रयुक्तो ज्ञानाद्यभावश्च निरस्तः । दुःखादिप्रसङ्गनिरासार्थमुक्तम्- **सत्यात्मेति** । तस्य मूर्तामूर्तात्मकमिति व्याख्यानं प्रमाणबाधितम् । अवितथरूपत्वन्त्वितरसाधारणमतः प्रकारान्तरेण व्याचष्टे- **सत्यात्मेति** । गुणपूर्तितः निर्दोषगुणपूर्णदेहत्वात् तथाचोक्तं 'निर्दोषगुणपूर्णत्वात् यमाहुस्सत्यनामकम्' इति । तथाच प्राकृतदुष्टदेहस्यैव दुःखाद्यापादकत्वं न निर्दोषगुणात्मकदेहस्येति नोक्तदोष इति भावः ।

एतावता सिद्धं प्रमेयं सोपपत्तिकमुच्यते- **प्राणाराममित्यादिना** । अत्र प्राणानामारामो यस्मिंस्तत्प्राणारामं, मन आनन्दकरं यस्य तन्मनआनन्दं, शान्त्योपशमेन समृद्धवदुपलभ्यत इति शान्तिसमृद्धमिति व्याख्यानं क्लिष्टमतोऽन्यथा व्याचष्टे- **वायोरिति** । प्राणस्य वायोराविशेषेण सर्वाधिक्येन रामं रमकं सुखदमित्यर्थः । प्राणश्चासावारामश्च प्राणारामः सोऽस्यास्तीत्यर्शआद्यजन्तं प्राणारामपदमित्यभिप्रेत्यापि व्याचष्टे - **बलेति** । प्राणो बलं आराम आनन्दः स एव स्वरूपं स्वात्मकदेहः तद्वानित्यर्थः । मन आनन्दमित्येतद्व्याख्याति- **ज्ञानेति** । मनो ज्ञानमानन्दश्च तदात्मक इत्यर्थः । अतो नानन्दांशे पुनरुक्तिः सुखोन्नतेरानन्दोत्कर्षतारतम्यस्यान्तः सीमा निरतिशयानन्दस्थानं तद्वत्वान्निरतिशयानन्दवत्वादिति यावत् । शान्तिनामेति योजना अनेन शस्य सुखस्यान्तः सीमा निरतिशयसुखं तदस्यास्तीति शन्तीत्युक्तं भवति । संशब्दार्थः स्वत इति अनन्यापेक्षयेत्यर्थः । पूर्तेः देशतः कालतो गुणतश्च पूर्णत्वात् समृद्धमित्यर्थः । प्राचीनयोग्यनामा कश्चिदृषिरिति प्रतीतिनिरासाय व्याचष्टे- **इत्युपास्वेति** । प्राचीनः

प्राथमिको योग्य इति हेतुगर्भं इत्युक्तप्रकारेण मदुपासने तव मुख्याधिकारित्वात् त्वमुपास्वेत्यर्थः मुख्यत्वे हेतुः प्राधान्यादिति ॥१.१७॥

**काशी.खं-** नन्वस्य शरीरवत्वे परिच्छिन्नत्वाद्यापत्तिस्तदभावे ज्ञानाद्यभावस्तथा च नियामकत्वेन जगद्व्यापित्वाद्यनुपपत्तिरत आह- **आकाशे इति** । आकाश इव व्याप्तं शरीरमस्येत्याकाशशरीरं ब्रह्म वासुदेवाख्यं व्याप्तदेहत्वादेव व्याप्तत्वमुपपन्नमिति सूचनाय ब्रह्मेत्युक्तं अन्यथाकाशशरीर इत्येवावक्ष्यत् व्यप इति प्रकृतानुवृत्यैवान्वयसम्भवादिति ध्येयम् । शरीरवत्वे दुःखाद्यापत्तिरत आह- **सत्येति** । सत्यः निर्दोषगुणपूर्ण आत्मा देहो यस्य तत्सत्यात्म प्राकृतदेहस्यैव दुःखादिनियमादस्य च ज्ञानादिगुणमात्रदेहत्वान्नोक्तदोष इति भावः । एतावता सिद्धं माहात्म्यमाह- **प्राणेति** । आ रमयतीत्यारामं प्राणस्य आरामं प्राणारामं वायोर्विशेषेण रमकं यद्वा प्राणश्चासावानन्दश्च प्राणारामः सोऽस्यास्तीत्यर्शे आद्यचि प्राणारामं बलानन्दात्मकदेहवत् मनआनन्दं ज्ञानानन्दात्मकं शस्य सुखस्यान्तः सीमा सोऽस्यास्तीति शान्ति निरतिशयसुखवत् सं सम्यक् अनन्यापेक्षया ऋद्धं पूर्णं समृद्धं अमृतं नित्यमुक्तं ब्रह्मेत्येवं प्रकारेण हे प्राचीनयोग्य प्राथमिकाधिकारिन् अधिकारिषु मुख्येति यावत् । त्वमुपास्वेति चतुर्मुखं प्रति विष्णोरुक्तिः ॥१.१७॥

**रा.खं-** वासुदेवस्य गुणानाह- **आकाशशरीरमित्यादिना** । ब्रह्म वासुदेवाख्यं ब्रह्म आकाशशरीरम् आकाशवद्व्याप्तदेहम् । सत्यात्मसाधुगुणपूर्णम्, सद्भावे साधुभावे चेत्युक्तेः सच्छब्दपर्यायसत्यशब्दस्य साधुगुणवाचित्वात् । प्राणारामं प्राणस्य वायोः आ समन्ताद्विशेषेण रामं रमकं रमतेर्ण्यन्तादच् प्रत्ययः । यद्वा प्राणशब्दो बलवाची । बलात्मकात्वात् सुखात्मकत्वात् प्राणारामम् । मन आनन्दं ज्ञानानन्दात्मकम् । सुखोन्नतिरूपत्वाच्छान्त्यात्मकं स्वतः पूर्तं समृद्धम् । अमृतं देहतोऽपि

नित्यम् इत्येवं रूपेण हे प्राचीनयोग्य अधिकारिणां प्राथमिकयोग्य चतुर्मुख उपास्वेति प्राह भगवान्नृषिर्विष्णु-श्चतुर्मुखमिति ज्ञेयम् ।।१.१७।।

### उपनिषत्

**पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः । अग्निर्वायुरादित्य-श्चन्द्रमा नक्षत्राणि । आप ओषधयो वनस्पतय आकाश आत्मा इत्यधिभूतम् । अथाध्यात्मम् । प्राणो व्यानोऽपान उदानः समानः । चक्षुः श्रोत्रं मनो वाक् त्वक् । चर्म माꣳसꣳस्नावास्थि मज्जा । एतदधि विधाय ऋषिरवोचत् । पाङ्क्तं वा इदꣳसर्वम् । पाङ्क्तेनैव पाङ्क्तꣳस्पृणोतीति ।।१.१८।।**

### भाष्यम्

**पृथिव्याद्यं पाङ्क्षट्कं पाङ्क्तेनैव स्वयं हरिः ।**<br>
**नारायणादिरूपेण बलयत्यञ्जसा प्रभुः ।**<br>
**इत्युवाच स्वयं विष्णुर्वेदद्रष्टा गुणाधिकः ।।**

**इति तत्त्वसंहितायाम् ।**

**आत्मा अहङ्कारतत्त्वम् ।**

**व्यास-** वेदविद्याप्राप्त्यर्थं पूर्वभाविविद्यान्तरमाह- **पृथिवीत्यादिना** । एतदधिविधायाधिकृत्य स्पृणोति बलयति तद्व्याचष्टे- **पृथिव्याद्यमिति** । पाङ्क्तं पञ्चत्वसङ्ख्यायुक्तम् । आत्मनोऽध्यात्मत्वात्कथमधिभूतत्वं तस्येत्यतस्तद्घटयन्नाह- **आत्मेति** ।।१.१८।।

**वादि-** प्राग्व्यस्तव्याहृतीनां महसश्च प्रतिपाद्यानां वासुदेवादिचतु-र्मूर्तीनामुपास्तिप्रकार उक्तः । अधुना समस्तव्याहृत्या सह पञ्चानां प्रतिपाद्यदेवतानां वासुदेवादिचतुर्मूर्तीनां मूलरूपनारायणस्य चाधिभूतमध्यात्मं

प्राथमिको योग्य इति हेतुगर्भं इत्युक्तप्रकारेण मदुपासने तव मुख्याधि-कारित्वात् त्वमुपास्वेत्यर्थः मुख्यत्वे हेतुः प्राधान्यादिति ॥१.१७॥

**काशी.खं-** नन्वस्य शरीरवत्वे परिच्छिन्नत्वाद्यापत्तिस्तदभावे ज्ञानाद्यभावस्तथा च नियामकत्वेन जगद्व्यापित्वाद्यनुपपत्तिरत आह- **आकाशे इति** । आकाश इव व्याप्तं शरीरमस्येत्याकाशशरीरं ब्रह्म वासुदेवाख्यं व्याप्तदेहत्वादेव व्याप्तत्वमुपपन्नमिति सूचनाय ब्रह्मेत्युक्तं अन्यथाकाशशरीर इत्येवावक्ष्यत् व्यप इति प्रकृतानुवृत्यैवान्वयसम्भवादिति ध्येयम् । शरीरवत्वे दुःखाद्यापत्तिरत आह- **सत्येति** । सत्यः निर्दोषगुणपूर्ण आत्मा देहो यस्य तत्सत्यात्म प्राकृतदेहस्यैव दुःखादिनियमादस्य च ज्ञानादिगुणमात्रदेहत्वान्नोक्तदोष इति भावः । एतावता सिद्धं माहात्म्यमाह- **प्राणेति** । आ रमयतीत्यारामं प्राणस्य आरामं प्राणारामं वायोर्विशेषेण रमकं यद्वा प्राणश्चासावानन्दश्च प्राणारामः सोऽस्यास्तीत्यर्श आद्यचि प्राणारामं बलानन्दात्मकदेहवत् मनआनन्दं ज्ञानानन्दात्मकं शस्य सुखस्यान्तः सीमा सोऽस्यास्तीति शान्ति निरतिशयसुखवत् सं सम्यक् अनन्यापेक्षया ऋद्धं पूर्णं समृद्धं अमृतं नित्यमुक्तं ब्रह्मेत्येवं प्रकारेण हे प्राचीनयोग्य प्राथमिकाधिकारिन् अधिकारिषु मुख्येति यावत् । त्वमुपास्वेति चतुर्मुखं प्रति विष्णोरुक्तिः ॥१.१७॥

**रा.खं-** वासुदेवस्य गुणानाह- **आकाशशरीरमित्यादिना** । ब्रह्म वासुदेवाख्यं ब्रह्म आकाशशरीरम् आकाशवद्व्याप्तदेहम् । सत्यात्म-साधुगुणपूर्णम्, सद्भावे साधुभावे चेत्युक्तेः सच्छब्दपर्यायसत्यशब्दस्य साधुगुणवाचित्वात् । प्राणारामं प्राणस्य वायोः आ समन्ताद्विशेषेण रामं रमकं रमतेर्ण्यन्तादच् प्रत्ययः । यद्वा प्राणशब्दो बलवाची । बलात्मकात्वात् सुखात्मकत्वात् प्राणारामम् । मन आनन्दं ज्ञानानन्दात्मकम् । सुखोन्नतिरूपत्वाच्छान्त्यात्मकं स्वतः पूर्ते समृद्धम् । अमृतं देहतोऽपि

नित्यम् इत्येवं रूपेण हे प्राचीनयोग्य अधिकारिणां प्राथमिकयोग्य चतुर्मुख उपास्वेति प्राह भगवान्नृषिर्विष्णु-श्चतुर्मुखमिति ज्ञेयम् ।।१.१७।।

उपनिषत्

पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः । अग्निर्वायुरादित्य-श्चन्द्रमा नक्षत्राणि । आप ओषधयो वनस्पतय आकाश आत्मा इत्यधिभूतम् । अथाध्यात्मम् । प्राणो व्यानोऽपान उदानः समानः । चक्षुः श्रोत्रं मनो वाक् त्वक् । चर्म माꣳसꣳस्नावास्थि मज्जा । एतदधि विधाय ऋषिरवोचत् । पाङ्क्तं वा इदꣳसर्वम् । पाङ्क्तेनैव पाङ्क्तꣳस्पृणोतीति ।।१.१८।।

भाष्यम्

पृथिव्याद्यं पाङ्क्तषट्कं पाङ्क्तेनैव स्वयं हरिः ।
नारायणादिरूपेण बलयत्यञ्जसा प्रभुः ।
इत्युवाच स्वयं विष्णुर्वेदद्रष्टा गुणाधिकः ।।

इति तत्त्वसंहितायाम् ।

आत्मा अहङ्कारतत्त्वम् ।

**व्यास-** वेदविद्याप्राप्त्यर्थं पूर्वभाविविद्यान्तरमाह- **पृथिवीत्यादिना** । एतदधिविधायाधिकृत्य स्पृणोति बलयति तद्व्याचष्टे- **पृथिव्याद्यमिति** । पाङ्क्तं पञ्चत्वसङ्ख्यायुक्तम् । आत्मनोऽध्यात्मत्वात्कथमधिभूतत्वं तस्येत्यतस्तद्घटयन्नाह- **आत्मेति** ।।१.१८।।

**वादि-** प्राग्व्यस्तव्याहृतीनां महसश्च प्रतिपाद्यानां वासुदेवादिचतु-र्मूर्तीनामुपास्तिप्रकार उक्तः । अधुना समस्तव्याहृत्या सह पञ्चानां प्रतिपाद्यदेवतानां वासुदेवादिचतुर्मूर्तीनां मूलरूपनारायणस्य चाधिभूतमध्यात्मं

च षड्विधपञ्चस्थानेषूपास्तिप्रकारमाह- **पृथिव्यन्तरिक्षमित्यादिना** । विद्यासार्थक्याय मूलमूर्त्या सहोपास्तेरावश्यकत्वात् पृथुगारम्भः । अत एवोक्तं 'पञ्चात्मकः स भगवान् द्विषडात्मकोऽभूत्' इत्यादि । एतत्पञ्चकं पञ्चकमधि विधाय अधिकफलवत्त्वेन पृथगुपास्यतया विधाय ऋषिर्मन्त्रद्रष्टा विष्णुरवोचत् । उक्तं सर्वमिदं पाङ्क्तं पञ्चत्वसङ्ख्यायुक्तम् । एतद्भगवान् पाङ्क्तेन नारायणादिरूपपञ्चकेन स्पृणोति व्याप्य तिष्ठतीति सा व्याप्तिस्तत्प्रवर्तयतीति भावेन बलयतीत्युक्तम् भाष्ये । आकाश आत्मेत्यत्र आत्मशब्दार्थमाह- **आत्मा अहङ्कारतत्त्वमिति** ।।१.१८।।

**श्री.भा**- वेदविद्याप्राप्त्यर्थं पूर्वभाविविद्यान्तरमाह- **पृथिवीत्यादिना** । तत्र पाङ्क्तेनैव पाङ्क्तं स्पृणोतीत्येतत् व्याचष्टे- **पृथिव्याद्यमिति** । तत्र पाङ्क्तमित्यस्यार्थः पृथिव्याद्यं पाङ्क्तषट्कमिति । पाङ्क्तेनैवेत्यनूद्य नारायणादि-रूपेणेति व्याख्यातम् । प्रविष्टः सन्निति शेषः । स्पृणोतीत्यस्यार्थो बलयतीति । स्वस्वकार्यक्षमं करोतीत्यर्थः । इति ऋषिरवोचदित्यत्रोक्तऋषिः क इत्यपेक्षायां तं दर्शयति - **इत्युवाचेति** । आकाश आत्मेत्यत्रात्मा जीव इत्यसत् । तस्याधिभूतत्वाभावादित्यभिप्रेत्यात्मशब्दार्थमाह- **आत्मा अहंकारतत्त्वमिति** । तस्य भूतोपादानत्वेनाधिभूतत्वमुपपन्नमिति भावः ।। ।।१.१८।।

**श्री.खं**- अयमर्थः दिशः प्राच्याद्याः । अवान्तरदिशाः आग्नेयाद्याः कोणाः । 'टापं चापि हलन्तानां यथा वाचा निशा दिशा' इति वचनात् अवान्तरदिशा इति आकारान्तत्वं युक्तम् । ओषधयः फलपाकान्ताः व्रीह्यादयः । वनस्पतयः अश्वत्थाद्याः । आत्मा अहंकारतत्त्वम् । इत्यधिभूतम् । भूतसम्बन्धिपाङ्क्तं इति निरूपितमित्यर्थः । अत्र एवं भाति पृथिव्यग्निवाय्वाकाशानां भूतत्वात् पृथिव्यग्न्यादिशब्दोक्तानामेव देवानां भूताभिमानित्वादन्तरिक्षद्युलोकयोरोषध्यादीनां च भूतकार्यत्वात् आत्म-

शब्दोक्तस्याहंकारतत्त्वस्य च भूतोपादानत्वात्पृथिव्यादीनामधिभूतत्वं युक्तमित्याशयेन इत्यधिभूतमित्येवोक्तमिति द्रष्टव्यम् । अव्याकृताकाश-भागभूतानां दिशां तु भूतसम्बन्धित्वाभावात्तत्राधिभूतत्वं छत्रिन्यायेनेति वा भूताकाशेऽव्याकृताकाशस्यापि सत्त्वाद्वेति द्रष्टव्यम् ।

अथाध्यात्मम् । आत्मानं देहमधिकृत्य विद्यमानम् । तत्सम्बन्धीति यावत् । पाङ्क्तं निरूप्यत इत्यर्थः । स्नावेन सहितं अस्थि स्नावास्थि । स्नावेत्यविभक्तिक-निर्देशो वा । एतत् पृथिव्यादिपाङ्क्तषट्कं अधि विधाय अधिकृत्य ऋषिर्मुख्यतो वेदद्रष्टा विष्णुरवोचत् । किमवोचदित्यतस्तदेव दर्शयति- **पाङ्क्तं वा इदमिति** । इदं सर्वं पृथिव्यग्निवाय्वादिकं पाङ्क्तं पञ्चत्व-संख्ययोपेतम् । तथाचेदं पाङ्क्तं पृथिव्याद्यं पाङ्क्तषट्कं स्वयं हरिः पाङ्क्तेनैव पञ्चत्वसंख्ययोपेतेन नारायणादिरूपेण प्रविष्टः सन्निति शेषः । स्पृणोति बलयति स्वस्वकार्यक्षमं करोतीत्यर्थः । इति ऋषिरवोचदिति सम्बन्धः । तत्र पृथिव्यग्न्यप्प्राणचक्षुश्चर्मसु नारायणः, अन्तरिक्षवाय्वोषधिव्यान-श्रोत्रमांसेषु वासुदेवः, द्व्यादित्यवनस्पत्यपानस्नावेषु संकर्षणः, दिक् चंद्राकाशोदानवागस्थिषु प्रद्युम्नः । अवान्तरदिङ्नक्षत्रात्मसमानत्वङ्मज्जासु अनिरुद्धस्तिष्ठतीति विवेको द्रष्टव्यः ।।१.१८ ।।

**वरद-** पृथिव्यन्तरिक्षमित्यादिकं किं स्ववाक्यमित्यत आह- **इत्युवाचेति** । नन्वत्र 'आप ओषधयो वनस्पतय आकाश आत्मा' इत्यत्रात्मशब्दो देहार्थः ? किं वा जीवार्थः ? उभयमपि न युज्यते । देहस्य जीवस्याध्या-त्मान्तर्गतत्वेन अधिभूते परिगणनायोगादित्यत आह- **आत्मेति** ।।१.१८।।

**काशी-** विशिष्टवेदविद्याप्राप्तये सर्वव्यापारप्रवर्तकत्वेन भगवतस्त्रिंश-न्मूर्त्युपास्त्यर्थं विद्यान्तरमुच्यते- **पृथिव्यन्तरिक्षमित्यादिना** । अन्ये तु पूर्वोक्तस्य ब्रह्मणः पृथिव्यादिपाङ्क्तस्वरूपेणोपासनमुच्यते । पृथिवीत्यादि-

लोकपाङ्क्तं अग्निरित्यादिदेवतापाङ्क्तं आप इत्यादिभूतपाङ्क्तं अधिभूतमित्यधि-लोकाधिदैवतपाङ्क्तयोरप्युपलक्षणम् । अध्यात्मं पाङ्क्तत्रयं वायुपाङ्क्तमिन्द्रियपाङ्क्तं धातुपाङ्क्तमिति । एतदेवमधि विधाय परिकल्प्य कश्चिदृषिरवोचत् । इदं सर्वं पाङ्क्तेनैवाध्यात्मिकेन पाङ्क्तं बाह्यं **स्पृणोति** बलयति एकात्मतयोपलभ्यत इति यावदिति व्याचक्षते । तदसत् । पृथिव्यादिस्वरूपेण ब्रह्मोपासनस्यात्रा-प्रतीतेः स्पृणोतीत्यनेनैकात्मत्वलाभस्योदक्षरत्वात् आद्यपाङ्क्तयोः भूतपाङ्क्तात् पृथक्करणं चायुक्तं लोकानामपि भौतिकत्वेन भूतान्तर्भावसम्भवात् । अन्यथा अबादिभूतपाङ्क्तेऽपि ओषध्यादिनिवेशानुपपत्तेः । भूतपाङ्क्ते पृथिव्यग्निवायुत्यागेन भौतिकौषध्यादिग्रहणासङ्गतेश्च । पाङ्क्तेनेत्यादिव्याख्यानं च निर्मूलमित्याशयेन स्मृत्यैव तद्व्याचष्टे- **पृथिव्याद्यमिति** । पाङ्क्तषट्कं पञ्चकषट्कं पृथिव्यादि-मज्जान्तसमुदायमित्यर्थः । स्वयं स्वरूपभूतेनैव पाङ्क्तेन पञ्चत्वसङ्ख्यायुक्तेन नारायणादिरूपेण बलयति । अत्र हेतुः- **अञ्जसा प्रभुरिति** । मुख्येशत्वात् इत्यर्थः । अनेन पाङ्क्तमित्यादि स्पृणोतीत्यन्तं वचनमुक्तार्थम् । इत्युवाचेत्यनेन इत्यवोचदित्यन्वयः सूचितः- **स्वयमिति** । यो बलयति स एवेत्यर्थः । यद्वा स्वयमवोचत् नत्वन्यवाक्यानुवादत्वेनेत्यर्थः । तत्र हेतुः- **ऋषिर्वेदद्रष्टेति** । ननु ऋषिशब्देन विष्णोरेव कुतो ग्रहणम् । ब्रह्मादीनामप्यृषित्वादत आह- **गुणाधिक इति** । गुणैः सार्वज्ञादिभिः, गुणभूतेभ्यो ऋष्यन्तरेभ्यो वा अधिक इत्यर्थः । मुख्यर्षित्वात्तस्यैव ग्रहणमिति भावः । यद्वा अधीत्यस्यैव गुणाधिको विष्णुरिति व्याख्येति द्रष्टव्यः ।

नन्वधिभूतपाङ्क्त्यादिग्रहणमयुक्तम् । अव्याकृताकाशरूपाया दिशः भूतभौतिकानन्तर्भावात् अवान्तरदिशां च तदनन्यत्वेन पाङ्क्तत्वानुपपत्तिश्चेति चेन्न । दिक् शब्देन प्राच्यादिस्थेन्द्रादिपुरीचतुष्टयस्यावान्तरदिशाशब्देन च विदिग्गताग्न्यादिपुरी चतुष्टयस्य विवक्षिततत्वात् । न चैवमव्याकृताकाशस्य

पाङ्क्षषट्काप्रवेशप्रसङ्गः । महदव्यक्तादीनामिव तस्यापि तदप्रवेशे बाधकाभावात् । ईशनियम्यतायाश्च वाक्यान्तरेण सिद्धेः । प्राच्यादि-विशिष्टपुरीग्रहणे तस्यापि ग्रहणोपपत्तेः । ननु भूतभौतिकभिन्नस्यात्मनो भूतसम्बन्धित्वमात्रेण भूतपाङ्क्षप्रवेशवदव्याकृताकाशस्यापि तथास्तु । किं दिगादिशब्दलक्षणाश्रयणेनेति चेन्न । आत्मशब्दस्यापि चेतनपरत्वान-ङ्गीकारात् । कस्तर्ह्यात्मशब्दार्थ इत्यत आह- **आत्मेति** । अहंप्रत्यय-व्यावृत्तये तत्त्वशब्दः । अस्य च भूतोपादानत्वेन भूतपाङ्क्षप्रवेशः । उपादेयस्य उपादानात्मकत्वप्रसिद्धेरिति भावः । अत्र सर्ववस्तूनां पाङ्क्षषट्कप्रवेशविवक्षायां महत्तत्वादिकमप्युपलक्षणीयम् । पृथिव्यादिकं चाभिमानिसहितं ग्राह्यम् ।।१.१८।।

**काशी.खं-** पृथिवी भूतं, अन्तरिक्षादि भौतिकं, दिशः प्राच्यादि-स्थेन्द्रादिपुर्यः, अवान्तरदिशाः कोणस्थाग्न्यादिपुर्य इत्येकमधिभूतपाङ्क्षम् । न चान्तरिक्षादिलोकप्रायपाठात् पृथिवीशब्दो भूलोकमात्रपर इति लोकपाङ्क्षत्वमाद्यस्य युक्तम् । अत एव द्वितीयं देवपाङ्क्षं, तृतीयं भूतपाङ्क्षमिति वाच्यम् । भूतमात्रत्वस्य तृतीयेऽप्यभावात् भूतादित्वस्य च त्रितयेऽपि सम्भवात् इत्यधिभूतमित्युपसंहारस्वारस्येन भूतपाङ्क्षत्वस्यैव युक्तत्वाच्च । अग्निवायू भूते आदित्यादिभौतिकमित्यपरं पाङ्क्षम् । अबाकाशौ भूते, ओषधिवनस्पती भौतिकौ, आत्मा भूतोपादानमहंकारतत्वमन्यत् । अत्र सर्वपदार्थानां षट्कान्तर्भावपक्षे महत्तत्वादिकमप्युपलक्ष्यते । पृथिव्यादिकं चाभिमानिपार्थिवादिसहितं ग्राह्यम् । पृथिव्यादेरेवोपास्यरूप-विशेषाधिष्ठानत्वविवक्षायां तु यथाश्रुतमेवेति बोध्यम् । इत्येवं रूपं अधिभूतं भूतान्यधिकृत्य स्थितं सकार्यकारणभूतपाङ्क्षत्रिकमुक्तमिति शेषः । अथानन्तरमध्यात्मं आत्मानं देहमधिकृत्य स्थितं पाङ्क्षत्रिकमुच्यत इति शेषः । प्राणादिसमानान्तमेकं पाङ्क्षं, चक्षुरादित्वगन्तमपरं, चर्मादि-

मज्ञान्नमन्यत् । अत्रापि पूर्ववत्सर्वान्तर्भावपक्षे मनःपदमन्तःकरणमात्रपरं ज्ञानेन्द्रियकर्मेन्द्रियभेदेन द्विविधबाह्यकरणानां मध्ये कर्मेन्द्रियसामान्यपरः वाक्शब्दः ज्ञानेन्द्रियाणां मध्ये नामग्राहि श्रोत्रं रूपग्राहिणां मध्ये गत्वाग्राहि चक्षुर्घ्राणोभयपरश्चक्षुःशब्दः अगत्वाग्राहित्वग्रसनोभयपरस्त्वक्-शब्द इति बोध्यम् । ईश्वरस्य तन्नियामकत्वं विशदयति- **एतदिति** । एतत् पृथिव्यादिपाङ्क्तषट्कमधि विधाय अधिकृत्य ऋषिर्मुख्यवेदद्रष्टा विष्णुरवोचत् । एतद्विधाय निर्माय अधि गुणाधिको विष्णुरवोचदिति वा । किमिति इदं सर्वं, उक्तं पृथिव्यादिसमुदायषट्कं पाङ्क्तं प्रत्येकं पञ्चकरूपं, वै भगवद्रूप-पञ्चकाधिष्ठितं च । तथा च प्रकृतो विष्णुः पाङ्क्तेन नारायणवासुदेव-सङ्कर्षणप्रद्युम्नानिरुद्धाख्यरूपपञ्चकेनैव पाङ्क्तं पृथिव्यादिपाङ्क्तषट्कं स्पृणोति बलयति कार्यजननक्षमं करोतीत्यवोचदित्यन्वयः । अत्र पृथिव्यग्निप्राण-चक्षुश्चर्मसु नारायणाख्यमेकमेव रूपं रूपषट्कं वा अन्तरिक्षादिषु वासुदेवाख्यरूपमित्यादि विभावनीयम् ।।१.१८।।

**रा.खं-** वेदविद्याप्राप्त्यर्थं पूर्वभाविविद्यान्तरमाह- **पृथिवीत्यादिना** । पृथिव्याद्यधिभूतपञ्चकत्रये प्राणाद्यध्यात्मपञ्चकत्रये च क्रमान्नारायणादि-वासुदेवान्ताः मूर्तयः पृथुत्वादिनिमित्तैः पृथिव्यादिषु स्थिताः पृथिव्यादिशब्दैः पञ्चभिः पञ्चभिरुच्यन्त इति ज्ञेयम् । इत्यधिभूतमिति भूतपञ्चकत्रये स्थितानि पञ्चरूपाण्युक्तानीत्यर्थः । तत्राऽत्मशब्दोऽहङ्कारतत्त्वपरः भूताधिकारत्वात् । अथेत्यर्थान्तरे तदाह- **अध्यात्ममिति** । आत्मनि देहे स्थितानि नारायणादिरूपाणि साधिष्ठानान्युच्यन्त इत्यर्थः । एतत् पृथिव्यादिवर्गषट्कं पाङ्क्तं पञ्चत्वसङ्ख्यायुक्तं वै खलु पाङ्क्तेन पञ्चत्व-सङ्ख्यायुक्तेन नारायणादिरूपेणैव पाङ्क्तं पञ्चत्वसङ्ख्यायुक्तं पृथिव्यादिकं स्पृणोति स्पृकृ प्राणने इत्युक्तेः बलयति स्वस्वव्यापारशक्तं करोति इत्यवोचदिति योजना ।।१.१८।।

उपनिषत्

ओमिति ब्रह्म । ओमितीद९ँसर्वम् । ओमित्येतदनुकृति ह स्म वा अप्यो श्रावयेत्या श्रावयन्ति । ओमिति सामानि गायन्ति । ओ९ँशोमिति शस्त्राणि श९ँसन्ति । ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति । ओमिति ब्रह्मा प्रसौति । ओमित्यग्निहोत्र-मनुजानाति । ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति । ब्रह्मैवोपाप्नोति ।।१.१९।।

भाष्यम्

ॐ नामा भगवान् विष्णुरधिकोच्चगुणत्वतः ।
यद्यद्रूपं भगवतस्तदिदं सर्वमेव च ।।

ओमेवाधिकपूर्णत्वात्तस्माद्यज्ञेषु चर्त्विजः ।
ओमित्येव स्वकर्माणि कर्वन्त्युद्दिश्य केशवम् ।।

अधिकोच्च शृणुष्वेति हरिमध्वर्युराह हि ।
अधिकोच्च महाधाम सूच्च देवेति चाऽदरात् ।।

प्रति प्रतिगृणात्येनं शंरूपात्युच्चशावन ।
इत्याह होता शस्त्रेषु तथैवान्येऽपि चर्त्विजः ।।

एवं स्वाध्यायकृच्चाऽह ब्रह्मप्राप्त्यर्थमञ्जसा ।
एवं जानन्त एते तु प्राप्नुवन्त्येव तत्परम् ।। इति च ।

**व्यास-** वेदविद्याभ्यासार्थिनः पूर्वभाविनीं प्रणवविद्यामाह- **ओमिति ब्रह्मेति** । तद्व्याचष्टे- **ओमिति** । न केवलमेकमेवरूपं भगवतः पूर्णत्वेन प्रणववाच्यम् । अपि तर्हि सर्वमपीत्युक्तम्- **ओमितीदं सर्वमिति** । तद्व्याचष्टे- **यद्यदिति** । भगवतः प्रणववाच्यत्वं कुत इत्यतो भगवन्तमुद्दिश्य

कर्मादि कुर्वद्भिः नियमेन तदादौ प्रणवस्यानुष्ठीयमानत्वादितिभावेन प्रवृत्तमोमित्येतदनुकृतीत्यादि । **आ श्रावयेति मन्त्रेण आश्रावयतीत्यत्र ओंकार एव न त्वोमित्यत उक्तम्** । ओमित्येतदनुकृतीति । ओमित्येतस्यानुरूपमिति । तद्वाक्यजातं व्याचष्टे- **तस्मादित्यादिना** । प्रणवस्य हरिवाचकत्वात् । तस्माद्यज्ञेष्वित्युक्तमेव विशदयन्नाह- **अधिकेत्यादिना** । अध्वर्युर्होतरि स्थितं हरिं ओम् अधिकोच्च शृणुष्व श्रावय मूलरूपमित्याह हि अध्वर्युः ओधामोदेवेति प्रतिगरं प्रतिगृणातीत्येतद्व्याचष्टे- **अधिकोच्चेति** । ओधामोदेव इत्येतेषां क्रमादर्था ज्ञेयाः । ओम् शों शावों इत्यादिशस्त्राणि शंसन्तीत्येतद्व्याचष्टे- **शं रूपात्युच्चशावनेति** । अत्र पदविभागः शंरूप अत्युच्चश अवनेति ओम् श ओम् श ओम् अव इत्यत्र प्रथमप्रणवोधिकोच्चेति पूर्वोक्तार्थः । इतरेषां क्रमादर्था ज्ञेयाः । अन्येऽपि ऋत्विजः तथैव ओमित्युच्चार्यैव सामादीनि गायन्ति । ओमिति ब्राह्मणः प्रवक्ष्यन्व्याकुर्वन्नाह- **ब्रह्मोपाप्नवानीति** । ब्रह्मैवोपाप्नोतीत्येतत्प्रणवविद्याफलवचनम् । तद्व्याचष्टे- **एवं जानन्त इति**

॥१.१९॥

**वादि-** अधुना वेदविद्यायामोङ्कारस्यात्यन्तरङ्गत्वात् तन्निष्ठविद्यामाह- **ओमिति ब्रह्मेति** । ब्रह्म परमात्मा । अधिकोच्चगुणत्वादोमित्युच्यते । एवं चकारोकाराभ्यामधिकोच्चत्वं ज्ञानवाचकेन मकारेण चोपलक्षणतया सर्वे गुणा गृह्यन्त इति कृत्वाऽधिकगुणोच्चत्वं सिध्यतीति ज्ञेयम् । न केवलं मूलरूपमोङ्कारप्रतिपाद्यं किन्तु मत्स्याद्यनन्तावताररूपं च प्रागुक्तव्युत्पत्त्या ओङ्कारप्रतिपाद्यम् । भगवतः ओङ्कारप्रतिपाद्यत्वमनुभवारूढं करोति- ओमिति । कृतिं कृतिं कर्म कर्म अनुसृत्य अनुकृति ओमित्युच्चार्य कुर्वति । ह स्म वै इत्यव्ययत्रयेण कर्मसु कर्मसु प्रसिद्धिं द्योतयति । तदेव दर्शयति - ओ श्रावयेति ओमिति शब्दसम्बुद्धिः ओ इति । तथा च हे ओ हे

अधिकोच्च नारायण श्रावय, अस्माभिरुच्चार्यमाणं मन्त्रं श्रावय श्रुणु । स्वार्थिको णिच् । स्वतन्त्रत्वात् स्वेच्छयैव श्रवणं, न तु परप्रेरणयेति सूचनाय स्वार्थिकणिजन्तप्रयोगः । इति इत्युक्त्वा श्रावयन्ति । पुनः सामगानाख्यकर्मण्यपि ओमित्युच्चार्य गायन्ति । शस्त्राणि गानरहितमन्त्रान् । ओम् अत्युच्चसुखरूप । ओशब्देनात्युच्चसुखं तत्सुखमिति भावेन आवृत्या योजना कृता । अव रक्षणे इति धातोः 'च्छ्वोः शूडनुनासिके च' इति वकारस्य उकारे कृते ओमिति शब्दनिष्पत्तिर्भवतीति भावेनाकारोपरिगत-वकारस्थानापन्नोकारस्य अर्थमाह- **अवनेति** । रक्षकेत्यर्थः इति संशन्ती पठन्ति । ओमित्ध्वर्युः प्रतिगरं प्रतिगृणातीत्यस्य वाक्यस्य धाम ओ देवेति प्रैषोच्चारणपूर्वकमर्थमाह- **अधिकोच्च महाधामेति** । अध्वर्युः प्रतिगरं गृ निगरणे इति धातोर्गरो मन्त्रः प्रतिमन्त्रमित्यर्थः । ओम् हे अत्युच्च ओधाम हे महाधाम ओदेव अत्युच्चदेव इत्युच्चार्य प्रतिगृणाति प्रति प्रतिमुखः सन् निगरणं करोति । ओमिति ब्रह्मा प्रसौति । सु प्रसव इति धातोः सोमलताया रसप्रसवं करोति । अग्निहोत्रकर्ता भवदनुज्ञयाऽग्निहोत्रं करोमीति वृद्धान् प्रति प्रार्थयते । ओं तथाऽस्त्वित्यग्निहोत्रमनुजानाति । प्रवक्ष्यन् प्रवचनं करिष्यन् ब्राह्मणोऽपि ओङ्कारवाच्यब्रह्मैव उपाप्नुवानीति मत्वा प्रागोमित्याह । एवं प्रणवमुच्चार्य स्वस्वकर्माणि कुर्वन् सर्वोऽपि जनः ब्रह्मैवाऽप्नोति ब्रह्मसमीपं गच्छति ॥१.१९॥

**श्री.भा-** वेदविद्याभ्यासार्थिनः पूर्वभाविनीं प्रणवविद्यामाह- **ओं इती ब्रह्मेतीत्यादिना** । तत्रोंकाररूपाक्षरत्वं ब्रह्मादेः कथ्यत इति प्रतीति-निवारणाय प्रमाणेनैव तद्याचष्टे- **ओं नामेति** । विष्णुर्मूलरूपी । अधिकोच्चगुणत्वत इति अकारोकारमकाराख्यवर्णत्रयात्मकोंकारस्य व्याख्यानम् । ओं इतीदं सर्वमिति वाक्यं ओंकारस्य सर्वजगदभेदप्रतीतिवारणाय व्याचष्टे- **यद्यद्रूपमिति** । अधिकपूर्णत्वादधिकपूर्णगुणत्वात् । ओंकारस्य

भगवद्वाचकत्वोपपादनाय प्रवृत्तस्य अप्यो श्रावयेत्यादिवाक्यजातस्य तात्पर्यमाह- **तस्मादिति** । अपिशब्दार्थोऽयम् । तस्मादेवेति सम्बन्धः । अधिकपूर्णगुणत्वेनोंकारस्य भगवद्वाचकत्वादेवेत्यर्थः । ओं इत्युच्चार्य केशवमुद्दिश्य स्वकर्माणि कुर्वन्तीति सम्बन्धः । ऋत्विजः अध्वर्यूद्गातृहोतृ-ब्रह्माणः । अन्यथा तन्न स्यादिति भावः । इदमुपलक्षणम् । अग्निहोत्रकर्तृब्राह्मणावपि ग्राह्यौ । तदेव विवृणोति- **अधिकोच्चेति** । आश्रावयेति मन्त्रं कर्त्रप्रतीतेस्तं दर्शयन् व्याचष्टे- **अधिकोच्चेति** । ओमित्यस्यार्थः अधिकोच्चेति । श्रावयेति स्वार्थे णिजिति भावेनोक्तं- **शृणुष्वेति** । श्रावयेति मन्त्रानुसारेण शृणुष्वेत्यस्यापि मूलरूपं श्रावयेत्यर्थ इत्यप्याहुः । आश्रावयन्तीत्यस्य तात्पर्यमाह- **हीति** । आश्रावयमन्त्रं पठन्तीत्यर्थः । ओमित्यध्वर्युः प्रतिगरं प्रतिगृणातीत्यत्रोक्तः प्रतिगरमन्त्रः क इत्यपेक्षायां ओधामो देवेति प्रतिगरमन्त्रमर्थतोऽनुवदति- **अधिकोच्चेति** । ओधाम ओ देवेति पदच्छेदः । तत्र ओ इत्यस्य अधिकोच्चेति । धामेत्यस्यार्थः महाधामेति । 'तेजः स्वरूपं च गृहं प्राज्ञैर्धामेति गीयत' इति वचनाद्धामशब्दस्तेज आद्यर्थः । ओदेवेत्यस्यार्थः- **सूच्चदेवेति** । देवशब्दपर्यायो दैवशब्दः । तथाचाधिकोच्चदेवेत्यर्थः । अत्राद्य ओमितिपदं भगवदधिकोच्चत्ववाचि द्वितीयं तु देवशब्दोक्तक्रीडादिगुणानामिति द्रष्टव्यम् । ओ इति द्विवारपठनाभिप्रायः आदरादिति । एनं प्रतीति । हरिमुद्दिश्येत्यर्थः । प्रतिगृणाति प्रतिगरमन्त्रं पठति । अध्वर्युरिति वर्तते । ओं शोमिति शस्त्राणि शंसन्तीत्यत्र कर्त्रप्रतीतेस्तं दर्शयन् किं तच्छस्त्रमित्यपेक्षायां ओं शों शावेति मन्त्रमर्थतोऽनुवदति- **शंरूपेति** । ओं श ओं श अवेति पदच्छेदः । तत्राद्यस्य ओमित्यस्य अधिकोच्चेत्युक्त एवार्थो द्रष्टव्यः । अवशिष्टपदार्थमाह- **शंरूपेति** । शंरूपं अत्युच्चशावनेति भाष्ये पदच्छेदः । तत्रत्यशस्यार्थः शंरूपेति । सुखरूपेत्यर्थः ।

आद्यमोमिति पदं भगवतः अधिकोच्चत्ववाचि । द्वितीयं तु सुखस्येति ज्ञातव्यम् । अवन रक्षकेत्यर्थः । शस्त्रेषु मन्त्रेषु मन्त्रविशेषेषु इत्याह इति भगवन्तं सम्बोधयतीत्यर्थः । अनेन शंसतीत्यस्य तात्पर्यमुक्तम् । ओंमिति सामानि गायंति ओं इति ब्रह्मा प्रसौति इति वाक्यद्वयाभिप्रायमाह- **तथैवान्येऽपीति** । अन्ये ऋत्विजः उद्गातारो ब्रह्माणश्च । ओंमिति ब्राह्मण इति वाक्याभिप्रायमाह- **एवमिति** । अध्वर्य्वादिवदित्यर्थः । प्रवक्ष्यन्नित्यस्यार्थो अञ्जसा स्वाध्यायकृदिति आह ओंमित्युच्चार्य स्वाध्यायं करोतीत्यर्थः । ब्रह्मोपाप्नवानीत्यस्यार्थो ब्रह्म प्राप्त्यर्थमिति। स्वाध्यायकृदिति सम्बन्धः । च शब्दादोमित्युच्चार्य भगवदुद्देशेनैवाग्निहोत्रमनुजानाति करोति यजमान इत्यस्य संग्रहः । ब्रह्मैवोपाप्नोतीति वाक्यमेकवचनात्सन्निहितप्रवचनकर्तुः ब्राह्मणस्यैव फलकथनपरमिति प्रतीतिं वारयन् एकवचनं बहुवचनार्थे इत्यभिप्रेत्य व्याचष्टे- **एवं जानन्त इति** । ओंकारस्य भगवद्वाचकत्वं ज्ञात्वा ओं इत्युच्चार्य कर्मकुर्वन्त इत्यर्थः । एते अध्वर्य्वाद्याः । ब्रह्मशब्दस्यानेकार्थत्वादत्र विवक्षितमर्थमाह- **तत्परमिति** । ब्रह्मेति बुद्ध्या विविक्तमनुवर्तते । तत ओंकारवाच्यं परं ब्रह्मैव प्राप्नुवन्तीत्यर्थः ।।१.१९।।

**श्री.खं-** वेदविद्याभ्यासिनः पूर्वभाविनां प्रणवविद्यामाह- **ओमिति ब्रह्मेत्यादिना** । ब्रह्म भगवान् विष्णुर्मूलरूपी अधिकोच्चगुणत्वतः ओमितिनामा ओंकारवाच्यः । न केवलं मूलरूपमेवाधिकोच्चगुणत्वेनोंकारवाच्यं किन्नाम यद्यद्भगवतो रूपं मत्स्यादिकं तदिदं सर्वं इति शब्देनोच्यते । अधिकपूर्णगुणत्वादोंकारवाच्यमेवेत्यर्थः । समस्तरूपसहितस्य भगवतः ओंकारवाच्यत्वं कुतस्सिद्धमिति चेत् भगवन्तमुद्दिश्य कर्मकर्तृभिः अध्वर्य्वादिभिर्नियमेन तदादावुच्चार्यमाणत्वादित्यभिप्रेत्याह- **अप्योश्रावयेत्या-दिना** । अपि तस्मादोंकारस्य भगवद्वाचकत्वादेव भगवदुद्देशेन कर्मकर्तारोऽध्वर्यवः ओ श्रावयेत्याश्रावयन्ति ओ इत्युच्चार्य आश्रावयेत्या-

श्रावयमन्त्रं पठन्ति । अन्यथा तन्न स्यादित्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् ।

यथोक्तं छान्दोग्ये- ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायत्येतस्यैवाक्षरस्यापचित्या इति । ननु भगवदुद्देशेन कर्मकर्तृभिरध्वर्युभिः ओ इत्युच्चार्याश्रावमन्त्रपठनेन ओ इत्यस्यैव भगवद्वाचकत्वं प्राप्तं नत्वोंकारस्य इत्यत उक्तम्- **ओमित्येतदनुकृतीति** । ओ इत्येतत् ओमित्येतदनुकृति ओमित्येतदक्षरसरूपम् । ओंकारोकारयोरेकार्थत्व मेवेत्यर्थः । ह स्म वा इति निपातत्रयेणेदमति सुप्रसिद्धमिति द्योतयति । तथा भगवदुद्देशेन कर्मकर्तारः उद्गातारः ओमित्युच्चार्य सामानि गायन्ति उद्गानमन्त्रान् पठन्ति । तथा भगवदुद्देशेन कर्मकर्तारो होतारः ओमित्युच्चार्य ओं शों शावेति शस्त्राणि शंसन्ति मन्त्रविशेषान् पठन्ति । तथा भगवदुद्देशेन कर्मकर्ताऽध्वर्युरोमित्युच्चार्य ओधामो दैवेति प्रतिगरं प्रतिगृणाति । प्रतिगरसंज्ञमन्त्रविशेषं पठति । तथा भगवदुद्देशेन कर्मकर्ता ब्रह्माख्यऋत्विक् ओमित्युच्चार्य प्रसौति सोमस्य प्रकर्षेण प्रसवनं कण्डनं करोति । तथा भगवदुद्देशेन कर्मकर्ता यजमानः ओमित्युच्चार्याग्निहोत्रमनुजानाति अनुतिष्ठतीति यावत् । तथाहं ब्रह्म परं ब्रह्मोपाप्रवानि प्राप्नुयामित्यभिप्रेत्य प्रवक्ष्यन् अञ्जसा स्वाध्यायकृत् ब्राह्मणः ओमित्याह । ओमित्युच्चार्य स्वाध्यायं करोतीत्यर्थः । एवं ओंकारस्य भगवद्वाचकत्वं ज्ञात्वा ओमित्युच्चार्य आश्रवयादिमन्त्रपाठपूर्वकं कर्मकर्तृणामध्वर्य्वादीनां फलमाह- **ब्रह्मैवेति** । एवं जानन्त एते अध्वर्य्वाद्याः ओंकारवाच्यं परब्रह्मैवोपाप्नोति । एकवचनं बहुवचनार्थे । उपाप्नुवन्ति प्राप्नुवन्तीत्यर्थः ।

**वरद-** इदानीं सर्वस्या अपि वेदादिविद्यायाः प्रणवमूलत्वात् वेदादिविद्याप्राप्तिसाधनत्वेन प्रणवाश्रितोपास्तिरित्युच्यते- **ओमिति ब्रह्मेत्यादिना** । तद्व्याख्याति- **ओंनामा भगवान् विष्णुरित्यादिना** । ओमित्येतन्नाम

परमेश्वरगुणवाचकमित्येतत् कथं ज्ञायत इत्याकाङ्क्षायामुच्यते- **ओमित्येतदनुकृति ह स्म वा अप्यो श्रावयेत्या श्रावयन्तीत्यादिना** । तस्यार्थः- **तस्माद्यज्ञेषु चर्त्विजः इत्यादि** । अध्वर्युप्रभृतयः ऋत्विजो यस्माद्यज्ञेषु नियमेनादावोंकारोच्चारणात् । अन्यथा तदयोगादित्यर्थः ।

भवेदेवं आश्रावणप्रतिगरादिमन्त्राणां विष्णुविषयत्वे तदुच्चारणसमये नियमेन उच्चार्यमाणत्वात् ओंकारस्य विष्णुनियामकत्वम् । होतृश्रवणादिमन्त्राणां विष्णुविषयत्वं कुत इत्यतः आश्रावणमन्त्रं हरिविषयतया व्याख्याति- **अधिकोच्च इति** । हरिं प्रति प्रतिगृह्णाति । प्रतिगरं स्तोत्रं जपतीत्यर्थः । ओꣳशोमिति होतुः शस्त्रशंसनमन्त्रः । तमपि हरिविषयतया व्याख्याति- **शंरूपेति** । ओं शं ओं श अव इति मन्त्रे पदविभागः । तत्र प्रथमपदस्य उच्चत्वलक्षणोऽर्थः । पूर्वोक्त एवानुसन्धेय इति तं द्वितीयपदस्यार्थमाह- **शं रूपेति** । द्वितीयचतुर्थपादयोरर्थमाह । अत्युच्चं शं सुखं यस्यासौ अत्युच्चः । पञ्चमपदस्यार्थमाह- **अवन इति** । अवन इति सम्बुध्यन्तं वेदितव्यम् । रक्षकेत्यर्थः । अनेन मन्त्रगतमप्येवेति पदं सम्बुध्यन्तं वेदितव्यम् । अध्वर्युप्रभृतिभ्यो व्यतिरिक्ता अप्यृत्विजः केशवार्थं स्वं स्वं कर्म ओंकारोच्चारणपूर्वमेव कुर्वन्तीत्यर्थः । ब्रह्मैवोपाप्रोति इत्यस्यार्थः- **एवं जानन्त इति** ।।१.१९।।

**काशी** - प्रणवस्य सर्ववेदमूलत्वात्सर्वोपासनाङ्गत्वाच्च वेदविद्याभ्यासिनः पूर्वभाविनीप्रणवविद्योच्यते- **ओमिति ब्रह्मेति** । अत्रोङ्कारः परापरब्रह्मतयोपासितः शब्दमात्रोऽपि परापरब्रह्मप्राप्तिसाधनमिति तदुपासनं विधीयते ओमिति शब्दरूपं ब्रह्मेत्युपसीत यत ओमितीदं सर्वं शब्दरूपमित्यभिधानाभिधेययोरैक्यमुच्यत ओङ्कारस्तुत्यर्थमुत्तरो ग्रन्थः इति परकीयव्याख्यानमप्रामाणिकं प्रमाणविरुद्धं च । मिथ्योपासनस्यानर्थहेतुत्वादित्याशयेन प्रमाणेनैव व्याचष्टे- **ओं नामेति** । यज्ञादिव्यावृत्तये-

**भगवानिति** । ब्रह्मशब्दार्थः विष्णुर्मूलरूपीत्यर्थः । गुणैरधिकपूर्णत्वादित्यर्थः । 'अत्युच्चश्चाखिलैः गुणैः' इति छान्दोग्यभाष्योक्तेः । अधिकोच्चगुणेत्य-कारोकारमकारार्थकथनम् । इदंशब्देन जगद्ग्रहणे तत्रोक्तनिमित्ताभावादोङ्कार-वाच्यत्वोक्तिरयुक्ता अनुपयुक्ता चेत्यतस्तद्व्याचष्टे- **यद्यद्रूपमिति** । चशब्दः समुच्चये । न केवलं मूलरूपमेवम्, किन्तु यद्यदवतारादिरूपं तदिदं सर्वमपि गुणैरधिकपूर्णत्वादेवोंकारवाच्यं नतूपचारादिनेत्यर्थः । भगवद्रूपाणां गुणपूर्णत्वेनोंकारवाच्यत्वं कुत इत्याकांक्षायां प्रवृत्तस्योमित्येतदनुकृती-त्यादिवाक्यजातस्य तात्पर्यमाह- **तस्मादिति** । चोऽवधारणे । ओंकारस्य भगवद्वाचकत्वादेव ओमित्युच्चार्यैव केशवमुद्दिश्य च कर्माणि कुर्वन्तीत्यर्थः । ओंकारो भगवद्वाचकस्तदुद्देश्यककर्मादौ शिष्टैरुच्चार्यमाणत्वात् अन्यथा तन्न स्यादित्युक्तं भवति । एवमोंकारस्य सामान्यतो भगवद्वाचकत्वे सिद्धे गुणपूर्णत्वेनैव सर्वरूपवाचकत्वसिद्धये ओश्रावयेत्यादिकं व्याचष्टे- **अधिकोच्चेति** । ओंशब्दार्थोऽयं अकारेणाधिकं प्रोक्तमुकारेणोच्चमुच्यते इति छान्दोग्यभाष्योक्तेः । श्रावयेत्यस्य होतृमन्त्रं मूलरूपमन्यांश्च प्रतिश्रावयेत्यर्थे स्थिते आदौ मत्कृतप्रार्थनां त्वं श्रुणुष्वेति स्वार्थे णिचमाश्रित्येत्यधिकोऽर्थ उक्त इति सम्प्रदायः । हरिं होतृस्थम् । नन्वेतावता होतृस्थरूपस्य ओंकारवाच्यत्वमात्रं लभ्यते । नतु गुणपूर्णत्वेनोङ्कारवाच्यत्वमित्यत ओमित्येतदनुकृतिह स्म वा इत्यस्य तात्पर्यं सङ्क्षेपेणाह- **हीति** । ओंकारस्य ओङ्कारानतिभिन्नरूपत्वमधिकोच्चार्थत्वं च प्रसिद्धमित्यर्थः । एतेन ओमित्यस्योङ्कारस्यैतदोंकारात्मकमनुकृतिं अनुकरणमनतिभिन्नरूपं ह स्म वै इति निपातत्रयेणोंकारस्य यौगिकत्वमोंकारस्य तदनुकृतित्व-मधिकोच्चार्थत्वं च प्रसिद्धमिति सूच्यते । अत एव छान्दोग्ये ओं इत्याश्रावयतीति श्रूयते । अत एव च ओं धामो देव इत्यत्रोमाङोश्चेति पररूपम् । तथाच होतृस्थरूपस्याधिकोच्चत्वेनोंकारवाच्यत्वे तदनुकार्योंकारे

मकारयोगेन गुणैरधिकपूर्णत्वेन तद्वाच्यत्वं सिद्ध्यतीत्युक्तं भवति । एवं आश्रावयेत्यत्रापि अकारेण होतृस्थरूपं सम्बोध्य आ समन्तात् श्रावयेत्युच्यते । अकारद्वयस्य सवर्णदीर्घे अधिकाधिकेत्यर्थो वा । ओंमित्यध्वर्युरित्युत्तर-वाक्ये ओमित्यनेन ओङ्कारग्रहणादप्योंकारस्योंकारानुकृतित्वं सिध्यत्या-शयनेनाध्वर्युरित्यस्यानुवृत्या लाघवेन च व्यवहितमपि तद्वाक्यमोधामो दैवेति प्रतिगरमन्त्रार्थोक्तिपूर्वकमादौ व्याचष्टे- **अधिकोच्चेति** । ओंकारस्यार्थो अधिकोच्चेति । धामेत्यस्य महाधामेति व्याख्या निरवधिकतेज इत्यर्थः । 'तेजः स्वरूपं च गृहं प्राज्ञैर्धामेति गीयते' इत्युक्तेः । सूच्चेत्योंकारस्यार्थः । देवेति दैवशब्दार्थः स्वार्थे अणितिभावः यद्यप्यत्र वृद्धिरेचीति भवितव्यम् । ओंकारस्याभावेनोमाङोश्चेत्यस्याप्रवृत्तेः तथाप्योंकारस्योंकारानुकृतित्वादेव पररूपम् ।

यद्वा आङ् प्रश्लेषात् तन्निमित्तं पररूपं आततेति तदर्थो धामविशेषणं अत एव महाधामेत्युक्तमिति बोध्यम् । ओ ओं इति द्विरुक्तिः कुत इत्यत उक्तमादरादिति इत्यध्वर्युप्रतिहोतृस्थहरिमुद्दिश्य प्रति गृणाति प्रतिगरं मन्त्रं पठतीत्यर्थः । अनेन ओमितीत्यस्योंकारानुकृत्योंकारपूर्वमित्यर्थः सूचितः ओं शोमित्युपात्तप्रतीकस्य ओं शों शावेति मन्त्रस्यार्थकथनपूर्वकं तद्वाक्यार्थमाह शंरूपेति अत्र 'ओंनामा भगवान्विष्णुरधिकोच्चगुणत्वत'-इत्युक्तप्रकारेण प्रथमोंकारो भगवत्परो नतु शेत्यस्य विशेषणमिति ज्ञापनाय न व्याख्यातः । शेत्यस्यार्थः । शंरूपेति सुखस्वरूपेत्यर्थः । द्वितीयोंकारस्याधिकोच्चत्वेन प्रमितेत्यर्थः । 'अकारेणाधिकं प्रोक्तमुकारेणोच्च-मुच्यते' । 'तथामितं सर्ववेदैर्मकारेणाभिधीयते । अधिकोच्चमिति ज्ञातमो-मित्यस्यार्थ ईरित'। इति छान्दोग्यभाष्योक्तेः तस्यैव तात्पर्यार्थोऽत्युच्चेति । अत्युच्चं शं सुखं यस्य तत्सम्बुद्धिरित्युच्चशेति अत ओं शं इत्यनयो-र्नपुनरुक्तिरिति भावः । अवेत्यस्यार्थो- **अवनेति** । रक्षकेत्यर्थः ।

एवमुपासित ईश्वरः स्वरूपसुखाभिव्यक्तिं दत्वा रक्षतीति श्रुत्याशयः शस्त्रेषु शस्त्रमन्त्रशंसनकालेषु इत्याह इत्यर्थकमन्त्रं पठतीत्यर्थः । एतेन होतारः ओं शां शावेति मन्त्रमुच्चार्य शस्त्रमन्त्रान्पठन्तीति श्रुत्यर्थः उक्तो भवति । ओं इति सामानि गायन्ति ओमिति ब्रह्मा प्रसौति ओमित्यग्निहोत्रमनुजानातीति वाक्यत्रयतात्पर्यमाह तथैवेति । चो हेतौ ओंकारस्य विष्णुवाचित्वादेवान्ये उद्गात्रादयोऽपि ऋत्विजस्तथैव ओंमित्युच्चार्यैव विष्णुमुद्दिष्य स्वस्वकर्माणि कुर्वन्तीत्यर्थः । प्रवक्ष्यन्नित्युपपदलक्षणं अध्येष्यन्नित्यपि ग्राह्यमित्याशयेन तद्वाक्यतात्पर्यमाह- **एवमिति** । स्वाध्यायकृत् अध्ययनं प्रवचनं च करिष्यन्नोमित्येवमाह किमर्थं ओंकारव्याख्यानभूतवेदाध्ययनादीनां स विशेषतो ब्रह्मप्राप्त्यर्थं मुक्त्यर्थमिति यावत् । ब्रह्मैवोपाप्नोत्यस्य तात्पर्यमाह एवं जानन्त इति । ओंकारवाच्यगुणपूर्णत्वेन विष्णुं जानन्त इति ब्राह्मणशब्दार्थोक्तिः एते विष्णुमुद्दिश्य कर्मकर्तारोऽध्वर्यादयः परं तद्ब्रह्म विशेषतः प्राप्नुवन्त्येवेत्यनेन श्रुतावेवकारस्यायोगव्यवच्छेदार्थत्वमुक्तम् । तेनादावपरं ब्रह्म प्राप्तावपि न विरोधः एवं ब्राह्मण ब्रह्मोपाप्नुवानीति ब्रह्मैवोपाप्नोतीत्येषां यथायोगं पूर्ववाक्येष्वपि सम्बन्ध इत्युक्तं भवति । इत्थं च बाह्यान्तरानन्तभगवद्रूपप्रतिपादकवेदाध्ययनादावुच्चार्यमाणत्वा-दोंकारस्य गुणाधिकपूर्णत्वेन सर्वरूपवाचकत्वसिद्धिरित्यभिसन्धिः ॥१.१९॥

**काशी.खं** - ततश्चायमर्थः विष्णोः मूलरूपस्य बाह्यान्तरावताररूपाणां चोंकारवाच्यत्वाभावे तत्तद्रूपप्रतिपादकविद्याभिरोंकारपूर्वकमुपासनानुपपत्ति-रतस्तेषां तद्वाच्यत्वं प्रतिजानीते- **ओमिति** । ब्रह्म परब्रह्ममूलरूपं ओमित्युच्यते तथा इदं बाह्यान्तरावताररूपं सर्वं ओंमित्युच्यते अकारोकारमकारात्मकोंकारेण वेदमेयैर्गुणैरधिकोच्यत्वस्य प्रतिपादनात् । तस्य च सर्वरूपेष्वविशेषादिति भावः । एतदेवोपपादयति । ओमित्येतदिति । अत्रापि ब्राह्मणः ब्रह्मोपाप्नुवानीति ब्रह्मैवोपाप्नोतीत्येतद्वचनविपरिणामेन

सम्बध्यते एवमुत्तरत्रापि अपिशब्दो हेतौ विष्णोरोंकारवाच्यत्वादेव विष्णुमुद्दिश्य कर्म कुर्वन्तो अध्यर्यवः ब्राह्मणो विशेषतो ब्रह्मज्ञानिनो भूत्वा ब्रह्मोपाप्नुवामेति कामनया अधिकोच्चहोतृस्थविष्णो अस्मत्कृतपार्थनादिकं श्रुत्वा मूलरूपमन्याश्च प्रतिश्रावयेत्येवमाश्रावयन्ति । उच्चैः पठन्ति अन्यथा तन्न स्यादिति भावः । एतावता विष्णोरोकारवाच्यत्वसिद्धावपि कथमोंकारवाच्यत्वसिद्धिरत उच्यते ओ इत्येतदोमित्यस्यानुकृति अनुकरणं स्वरूपतोऽर्थतश्चानतिभिन्नरूपं अनुरूपमिति टीकाया अप्ययमेवार्थः । हस्म वै इति निपातत्रयमुक्तार्थप्रसिध्यर्थं तथा चोकारवाच्यत्वेनैवोंकार-वाच्यत्वसिद्धिरित्याशयः । रूपान्तराणामप्योंकारवाच्यत्वसिध्यर्थमुच्यते । ओमित्युच्चार्य सामानि गायन्त्युद्गातारः ओं शों शावेत्युक्त्वा शस्त्राणि शस्त्रमन्त्रान् शंसन्ति पठन्ति होतारः अध्वर्युः ओमित्यनुकृत्योंकार-पूर्वकमोधामो दैवेति प्रतिगरमन्त्रं प्रतिगृणाति पठति ब्रह्म च ओमित्युच्चार्य प्रसौति सोममभिषुणोति । एवमग्निहोत्रादिकमोमित्यनुजानाति तस्य समृद्ध्यर्थत्वेनानुज्ञारूपत्वात् यथोक्तं छान्दोग्यभाष्ये समृद्धिः ओमितीरितेत्यादि । तद्वत्वं चाश्रयतया दातृतयाचेति समृद्धं ब्रह्म कर्मसमृद्धिदमस्तु इति तदर्थः । तथा ब्रह्माणतीति ब्राह्मणः विशेषतो ब्रह्मज्ञानी सन् ब्रह्मोपाप्नुवानि प्रापयामीति कामनया प्रवक्ष्यन्नध्येष्यं च ओमित्याह कृत्स्नवेदस्योंकारव्याख्यानत्वादित्याशयः ततो ब्राह्मणो विशेषतो ब्रह्मज्ञानी सन्ब्रह्म प्राप्नोत्येव तथाचोंकारेण, सामान्यतो ब्रह्म जानतोऽपि ब्रह्मप्राप्त्यर्थं विशेषतो ब्रह्म जिज्ञासोर्वेदाध्ययनप्रवचनादि-दर्शनात् तत्सामशास्त्रादिसकलवेदगतरूपाणां तत्र तत्प्रतिपाद्यबाह्यन्तररूपाणां च सर्वेषामेव मूलभूतोंकारवाच्यत्वसिद्धिरित्यभिसन्धिः ।।१.१९।।

**रा.खं**- वेद्यविद्याभ्यासार्थिनः पूर्वभाविनीं प्रणवविद्यामाह- **ओमिति ब्रह्मेति** । ब्रह्म विष्णुः ओं इत्युच्यते । अकारोकारौ अधिकोच्चत्ववाचकौ योग्यतया

गुणानामन्वयः, अधिकोच्चगुणत्वहेतुनेति भावः । न केवलं मूलरूपी विष्णुरेव ओं नामा । इदं सर्वं मत्स्यादिसर्वरूपजातम् ओमित्युच्यते । सर्वरूपाणाम् अधिकगुणपूर्णत्वादिति भावः । तथा च सूत्रं ॐ 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हीति' ॐ । कुतो विष्णोरोंनामत्वं ज्ञायत इत्यतो विष्णुमुद्दिश्य कर्मादि कुर्वद्भिः नियमेन तदा तदा ओमित्युच्चार्यमाणत्वादिति भावेनाऽह- **ओमित्येतदनुकृतीत्यादि** । ओं अधिकोच्चहोतृस्थविष्णो श्रावय स्वमूलरूपं श्रावयेति आश्रावयन्ति उच्चैरुच्चारयन्ति अध्वर्यवो होतृस्थं हरिं प्रतीत्यर्थः । यदि हरिओंन्नामा न स्यात् तदाऽध्वर्युः तथा न ब्रूयादिति भावः । ओं श्रावयेति वाक्ये ओङ्कारो नोपलभ्यत इत्यत उक्तम् । ओमित्येतदनुकृतीति । एदनुरूपं ह स्म वै ओ इत्येतदोङ्कारानुकरणरूपं प्रसिद्धमित्यर्थः । अपिर्वक्ष्यमाणमन्त्रसमुच्चये । ओमिति सामानीति । उद्गातृप्रस्तोतृप्रतिहर्तृसुब्रह्मण्याख्याश्चत्वारः उद्गातारः । ओमिति विष्णुमुद्दिश्य चत्वारो होतृगणस्थाः ॐशोशावेति ॐअधिकोच्च श सुखरूप ओं श अत्युच्चसुख विष्णो अव रक्ष इत्युक्त्वा शस्त्राणि शंसन्तीत्यर्थः । ओमितीति । ओ धामो देवेति ओ अधिकोच्च धाम महाधाम ओ देव सूच्चदेवेति प्रतिगरं मन्त्रम् अध्वर्युः प्रतिगृणाति उच्चारयति । ओमिति विष्णुमुद्दिश्य ब्रह्मा ब्रह्माख्यऋत्विक् प्रसौति सोममभिषुणोतीत्यर्थः । ओमित्यग्निहोत्रमिति । विष्णुः कर्म साङ्गं सफलं करोतीत्यर्थः । ब्राह्मणः प्रवक्ष्यन् व्याकरिष्यन् स्वाध्यायाध्ययनादिकं करिष्यन् ब्रह्म विष्णुम् उपाप्नवानीति भावेनोमित्याहेत्यर्थः । तत्किं तदभिसन्धिर्मृषा भवति नेत्याह । ब्रह्मोपाप्नवानीत्यभिसन्धिपूर्वकं मन्त्रानुच्चारयेयुः तदा ब्रह्म प्राप्नुवन्त्येवेत्यपि ध्येयम् ।।१.१९।।

उपनिषत्

ऋतं च स्वाध्यायप्रवचने च । सत्यं च स्वाध्यायप्रवचने च । तपश्च स्वाध्यायप्रवचने च । दमश्च स्वाध्यायप्रवचने च । शमश्च स्वाध्यायप्रवचने च । अग्नयश्च स्वाध्यायप्रवचने च । अग्निहोत्रं च स्वाध्यायप्रवचने च । अतिथयश्च स्वाध्यायप्रवचने च । मानुषं च स्वाध्यायप्रवचने च । प्रजा च स्वाध्यायप्रवचने च । प्रजनश्च स्वाध्यायप्रवचने च । प्रजातिश्च स्वाध्यायप्रवचने च ॥१.२०॥

सत्यमिति सत्यवचा राथीतरः । तप इति तपो नित्यः पौरुशिष्टिः । स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः । तद्धि तपस्तद्धि तपः ॥१.२१॥

भाष्यम्

ऋतं च स्वाध्यायप्रवचने च कर्तव्यानि । प्रवचनं व्याख्यानम् । यथार्थज्ञानम् ऋतम् । तत्पूर्वकं यथार्थवचनं करणं च सत्यम् ।

ऋतं यथार्थविज्ञानं सत्यं तत्पूर्विका कृतिः ।
ध्यानसत्ये पूज्यपूजा तप इत्यभिधीयते ॥ इति शब्दनिर्णये ।

सर्वकर्मकृतिकालेष्वपि स्वाध्यायप्रवचनयोः कर्तव्यत्वात्तयोः सर्वत्र अनुषङ्गः ।

मन्त्रो मन्त्रार्थवचनमन्यस्य स्वात्मनोऽपि वा ।
सर्वकर्मसु कर्तव्यौ सर्वकर्मात्मकौ ततः ॥ इति कर्मतत्त्वे ।

आत्मनश्चेन्मनसैवार्थवचनम् ।

**मानुषं मानुषो धर्मो देवा अपि हि मानुषे ।**
**मनुष्यवत् प्रवर्तन्ते नैवैश्वर्यप्रकाशिनः ।। इति च ।**

**प्रजाया रक्षणं चैव पुनः प्रजननं तथा ।**
**प्रकृष्टजातिकरणं कर्मभिस्तनये पितुः । इति च ।**

**सत्ये तपसि वा चीर्णे सर्वं कर्म कृतं भवेत् ।**
**स्वाध्याये च प्रवचने ह्यन्तर्भावो विशेषतः ।। इति च ।।**

**यं यं क्रतुमधीते तेन तेनास्येष्टं भवति इति च श्रुतिः ।**
**जप्येनैव तु संसिध्येद् ब्राह्मणो नात्र संशयः ।**
**कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते । इति भारते ।**

**सम्यज्ज्ञात्वा तु यो विष्णुं व्याख्यायीत जपेत च ।**
**न तस्य किञ्चिदकृतं कर्तव्यं मुच्यते च सः ।। इति कर्मतत्त्वे ।।**

**व्यास**- वेदाख्यब्रह्मविद्याकामस्य तत्प्राप्त्यर्थं पूर्वभाविनियमाश्चोच्यन्ते- **ऋतं च स्वाध्यायेत्यादिना** । तत्राध्याहार्यं भागं अन्वयं दर्शयन्नाह- **ऋतं चेति** । प्रकृष्टवचनं साधुभाषणं प्रवचनमिति प्रतीतिं वारयन् ऋतत्व-सत्यत्वयोः एकार्थत्वप्रतीतिनिरासाय प्रवचनादिशब्दान्व्याचष्टे- **प्रवचनमित्यादिना** । ऋतसत्यपदव्याख्यानं प्रमाणेन द्रढयति- **ऋतमिति** । तत्पूर्वकवचनं च सत्यमिति शेषः । तपः शब्दस्य संतापे प्रसिद्धत्वादत्र विवक्षितं तपःशब्दार्थमाह- **ध्यानेति** । ऋतसत्यादिषु स्वाध्यायप्रवचन-योरनुषङ्गे कारणमाह- **सर्वेति** । प्रतिदिनं स्वाध्यायप्रवचने कुर्यादित्यर्थः । सर्वकर्मकृतिकालेऽपि स्वाध्यायप्रवचनयोः कर्तव्यत्वमुक्तम् । तत्प्रमाणेन द्रढयति- **मन्त्रो वेदाध्ययनमिति** । मन्त्रार्थवचनं वेदव्याख्यानमात्मनो वा कर्तव्यमित्युक्तम् । तदयुक्तम् । प्रवचनस्य शिष्यापेक्षत्वादित्यत आह- **आत्मन इति** । प्रतीतेर्मानुषशब्दार्थमाह- **मानुषमिति** । ज्ञानाद्यतिशयेऽपि न

मानुषधर्मस्त्याज्य इति भावः । एतदेवाचारेण समर्थयते- **देवा इति** । प्रजाप्रजननप्रजातिशब्दानामेकार्थत्वप्रतीतिं वारयन्व्याचष्टे- **प्रजाया इति** । प्रकृष्टजातिः द्विजत्वादिः । ऋतसत्यादीनां श्रेयःसाधनत्वं समं एकस्य वाधिकमित्यपेक्षायामृषिमतान्याह- **सत्यमित्यादिना** । उक्तानामृषिमतानां साम्यमुत एकस्यातिशय इत्यपेक्षायामादिमतद्वयं समं तृतीयमतिशेत इत्याह- **सत्य इति** । स्वाध्यायप्रवचनयोः ऋतादेः सर्वस्याप्यन्तर्भाव उक्तः । तं श्रुतिस्मृतिभिः साधयति- **यं यमिति** । क्रतुं ज्ञानकारणं शास्त्रं अधीते अध्यापयति च । जप्येन वेदपाठादिना । मित्रदेवताकसर्ववेदात्मक-गायत्रीजपवान्मैत्रः अतः अन्यकरणाभावेऽपि जप्येनैव संसिध्येत् ।। ।।१.२०-२१।।

**वादि-** ऋतं वाक्येषु यथार्थज्ञानम् । सत्यं यथार्थज्ञानपूर्वं कर्म चेत्यर्थः । यः कोऽपि नियमः स्वाध्यायप्रवचने विना न फलतीति भावेन श्रुतिः प्रत्येकं नियमेषु तयोरावृत्तिमाहेति ज्ञेयम् । तदिदमाह भाष्यकारः- **मन्त्रो मन्त्रार्थवचनमिति** । मन्त्रोऽध्ययनं मन्त्रार्थवचनमित्यर्थः । ध्यानसत्ये पूज्यपूजा तप इत्यभिधीयते इत्यनुशासनादत्र तपो ध्यानम् । दम इन्द्रियनिग्रहः । शमः शान्तिः । अग्नयस्त्रेताग्नयः सेव्या इत्यर्थः । अतिथयश्च पूज्याः । मानुषं वेदाधिकारिणामपेक्षितं स्नानसन्ध्यावन्दनादि-नित्यनैमित्तिकं कर्म । प्रजा प्रजारक्षणम् । तदाऽपि स्वाध्यायप्रवचने कर्तव्ये इत्यर्थः । प्रजननं प्रजोत्पत्तिः । तदापि जातकर्मकरणसमये स्वाध्यायप्रवचने कर्तव्ये इत्यर्थः । प्रजातिः उपनयनादिना प्रकृष्टजाति-करणम् । उक्तेषु सर्वेषु साधारणनियमेषु एकैकस्य एकैकत्र निष्ठाविशेषोऽप्यस्तीत्याह- **सत्यमितीति** । सत्यवचा राथीतरः रथीतरपुत्रः ऋषिरुक्तधर्मेषु सत्यमधिकमिति मन्यते । तप एव नित्यं यस्य सः तपोनित्यः पुरुशिष्टस्यापत्यं पुमान् पौरुशिष्टिस्तप एवाधिकमिति मन्यते ।

अत एव सत्यवचास्तपोनित्य इति च तपसोर्विशेषणद्वयम् । मौद्गल्यः मुद्गल्यपुत्रो नामतो नाकः कश्चन, ऋषिः स्वाध्यायप्रवचने एवाधिकमिति मन्यते । श्रुतिरप्येषु त्रिषु मतेष्वन्तिमपक्षमेव स्तौति- **तद्धि तप इति** । तत् स्वाध्यायप्रवचनकरणं तपो हि । आदराद्द्विरुक्तिः ।।१.२०-२१।।

**श्री.भा-** ब्रह्मविद्यामर्थयमानस्य तत्प्राप्त्यर्थं तत्पूर्वभाविनो यमनियमानाह- **ऋतं चेत्यादिना** । ऋतं चेत्यादेर्वाक्यस्य साकांक्षत्वादध्याहारेण तावन्निराकांक्षतां दर्शयति- **ऋतं चेत्यादिना** । सत्यं चेत्यादावप्येवमेव निराकांक्षता द्रष्टव्येति भावः । प्रवचनं प्रकृष्टवचनम् । साधुभाषणमिति यावत् इति व्याख्यानमसदिति भावेन प्रवचनशब्दार्थमाह- **प्रवचनमिति** । ऋतसत्यशब्दयोः पौनरुक्त्यपरिहारायार्थभेदमाह- **यथार्थेति** । तत्पूर्वकं यथार्थज्ञानपूर्वकं यथार्थवचनं सत्यम् । तथा तत्पूर्वकं यथार्थज्ञानपूर्वकं करणं कर्मकरणं च सत्यमित्यर्थः । अत्र प्रमाणमाह- **ऋतमिति** । तत्पूर्विका यथार्थज्ञानपूर्विका कृतिः कर्मकृतिः । इदमुपलक्षणम् । तत्पूर्वकं यथार्थवचनं चेत्यपि ग्राह्यम् । तपःशब्दस्य संतापार्थता प्रतीतिवारणाय तपः शब्दार्थं प्रमाणशेषेण दर्शयति- **ध्यानसत्ये इति** । पूज्यानां गुर्वादीनां पूजा । तथाच ध्यानेत्यनेन मानसं तपः सत्येत्यनेन वाचनिकं तपः, पूज्यपूजेत्यनेन शारीरं तपः, इत्येवं त्रिविधं तपः तपःशब्देन विवक्षितमिति भावः।

ननु सत्यं चेत्यादौ सत्यादिभिः सह पुनः स्वाध्यायप्रवचनयोः कर्तव्यत्वोक्तिरयुक्ता । ऋतं च स्वाध्यायप्रवचनेचेत्यनेनैव वाक्येन तयोः कर्तव्यतायाः उक्तत्वादित्यतः सत्यादौ सर्वत्र स्वाध्यायप्रवचनयोरनुषंगे कारणमाह- **सर्वकर्मेति** । सत्यशब्दार्थानुवादोऽयम् । 'सत्यं तत्पूर्विका- कृतिः' इत्युक्तत्वात् । इदमुपलक्षणम् । तथा सत्यतपआद्यनुष्ठानकालेष्व- पीत्यर्थः । सर्वत्र सत्यादौ । सर्वकर्मकृतिकालेष्वपि स्वाध्यायप्रवचनयोः

कर्तव्यत्वे प्रमाणं चाह- **मन्त्र इति** । मन्त्रो वेदाध्ययनम् । अन्यस्य स्वात्मन इति कर्मणि षष्ठी । सर्वकर्मसु सर्वकर्मकृतिकालेषु । मन्त्रार्थवचनं मन्त्रश्चेतीमौ कर्तव्यौ । ततः सर्वकर्मसु कर्तव्यत्वात् सर्वकर्मात्मकौ सर्वकर्मप्रधानौ । तत एव सत्यादिष्वनुषक्तावित्यर्थः । ननु स्वात्मनो मन्त्रार्थवचनमिति प्रमाणोक्तमयुक्तम् । प्रवचनस्य शिष्यसापेक्षत्वेन स्वात्मानं प्रत्येव प्रवचनायोगादित्यतस्तदभिप्रायमाह- **आत्मनश्चेदिति** । आत्मनश्चेन्मन्त्रार्थवचनं विवक्षितं तदा मनसैवार्थवचनं युक्तिभिरनुचिन्तनात्मकं मननं ध्यानं वा तदर्थतया विवक्षितमित्यर्थः । मानुषं च इत्यत्रोक्तमानुषस्य कर्तव्यत्वमप्रतीतेः प्रमाणेनैव व्याचष्टे- **मानुषमिति** । ज्ञानाद्यतिशयेऽपि न मानुषो धर्मस्त्याज्य इति भावः । एतदेवाचारेण समर्थयते- **देवा अपीति** । मानुषे मानुषदेहप्राप्तिदशायाम् । अन्यैः प्रवर्तितव्यमिति किमु वक्तव्यमित्यपिशब्दार्थः । ऐश्वर्यं ज्ञानादि हीति देवत्वे देववच्चेष्टा मानुषत्वे च मानुषी इत्यादिप्रमाणप्रसिद्धिं दर्शयति । उक्तं चान्यत्र भगवत्पादैः 'प्रजायते हि यत्कुले यथायुगं यथावयः । तथा प्रवर्तनं भवेद्दिवौकसां समुद्भवे' । 'धर्मो हि सर्वविदुषामपि देवतानां प्राप्ते नरेषु जनने नरवत्प्रवृत्तिः । ज्ञानादिगूहनमुताध्ययनादिरत्र' इति । प्रजा प्रजननप्रजातिशब्दान् एकार्थत्वप्रतीतिं वारयन् प्रमाणेनैव व्याचष्टे- **प्रजाया इति** । पुत्रशिष्यादिरूपप्रजाया इत्यर्थः । तथा च प्रजाशब्देन प्रजारक्षणं ग्राह्यमिति भावः । रक्षणं चात्रान्नज्ञानादिदानेन भयादिनिवारणेन च द्रष्टव्यम् । पुनः प्रजननं पुत्ररुपेण सन्ततिकृतिः । पुरुषस्य स्वपितुः सकाशाज्जन्म प्रथमं जननं पुत्ररूपेण जननं च पुनः प्रजननम् । पुत्रदेहस्य स्वदेहांशत्वात् आत्मा वै पुत्रनामासीति श्रुतेः । तथाच प्रजननशब्देन पुनः प्रजननमेव विवक्षितमिति भावः । प्रजातिशब्दार्थः- **प्रकृष्टेति** । पितुः कर्तरि षष्ठी । पित्रा तनये उपनयनादिकर्मभिः ब्राह्मणत्वाख्यप्रकृष्टजाति-

करणमित्यर्थः । **प्रमाणशेषेणान्वयो द्रष्टव्यः** । अत्र कर्तव्यतयोक्तानां ऋतस्वाध्यायप्रवचनसत्यादीनां परस्परं साम्यमुत तत्रैकस्याधिक्यमिति शंकायां तत्र ऋषिमतान्याह- **सत्यमित्यादिना** । तत्र ऋषिमतत्रयमपि किं समानमित्यपेक्षायां आद्यमतद्वयं समं तृतीयमतमेवाधिकमिति प्रमाणेनैव दर्शयति- **सत्ये तपसीति** । सत्ये यथार्थज्ञानपूर्वकयथार्थवचनादिरूपे । तपसि अध्ययनादिरूपे । चीर्णे कृते सति । तथाच सत्ये चीर्णे तप आदिसर्वकर्मकृतं भवतीति सत्ये ऋततपआदीनामन्तर्भावमभिप्रेत्य राथीतरः सत्यस्यैव कर्तव्यत्वमाह । तथा तपसि चीर्णे ऋतसत्यादि-सर्वकर्मकृतं भवतीति तपसि ऋतसत्यादीनामन्तर्भावमभिप्रेत्य पौरुशिष्टिः तपस एव कर्तव्यत्वमाहेति भावः । नैवं नाकमतमित्याह- **स्वाध्याय इति** । अन्तर्भावः । ऋतसत्यतपःशमदमादीनां सर्वेषामिति शेषः । विशेषत इतिवचनेन न पूर्वमतद्वय इवान्तर्भावोक्तिरौपचारिकीत्युक्तं भवति । अनेन तद्धि तप इति वाक्यतात्पर्यमुक्तं वेदितव्यम् । अतो नाकमतमेवाधिकम् । अत एव स्वाध्यायप्रवचनयोः सर्वत्रानुषंग उक्त इति भावः । ऋतसत्यादेः सर्वस्य स्वाध्यायप्रवचनयोरन्तर्भाव उक्तस्तत्र श्रुतिं चाह- **यं यं क्रतुमिति** । 'क्रतुस्तु निश्चितं ज्ञानम्' इति छान्दोग्यभाष्यवचनादत्र निश्चितज्ञानकरणीभूतं शास्त्रं क्रतुशब्देन ग्राह्यम् । अधीते अध्यापयति चेत्यपि द्रष्टव्यम् । तथाच यं यं क्रतुं वेद भारतादिरूपं सच्छास्त्रं स्वयमधीते, अध्यापयति प्रवक्ति चान्यान्प्रति, तेनाधीतेन शास्त्रेण शास्त्राध्ययनप्रवचनाभ्यामिति यावत् । अस्य प्रवचनादिकर्तुः इष्टं सत्यादिशब्दोक्तं यजनादिकं सर्वं कर्मकृतं भवतीति श्रुत्यर्थः । अत्रैव स्मृतिद्वयं चाह- **जप्येनैवेत्यादिना** । जप्येन वेदादिशास्त्ररूपपाठव्याख्यानरूपजपेनैव । तथाच ब्राह्मणः अन्यत्सत्यादि-शब्दोक्तं कर्म यद्यपि कुर्यान्नवा कुर्यात् । तथापि वेदादिपाठव्याख्यानरूप-जपेनैव संसिध्येत् अपरोक्षज्ञानादिना मोक्षरूपसंसिद्धिं प्राप्नुयात् ।

ननु सत्यादिशब्दोक्तकर्माकरणे कथं ब्राह्मण इत्यत उक्तं- **मैत्र इति** । कुर्यादित्यादेरत्राप्यन्वयः । मैत्रः मित्वा त्रातीति मित्रनामकसवितृमण्डल-मध्यवर्तिनारायणदेवताकगायत्रीजापको मैत्रः । स एव ब्राह्मण इत्यर्थः । तथाचात्र सत्यादिशब्दोक्तकर्मणामनावश्यकत्वमभिधाय व्याख्यानादिरूप-जपस्यैवावश्यकत्वोक्त्या तत्रैव सर्वस्यान्तर्भाव सिद्धिरिति भावः। जपेत अधीयीत । तस्य तेन किञ्चिदकृतं कर्तव्यं नास्ति । सर्वमपि सत्यादिशब्दोक्तं कर्तव्यं कृतमेव भवतीत्यर्थः । नैतावदेव किन्तु संसारान्मुच्यते च स इत्याह- **मुच्यते चेति** ॥१.२०-२१॥

**श्री.खं-** तथाचायमर्थः ऋतं यथार्थज्ञानम् । स्वाध्यायप्रवचनेचेत्येतानि कर्तव्यानीति शेषः । एवमुत्तरत्रापि कर्तव्यपदानुवृत्तिर्द्रष्टव्या । ऋतस्य कर्तव्यत्वं नाम सम्पाद्यत्वम् । सत्यं यथार्थज्ञानपूर्वकं यथार्थवचनं तत्पूर्वकं सत्कर्मकरणं च । तपः ध्यानसत्यपूज्यपूजारूपम् । दमः इन्द्रियनिग्रहः । शमो बुद्धेः भगवन्निष्ठता । अग्नयः अग्नीनां पूजा अग्नीनामाधानं वा । अग्निहोत्रं तन्नामकं कर्म । अतिथयः अतिथीनां पूजा । मानुषं स्वस्य ज्ञानाधिक्येऽपि मानुषधर्मप्रवर्तनमेव कार्यं नतु ज्ञानाद्यैश्वर्यप्रकटनमयोग्येषु कार्यमित्यर्थः । प्रजा शिष्यपुत्रादिरूपा । प्रजारक्षणमन्नज्ञानादिदानेन प्राप्तभयादिनिवारणेन च कर्तव्यमित्यर्थः । प्रजनः पुनः प्रजननं पुत्ररूपेण सन्ततिकृतिः । प्रजातिः उत्पन्ने तनये उपनयनादिकर्मभिर्ब्राह्मण्यरूप-प्रकृष्टजातिकरणम् । अत्र सर्वत्र सत्यादिभिः सह पुनः स्वाध्यायप्रवचनयोः कर्तव्यत्वोक्तिः सत्याद्यपेक्षयाप्यत्यावश्यकत्वज्ञापनार्थेति द्रष्टव्यम् । अत्र कर्तव्यतयोक्तानां ऋतस्वाध्यायप्रवचनसत्यादीनां किं परस्परं साम्यमुत तत्रैकस्याधिक्यमिति शंकायां तत्र ऋषिमतान्याह- **सत्यमितीत्यादिना**। सत्यवचाः सत्यवचन एव निरतो रथीतरस्यापत्यं राथीतरः तन्नामा ऋषिः । सत्यमिति निरुक्तं सत्यमेव श्रेयः साधनमिति तदेव सम्पाद्यम् । तत्रैव

तपआदेः सर्वस्यान्तर्भावादित्याह । तपोनित्यः तपोनिष्ठः पुरुशिष्टेरपत्यं पुमान्पौरुशिष्टिः तन्नामा कश्चिदृषिः । तप इति ध्यानादिरूपं तप एव श्रेयः साधनमिति तदेव कर्तव्यम् । तत्रैव ऋतसत्यादीनामन्तर्भावादित्याह । मुद्गलस्यापत्यं तद्गोत्रापत्यं वा मौद्गल्यो नाको नामतः स्वाध्यायप्रवचने एव कर्तव्ये इत्याह । कुत इत्यत ऋतसत्यतपआदीनां सर्वेषामपि स्वाध्याय-प्रवचनयोरेव विशेषतोऽन्तर्भावेण तयोरेव मोक्षसाधनेषु प्राधान्यादि-त्यभिप्रेत्याह- **तद्धीति** । तत् स्वाध्यायप्रवचनकरणमेव तपः । इदमुपलक्षणं तद्धि सत्यमपि द्रष्टव्यम् । हिशब्देन 'प्राणायामादयस्तुष्टिपर्यंता द्विगुणाधिकाः । स्वाध्यायोऽतः कोटिगुणः । तप आद्याः क्रमात्सर्वे उत्तरोत्तरतोऽधिकाः। अज्ञस्य श्रवणं श्रेष्टमयुक्तेर्मननं तथा । ध्यानं निश्चिततत्त्वस्य तस्माच्छास्त्रावमर्शनम् । वरं दशगुणं तस्मात् व्याख्यैकस्य शतोत्तरा' इति प्रमाणप्रसिद्धिं दर्शयति । अतः इदमेव मतं पूर्वमतद्वयापेक्षयाधिकमिति भावः । द्विरुक्तिस्तात्पर्यद्योतनार्था ॥ १.२०-२१ ॥

**वरद**- इदानीं वेदादिस्वरूपं, ब्रह्मविद्याप्राप्तिसाधनत्वेन अनुष्ठेया नियमा अप्युच्यन्ते । 'ऋतं च स्वाध्यायप्रवचने च' इत्यादिना । तत्र वाक्यस्यापरिपूर्णत्वाच्छेषमध्याहारेण पूरयति- **ऋतं चेति** । एवं वाक्यं पूरयित्वा व्याख्याति- **प्रवचनमति** ।

अत्र प्रवचनस्य श्रेष्ठत्वाद्व्याख्याने क्रमव्यत्यासः । ऋतसत्यशब्दयो-रेकार्थत्वात् 'ऋतं च स्वाध्यायप्रवचने च' इति सत्यशब्दोक्तौ पुनरुक्तिरित्यत आह- **यथार्थेति** । अत्रैव स्मृतिसंवादं दर्शयन् तपःशब्दमपि व्याख्याति- **ऋतमिति** । ननु स्वाध्यायप्रवचनयोर्बहुशः किमर्थमुच्यत इत्यत आह- **सर्वकर्मेति** । भवेदेवं पुनरुक्तेः परिहारः तयोः सर्वकर्मसु कर्तव्यत्वस्य प्रामाणिकत्वे । तदेव कुतः ? इत्यत आह- **मन्त्र इति** ।

ननु मन्त्रार्थवचनस्य शिष्यसापेक्षत्वनियमात् कथमात्मनैव तत्कर्तव्यमित्यत आह- **आत्मनश्चेदिति** । ननु मानुषं नाम मनुष्यत्वजातिः तस्याः कथं नियमान्तर्भूतत्वेन अनुष्ठानविधानमित्यत आह- **मानुषमिति** । प्रजाप्रजनप्रजातिशब्दानां अर्थभेदं प्रमाणवचनेनैवाह- **प्रजाया इति** । सत्यं तप राथीतर इत्यादि । तत्र सत्यतपसोः स्वाध्यायप्रवचनयोश्च श्रेष्ठत्वं कया विवक्षयोच्यत इत्यत आह सत्ये तपसि वा । स्वाध्यायप्रवचनेऽन्यकर्माण्यन्तर्भवतीत्यत्र श्रुत्यन्तरसंवादं चाह- **यं यमिति** ।

यः पुरुषो यं यं क्रतुं अधीते यस्य यस्याग्निष्टोमस्य वा अन्यस्य वा क्रतोः प्रतिपादकं मन्त्रमधीते । तेन पुरुषेण अग्निष्टोमाद्यनुष्ठातृभिः यत्फलं प्राप्यते तत्फलं लभ्यत इति तात्पर्यार्थः । अत्रैव वचनान्तरमाह- **जप्येनेति** । जप्यं नाम गायत्रीपूर्वमन्त्रस्य जपः । मैत्रो मित्रदेवता गायत्री । तत्र परः 'सम्यक् ज्ञात्वा तु यो विष्णुं' इत्येतदप्युक्तार्थे वचनान्तरम् ।। ।।१.२०-२१।।

**काशी-** इदानीं कृतश्रवणस्यापि विशिष्टब्रह्मज्ञानप्राप्त्यर्थमवश्यकर्त्तव्यान्युच्यन्ते ऋतं चेत्यादिना । अत्र सन्तीत्यादिकथनस्य व्यर्थत्वाद्विधिशब्दाध्याहारेण योजयति- **ऋतं चेति** । कर्तव्यानि प्रयत्नेन सम्पाद्यानि तत्र ऋतस्य साधनद्वारा प्रयत्नसम्पाद्यत्वं सत्यादेस्तु साक्षादपीति भावः । अत्र ऋतं यथावज्ज्ञातं सत्यं यथावदुक्तं स्वाध्यायोऽध्ययनं प्रवचनं ब्रह्मयज्ञ इति व्याख्यानमसत् । ऋतसत्ययोः कर्तव्यत्वाभावात् स्वाध्यायशब्देन ब्रह्मयज्ञस्यापि ग्रहणसम्भवाच्चेत्याशयेन सप्रमाणकमन्यथा व्याचष्टे- **प्रवचनमिति** । प्रवचनस्य प्राधान्यज्ञापनायादौ तद्व्याख्यानं तत्पूर्वकं यथार्थज्ञानपूर्वकमित्यनेनैव वचनस्य याथार्थ्यलाभेप्यंशेन याथार्थ्यस्य विप्रलम्भादिपूर्वकत्वस्य च व्यावृत्तये पुनर्यथार्थेत्युक्तम् । इष्टसाधनताद्यंशे यथार्थज्ञानपूर्वकं करणं कर्म च सत्यशब्दार्थ इत्यर्थः । यद्यपि तप आदेरपि

तादृशकर्मत्वमस्ति तथापि तदन्यकर्मणः सत्यशब्देन विवक्षितत्वान्नापुनरुक्तिः । कृतिः कर्मवचनं च ध्यानं ध्येयस्य सत्यमुक्तवचनकर्मरूपं पूज्यानां पूजेति त्रयं तप इत्युच्यते इत्यर्थः । प्रकृते च ध्यानपूजे एव तपः शब्देन विवक्षिते सत्यस्य पृथुगुक्तेरिति ध्येयम् ।

ननु स्वाध्यायप्रवचनयोःऋतादिभिः सहैव पुनः पुनः कर्तव्यत्वोक्तिः कुतः इत्यत आह- **सर्वेति** । ऋतसत्याद्यनुष्ठानकालेष्वपि स्वाध्यायप्रवचनयोः कर्तव्यत्वं ज्ञापयितुं स्वाध्यायप्रवचनयोः सर्ववाक्येषु सम्बन्धः ऋतसत्यादिभिः सर्वैः सह पाठ इति यावत् । ऋतादिष्वेकानुष्ठानकालेऽपरानुष्ठानानियमेऽपि स्वाध्यायप्रवचनयोनैयत्यमेवेति भावः । यद्यपि प्रवचनस्य यथार्थवचनत्वेन सत्यरूपत्वात्तयोः समुच्चयानुपपत्तिः तथापि प्रवचनातिरिक्तयथार्थवचनत्वेन सत्यरूपत्वात्तयोः समुच्चयानुपपत्तिः तथापि प्रवचनातिरिक्तयथार्थवचनादेः सत्यशब्देन विवक्षितत्वाददोषः । अत्र यद्यपि सर्वकर्मकालेषु इति वक्तुं शक्यम् । तथापि कर्तव्यानीत्यस्य सर्वत्रानुषङ्गसूचनाय कृतिपदं सर्वकर्मकृतिकालेषु स्वाध्यायप्रवचनयो-रुक्तानुषङ्गसिद्धमपि कर्तव्यत्वं किमर्थमित्यतस्तत्र प्रमाणमाह- **मन्त्र इति** । मन्त्रो वेदाध्ययनं, मन्त्रार्थस्य भगवगद्रूपगुणादेर्वचनं व्याख्यानं चेतीमौ व्यापारौ यतः सर्वकर्मात्मकौ ऋतादिसर्वव्यापारवीर्यप्रदावेतौ सर्वकर्मकृतिकालेष्वन्यं प्रति स्वात्मानं प्रति वा कर्तव्यावित्यर्थः । ननु स्वात्मन इत्ययुक्तम् । अर्थकथनस्य परार्थत्वादित्यत आह- **आत्मनश्चेदिति** । अर्थवचनमर्थानुसन्धानं मानुषमित्येतदप्रतीतेर्व्याचष्टे- **मानुषमिति** । धर्मः धर्मार्थधनार्जनतीर्थयात्रादिः देवादिभिरपि मनुष्येष्ववतीर्णैरेष धर्मोऽनुवर्तितव्य इत्याशयेन तत्राचारं प्रमाणयति- **देवा इति** । मानुषे मनुष्यदेहे सतोऽप्यैश्वर्यस्य प्रकाशनेनाप्रवर्तत इत्यर्थः । प्रजाप्रजननप्रजातिशब्दानामेकार्थतानिरासाय भिन्नार्थत्वं प्रमाणेनैव दर्शयति- **प्रजाया इति** । पुत्रशिष्यादिपोष्यवर्गस्य

रक्षणमेव प्रजाशब्देनोच्यते । अत एव भाष्ये सर्वत्रानुवृत्तिमभिप्रेत्य कर्तव्यानीत्येवाध्याहृतम् । तेन ऋतादीन्यनुष्ठेयानि, अग्नयः आधातव्याः, अग्निहोत्रं होतव्यं, अतिथयः पूज्याः, प्रजाचोत्पाद्येति योजना नोपादेया । अनेकक्रियाध्याहारापेक्षया अग्न्यादिपदानामग्न्याधानादौ लक्षणाया एवोचितत्वात् अग्नय आधातव्याः, स्वाध्यायप्रवचने च कर्तव्य इत्यादिवाक्यभेदापत्तेश्चेति सूचितम् । पुनः प्रजननमिति स्वशरीरोत्पत्तिः स्वस्य प्रथमं जननं स्वशरीरांशेन पुत्रादिजननरूपं स्वस्य पुनः प्रजननं प्रजननशब्देनोच्यत इत्यर्थः । प्रजातिशब्दार्थमाह- **प्रकृष्टेति** । प्रकृष्टजातेर्ब्राह्मणत्वादेः कर्मभिरुपनयनादिभिः पित्रा पुत्रे करणं सम्पादनं प्रजातिशब्देनोच्यत इति प्रमाणशेषेणान्वयः । अनेन प्रजातिः पौत्रोत्पत्तिरित्यपास्तम् । प्रजननशब्देनैव तल्लाभाच्च । ऋतसत्यादि-साधनानां साम्यप्रतीतिनिरासाय मुनिमतान्युक्तानि । सत्यं मुख्यमिति राथीतरः, तपोमुख्यमिति पौरुशिष्टिः, स्वाध्यायप्रवचने एवेति मौद्गल्य इति तत्र कथं मुख्यत्वं किमर्थं च तृतीयमते एवैवकार इत्याशङ्कां प्रमाणेनैव परिहरति- **सत्य इति** । सत्य इति यथार्थज्ञानपूर्वकवचनकरणरूपे सत्ये ध्यानसत्यपूजारूपे तपसि वा कृते सति सर्वं कर्म कृतं पूर्णफलं भवेत् । 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति श्रुतेः । अत्र कर्मग्रहणात् अनयोर्मतयोः कर्मपूर्णतासाधनांशे साम्येऽपि द्वितीये ध्यानपूजाधिक्येनाधिक्यमनुमतमिति मन्तव्यम् । अन्तर्भावः ऋतादेः सर्वस्येति शेषः सर्वफलसाधनत्वमिति यावत् । ध्यानस्यापि तथात्वात्ततोऽप्याधिक्यसूचनाय विशेषत इत्युक्तम् । स्वाध्यायप्रवचनयोः ध्यानापेक्षया बहुतरगुणोपासनारूपत्वरूपविशेषवत्त्वात्ततो विशेषत आधिक्येन फलसाधनत्वमित्यर्थः । तत्रापि प्रवचनस्य ज्ञानदानरूपत्वादिना विशेषसूचनाय पृथक्करणम् । अन्यथा श्रुत्यनुसारेण स्वाध्याप्रवचनयोरित्य-

वक्ष्यत् । उक्तं च तन्त्रसारे 'अज्ञस्य श्रवणं श्रेष्ठमयुक्तेर्मननं तथा । ध्यानं निश्चितत्त्वस्य तस्माच्छास्त्रावमर्शनम्' वरं दशगुणं तस्माद्व्याख्यैकस्य शतोत्तरा' इति एतादृशविशेषसूचनार्थमेवकार इति भावः । अत्र हि शब्दसूचितप्रमाणान्याह- **यं यमिति** । प्रज्ञानामसु पाठात् क्रतुशब्दो यथार्थज्ञानवाची तेन तत्साधनं वेदादिशास्त्रं लक्ष्यते अतो अध्यापनस्यापि विवक्षालाभः । तथा च यं यं वेदादिरूपं क्रतुमधीते अध्यापयति वा तेन तेनाधीतेनाध्यापितेन वा वेदादिना अस्याध्येतुरध्यापयितुर्वा इष्टं यजनं कर्मादि समस्तफलमिति यावत् भवतीति स्वाध्यायप्रवचनयोः सर्वकर्मान्तर्भाव उच्यते । जप्येन मन्त्रजपेनैव तु विशेषतो ब्राह्मणः संसिद्ध्येत् अपरोक्षज्ञानादिकं प्राप्नुयात् । एवकारेण कर्मव्यवच्छेदे ब्राह्मण्यमेव कथमस्येत्यत आह- **कुर्यादिति** । मैत्रः मित्रदेवताकगायत्रीजपवानित्यनेन प्रतिपाद्यार्थज्ञानपूर्वकजप एव मुख्योऽन्यदनावश्यकमित्युक्तं भवति । सम्यज्ज्ञानपूर्वकस्वध्यायप्रवचनयोरेव मोक्षसाधनत्वमिति विवक्षितार्थस्य स्पष्टमनुक्तेः स्मृत्यन्तरमाह- **सम्यगिति** । महायोगवृत्त्या सर्ववेद-प्रतिपाद्यत्वसर्वगुणत्वसर्वोत्तमत्वादिनेत्यर्थः । अस्य व्याख्यायीतेत्यनेना-प्यन्वयः । कर्तव्यमकृतं कर्मफलमप्राप्तं नेत्यर्थः । न केवलमेतावत् किन्तु सः अध्येता, प्रवक्ता च संसारान्मुच्यते च । स्वाध्यायप्रवचनाभ्यां मोक्षसाधनापरोक्षस्य साक्षादेव जननादिति भावः । ननु

> **'खण्डस्मृतिर्धारणा स्यादखण्डा ध्यानमुच्यते ।**
> **अप्रयत्नात्समाधिश्च दर्शनं चिरयानया ।।**
> **अथवा सततं शास्त्रविमर्शेन भविष्यति'।।**

इति तन्त्रसारोक्तेः शास्त्रविमर्शनात्मकप्रवचनादपरोक्षज्ञानमस्तु स्वाध्यायात्तु कथमिति चेत् अर्थज्ञानयुक्ताध्ययनरूपस्य तस्यापि स्वात्मनश्चेन्मन-सैवार्थवचनमित्युक्तरीत्या प्रवचनत्वादित्यवगन्तव्यम् ।।१.२०-२१।।

**काशी.खं**- ततश्चायमर्थः । ऋतं यथार्थज्ञानं श्रवणादीति यावत् । स्वाध्यायप्रवचने अर्थज्ञानपूर्वकवेदाध्ययनव्याख्याने चकारौ मिथः समुच्चये कर्तव्यानीति अध्याहारः । अस्य चोत्तरत्राप्यनुषङ्गः । सत्यं यथार्थज्ञानपूर्वकं कर्मवचनं दम इन्द्रियनिग्रहः शमो भगवन्निष्ठबुद्धित्वं अत्र दमो बाह्यकरणोपरमः शमोन्तः करणोपरम इति व्याख्या इति व्याख्यानमसत् । दमशब्देनैव समस्तकरणोपरमग्रहणोपपत्तेः शमो मन्निष्ठताबुद्धेर्दम इन्द्रियनिग्रह इति भगवद्वचनविरोधाच्च । अग्न्योग्न्याधानादीनि अग्निहोत्रं नित्यहोमः अतिथयो अतिथिपूजनं मानुषं धर्मार्थधनार्जनतीर्थयात्रादिप्रजाः पुत्रशिष्यादिप्रजारक्षणं प्रजनः पुत्रादिसन्ततिकरणं गार्हस्थ्यमिति यावत् । प्रजातिः प्रकृष्टजातिकरणं पुत्रादीनामुपनयनादिना द्विजत्वादिसम्पादनमिति यावत् । सर्वत्र स्वाध्यायप्रवचनयोः कर्तव्यत्वोक्त्या तयोरत्यावश्यकत्वं सूचितं ऋतसत्यादीनामपि किं मिथः साम्यमुतैकमधिकमित्याकाङ्क्षायां मुनिमतान्याह- **सत्यमिति** । सत्यं यथार्थज्ञानपूर्वकं कर्मवचनं च मुख्यमिति । राथीतरस्य पुत्रः सत्यवचानामतो मन्यते यथार्थज्ञानपूर्वक-करणस्यैव पूर्णफलत्वात्तेन विना विशिष्टज्ञानाधिकारस्यैवाभावाच्च । तदावश्यकमित्याशयः तपः सत्यध्यानपूज्यपूजालक्षणं मुख्यमिति पौरुशिष्टिः । पुरुशिष्टेः पुत्रस्तपो नित्यो नामतो मन्यते पूर्णफलत्वांशे पूर्वसाम्यात् ध्यानपूजाधिक्येनाधिक्याच्च । स्वाध्यायप्रवचने एव मुख्ये इति मौद्गल्यो मुद्गलस्यापत्यं नाको नामतो मन्यते सर्वस्यापि फलतो अत्रान्तर्भावात् ध्यानात् बहुतरगुणविषयीकारित्वेनाधिक्यात् एतत्सूचनार्थमेवकारः।

ननु ध्यानरूपस्य तपसः साक्षादपरोक्षसाधनत्वात्तस्यैवाधिक्यं युक्तमित्यत आह- **तद्धीति** । विभक्तिलोपेन ते स्वाध्यायप्रवचने साक्षादपरोक्ष-साधनत्वेन तप इति हि प्रसिद्धेर्द्विरुक्तिस्तात्पर्यद्योतनार्था तथा च स्वाध्ययप्रवचनयोः साक्षादपरोक्षसाधनत्वेन ध्यानसाम्याद्बहुगुणविषयत्वादि-

नाधिक्याच्च सर्वतोऽपि मुख्यत्वमित्याशयः अत्र प्रथमसाधनत्वेन मुख्यत्व-माद्यमते सत्येन शुद्धान्तः करणस्य श्रवणादिना ध्यानपर्यन्तसाधनेन अपरोक्षलाभान्मुख्यत्वं द्वितीयमते बहुतरगुणोपासनेनातिशयित-फललाभान् मुख्यत्वं तृतीयमते अभिप्रेतमिति नमतानां विरोध इत्यवधेयम् ।।१.२०-२१।।

**रा.खं-** वेदाख्यब्रह्मविद्याकामस्य तत्प्राप्त्यर्थं तत्पूर्वभाविनो यमनियमानाह- **ऋतं चेत्यादिना** । ऋतं यथार्थज्ञानम्, स्वाध्यायो गुरूच्चारणानुच्चारणम्, प्रवचनं व्याख्यानम्, ऋतं च स्वाध्यायप्रवचने चेत्यादीनि कर्तव्यानीति सर्वत्र शेषः । सत्यं चेति । यथार्थज्ञानपूर्वकं वचनम् तत्पूर्वकं करणं चेति ज्ञेयम् । ध्यानं सत्यं पूज्यपूजा च तपः, दम इन्द्रियनिग्रहः, शमः भगवन्निष्ठा, अग्नयः अग्नीनाम् आधानम् । अग्निहोत्रम् अग्निहोत्रानुष्ठानम् । अतिथयः अतिथिपूजनम् मानुषं मनुष्यस्येदं मानुषम् देवादेरुत्तमस्य मनुष्यत्वे प्राप्ते ज्ञानाद्यतिशये सत्यपि तदप्रकाशेन मनुष्यसम्बन्धिधर्मप्रदर्शनं मानुषमित्यर्थः । प्रजा सुतोत्पत्तिः प्रजननं तद्रक्षणम् प्रजातिः पित्रा पुत्रस्य द्विजत्वसंस्कारेण प्रकृष्टजातिकरणम्, सर्वकर्मकृतिकालेष्वपि स्वाध्यायप्रवचनयोः कर्तव्यताज्ञापनार्थं सर्वत्रानुषङ्गः । सत्यादीनां श्रेयस्साधनत्वं सममुतैकस्याधिकमित्यपेक्षायां मुनिमतोक्तिपूर्वं कस्यचित् तदाह- **सत्यमित्यादिना** । सत्यवचाः सत्यवचनो राथीतरो नाम मुनिः । सत्यं यथार्थज्ञानपूर्वकं वचनं करणं च श्रेय इत्याह - **तप इति** । तपो नित्यः तपसि नित्यः तपः परः । पौरुशिष्टिर्नाम ऋषिः ध्यानादिरूपं तपः श्रेयः इत्याह । नाको मौद्गल्यः । मुद्गलपुत्रो मौद्गल्यः नाको नाम मुनिः स्वाध्यायप्रवचने एव श्रेयसी इत्याहेत्यर्थः । तत्राऽद्ययोस्समत्वेऽपि तृतीयं मतमतिशयितमित्याह- **तद्धि तपस्तद्धि तप इति** । ऋतादेः सर्वस्यानयोरेवान्तर्भावादेतयोरेवानुष्ठाने सर्वं तेन कृतं भवत्येवेति भावः ।

तदुक्तम् 'सम्यक् ज्ञात्वा तु यो विष्णुं व्याख्यायीत जपेत वा । न तस्य किञ्चिदकृतं कर्तव्यं मुच्यते च स' इति ।। १.२०-२१ ।।

### उपनिषत्

**अहं वृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरेरिव । ऊर्ध्वपवित्रो वाजिनीवस्वमृतमस्मि । द्रविणꣳसवर्चसम् । सुमेधा अमृतोक्षितः । इति त्रिशङ्कोर्वेदानुवचनम् ।।१.२२।।**

### भाष्यम्

**संसारवृक्षच्छेत्ताऽहं मत्कीर्तिः पर्वतोपमा ।**
**अत्युत्कृष्टेन हरिणा पावितोऽस्मि यतः स्फुटम् ।।**

**वाजिरूपश्च नेता च वाजिनीः सूर्य उच्यते ।**
**तत्रस्थो भगवान् विष्णुस्सम्प्रोक्तो वाजिनीवसुः ।।**

**तेनामृतोऽस्मि द्रविणं नित्यानन्दस्स्वरूपतः ।**
**तेनामृतेन सिक्तोऽहं तेन व्याप्तो यतस्सदा ।**
**इत्याह मन्त्रदृक् पूर्वं त्रिशङ्कुर्मानवो नृपः ।। यजुर्विवेके ।**

**व्यास-** ऋतादेः सर्वस्मात्स्वाध्यायप्रवचनयोः श्रेष्ठत्वमुक्तं तदाख्यायिकया दर्शयति- **अहमिति** । अस्यार्थः गिरेः पृष्ठमिव ममकीर्तिः जाता । संसारवृक्षच्छेत्तृत्वादिकं स्वसामर्थ्यादेव किमित्यतो भगवत्प्रसादादित्युक्तम्- **ऊर्ध्वेति** । सवर्चसं द्रविणमिवाहं जातः वेदानुवचनं वेदव्याख्यानफलम् । अप्रतीतेस्तद्वाक्यं व्याचष्टे- **संसारेति** । तेनामृतेनेत्येतत्पूर्वं सुमेधाश्चास्मीति ग्राह्यम् । तेनामृतेन सिक्तोऽहं इत्यस्य विवरणं तेन व्याप्त इति ।।१.२२।।

**वादि-** ऋतादिनियमसमुदायात् स्वाध्यायप्रवचनयोः सर्वत्रानुस्यूतत्वोक्त्या तद्धि तपस्तद्धि तप इति प्रशंसया चाऽधिक्यमुक्तम् । तदाख्यायिकया समर्थयते- **अहं वृक्षस्येति** । अहं नियमेन स्वाध्यायप्रवचनयोः करणात् वृक्षस्य संसाराख्यवृक्षस्यरेरिवा रीङ् क्षये इति धातोः छेत्ताऽस्मि । गिरेः रजताद्रेः पृष्टमिव कीर्तिः कीर्तिमानासम् । कीर्तेरुत्तुङ्गत्वे श्रेष्ठत्वे च दृष्टान्ततया गिरिपृष्ठस्योक्तिरिति भावः । ऊर्ध्वेन सर्वोत्तमेन नारायणेन पवित्रोऽस्मि । तत्र वाजिरूपः सन्नयतीति वाजिनीः सूर्यः तत्र वसनशीलो वसुर्नारायणस्तेनामृतमस्मि मुक्तिं प्राप्तोऽस्मि । अमृतो यथा भवति तथाऽमृतमिति वाऽर्थः । द्रविणं द्रवत्यनेन चित्तमिति द्रविणं सुखं तद्रूपोऽस्मीत्यर्थः । अत एव सुवर्चसं शोभनकान्तिमन्तं वदन्ति । सुमेधाः शोभनबुद्धिमानस्मि । अमृतेन नारायणनोक्षितः सिञ्चितः करचरणादिषु तेन व्याप्तोऽस्मीत्यर्थः । इति त्रिशङ्कोर्वेदानुवचनं वेदस्यानुवचनम् । स्वाध्याय-प्रवचनाख्यमनुकूलवचनं मूलं यस्य वाक्यस्य तद्वेदानुवचनमित्यर्थः । वेदस्य स्वाध्यायप्रवचनयोरतिशयेन करणादनु अनन्तरं विद्यमानं वचनमिति वा ॥१.२२॥

**श्री.भा-** पूर्वं ऋतादेः सर्वस्मात्स्वाध्यायप्रवचनयोराधिक्यमुक्तम् । इदानीं तत्फलमाख्यायिकया निरूपयति- **अहं वृक्षस्येत्यादिना** । यथाश्रुतप्रतीत्यादिपरिहाराय प्रमाणेनैव व्याचष्टे- **संसारेति** । संसरत्यनेनेति संसारः लिङ्गदेहः । रेरिवेत्यस्यार्थः छेत्तेति । रीङ् क्षय इतिधातोः । कीर्तिः पृष्ठं गिरेरिवेत्येतद्व्याचष्टे- **मत्कीर्तिरिति** । पर्वतोपमा पर्वतपृष्ठोपमा विस्तारेणेति शेषः । यथा पर्वताधो भाग ऊर्ध्वभागापेक्षया विस्तृतो भवत्येवं मत्कीर्तिरपि सर्वत्र विस्तृतेत्यर्थः । ऊर्ध्वपवित्र इत्यस्यार्थमाह- **अत्युत्कृष्टेनेति** । उन्नतो ह्यूर्ध्व उच्यत इति वचनादूर्ध्वशब्दस्योन्नतत्व-वाचित्वात् उन्नतत्वं चात्युत्कृष्टत्वम् । अत्युत्कृष्टश्च हरिरेवेत्याशयेनैवं

व्याख्यातम् । वाजिनीवस्वमृतमस्मीत्येतद्व्याख्यातुं आदौ तावद्वाजिनीव सुशब्दार्थमाह- **वाजिरूपश्चेति** । एवं पदार्थमुक्त्वा वाक्यार्थमाह- **तेनामृतोऽस्मीति** । तेन वाजिनीवसुना विष्णुना । अमृतं प्रारब्धकर्म-शेषनिर्मुक्तोऽस्मि । 'स तेजसि सूर्ये संपन्न' इतिश्रुतेरित्यर्थः । द्रविणमस्मीति सम्बन्धः । प्रसिद्धधनाभेदस्य बाधितत्वात्कथमस्य द्रविणत्वमित्यतस्तत्र हेतुमाह- **नित्यानन्देति** । तथाच नित्यसुखस्यैव महाद्रविणत्वात्तदभेदकथनं युक्तमेवेत्यर्थः। सुमेधाश्चास्मीति ग्राह्यम् । तेन समस्तपदव्याख्यानलाभान्न न्यूनता । अमृतोऽक्षित इत्येतत्प्रसिद्धामृतेन सिक्त इत्यन्यथाप्रतीतिनिरासाय व्याचष्टे- **तेनामृतेनेति** । मरणशून्यतयाऽ-मृतशब्दवाच्येन विष्णुनेत्यर्थः । तत्सिक्तत्वं नाम कीदृशमित्यत आह- **तेन व्याप्त इति** । तेनामृतशब्दवाच्येन विष्णुना विशेषेणाप्तः प्राप्तः तत्सन्निधानविशेषयुक्त इत्यर्थः । इति त्रिशंकोर्वेदानुवचनमित्यादेरर्थमाह- **इत्याहेति** । मानवः वैवस्वतमनुवंशोत्पन्नः । नाम्ना त्रिशंकुः हरिश्चन्द्रस्य पिता ।। १.२२ ।।

**श्री.खं-** आदौ तावदहमूर्ध्वेन विष्णुनेत्यादिना गीताभाष्यटीकायां ऊर्ध्वमूलाध्याये टीकाकारैर्व्याख्यातत्वात्तदनुसारेणोर्ध्वपवित्र इत्यादिकमादौ योज्यम् । तथाच स्वाध्यायप्रवचनादिसम्पत्त्याऽपरोक्षज्ञानानन्तरमहमादौ तावदूर्ध्वेनात्युत्कृष्टेन विष्णुना पवित्रः पावितोऽप्रारब्धसमस्तपापरहितोऽस्मि । तद्यथैषीकातूलमिति श्रुतेः । तदनन्तरं प्रारब्धकर्मणां भोगेन क्षये, चरमदेहपातानन्तरमर्चिरादिद्वारेण सूर्यलोकं प्राप्य, तत्र वाजिरूपश्च नेता च वाजिनीः सूर्यः । तत्र वसतीति वाजिनीवसुस्तेन वाजिनीवसुना विष्णुना । अमृतं प्रारब्धकर्मशेषनिर्मुक्तश्चास्मि । अधिकारिविशेषाणां तत्र प्रारब्धकर्मशेषमोक्षस्य प्रमितत्वात् । स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव स पाप्मना विनिर्मुच्यत इति श्रुतेः ।

'वैश्वानरे द्युनद्यां वा देहे वा सूर्य एव वा । विधूय सर्वपापानि यान्ति किंस्तुघ्नकेशवम्' इति श्रुतेश्च । अनन्तरं सान्तानिकलोके स्थित्वा साधनसम्पूर्त्यनन्तरं कार्यात्यये तदध्यक्षेण सह विरजां प्राप्य तत्राहं लिंगशरीराख्यवृक्षस्य रेरिवा छेत्ता अस्मि । अनन्तरं अभिव्यक्त-बहुतरानन्दमनुभवन्नेव भगवदुदरे प्रलये स्थित्वा पुनः सृष्ट्यनन्तरं श्वेतद्वीपप्रादुर्भावे सति तत्र स्थितं अनन्तशयनं श्रीनारायणं दृष्ट्वा तदिच्छावरकापगमानंतरं तदनुज्ञया योग्यस्थानं प्राप्य तदनुग्रहेणैव सवर्चसं सप्रभं अनुभूयमानमिति यावत् । द्रविणं धनं सुखं चास्मि । सुखस्यैव महाधनत्वात् । योग्याशेषानन्दानुभववानस्मीति यावत् । वर्चसशब्दोऽ-कारान्तोऽप्यस्ति । 'ब्रह्महस्तिभ्यां वर्चस' इत्यत्र योगविभागात्समासान्तो वा । सवर्चसं द्रविणं सुवर्णमिवाहं जात इति पूर्वटीकाकाराः । न केवलं सवर्चसं द्रविणमस्मि किं नाम सुमेधाः सुष्ठ्वभिव्यक्तं मेधाज्ञानं यस्यासौ सुमेधाश्चास्मि । अमृतेन मरणरहितेन विष्णुना उक्षितः सिक्तो व्याप्तः । तत्सन्निधानविशेषयुक्तश्चास्मीत्येवं मे कीर्तिः स्वाध्यायप्रवचनजन्य-यशोलक्षणा गिरेः पृष्ठमिव पर्वताधोभागवत् विस्तृता । दिगन्तविश्रान्ता जातेत्यर्थः । कस्येदं वचनमित्यप्रतीतेः श्रुतिः स्वयमाह- **इतीति** । इत्येवं वैवस्वतमनुवंशोत्पन्नस्य हरिश्चंद्रपितुः त्रिशंकोस्तन्नाम्नो राज्ञो वेदानुवचनं वेदप्रवचनजन्यं फलं निरूपितमित्यर्थः । तथाचाहं वृक्षस्येत्यादौ अहं अस्मीत्युक्तास्मच्छब्दविषयो दर्शित इति ज्ञातव्यम् ।।१. २२ ।।

**वरद**- स्वाध्यायप्रवचनयोरेव सर्वनियमोत्तमत्वं कुत इत्यतो मोक्षादिपुरुषार्थहेतुत्वात् इत्युच्यते- **अहं वृक्षस्य रेरिवेत्यादिना** । तस्यार्थः- **संसारेति** । कीर्तेः पर्वतोपमत्वं पर्वतमूलवद्विस्तारेण पर्वतवत्स्थैर्येण वा । ननु शिक्षाध्ययादौ वायोः कुत्राप्यनुक्तत्वात् 'त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि' इत्युपक्रमः 'त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि' इत्युपसंहारश्च न युज्यत इत्यत आह- **संहिताया इति** ।। १.२२ ।।

**काशी-** अहं वृक्षस्येति स्वाध्यायप्रवचनयोः आधिक्यमेव दृढीकर्तुं आख्यायिका उच्यते । स्वाध्यायार्थोऽयं मन्त्र आम्नायते अहं संसारवृक्षस्य रेरिवा प्रेरयिता अन्तर्यामीति यावत् । मत्कीर्तिर्गिरिः पृष्ठमिव विस्तृता ऊर्ध्वं कारणं पवित्रं पावनं ब्रह्म यस्य सोऽहं वाजमन्नं तद्वति वाजिनि सवितरीव सुशोभनं विशुद्धममृतमात्मतत्त्वमस्मि सूर्येत्याहया आत्मतत्त्वं विशुद्धं प्रसिद्धं स वर्चसमात्मतत्त्वप्रकाशकं द्रविणमिवद्रविणं मोक्षसुख-हेतुब्रह्मज्ञानं मया प्राप्तमित्यध्याहारः सु शोभनात्संसारस्थित्युपसंहार-कौशलयोगात् मेधा यस्यासौ सुमेधा अत एवामृतोऽमरणधर्माऽक्षितोऽ-व्ययोहमिति त्रिशंको ऋषेब्रह्मभूतस्य वेदं आत्मैकत्ववेदनं तत्प्राप्तिमनुचनं वेदानुवचनमित्यर्थः अस्य च जपोविद्योत्पत्यर्थोऽवगम्यते ऋतं चेत्यादिकर्मोपन्यासानन्तरमस्य पाठादिति व्याचक्षते तदसत् । सर्वान्तर्यामित्वस्य जीवमात्रे संसारदशायमसम्भवात् स्वदेहान्तर्यामित्वस्य सर्वसाधारणत्वात् यस्येति षष्ठ्यर्थस्तादात्म्यं चेत्तदयित्वन्मतेसर्वसाधारणं ऊर्ध्वं ब्रह्म यस्य पवित्रताहेतुरित्यर्थश्चेत्तर्ह्यूर्ध्वेन पवित्र इति तत्पुरुष एव युक्तो नतु क्लिष्टो बहुव्रीर्हिः । ब्रह्म भूतेन सूर्याद्यात्मत्वस्यैव सत्वेन वाजिनीस्वमृतमिवेति सादृश्योत्तययोगात् वाजिनीवदेहेस्वमृतमस्मीति योजनायामपि देहाद्युपहितस्य शुद्धात्मत्वानुपपत्तेः अध्याहारस्य दोषत्वाच्च संसारे जगत्सर्जनादेरयोगात् मुक्तावपि जगद्व्यापारवर्जमिति सूत्रकृतैव निरस्तत्वात् शुद्धात्मनिक्रियावेशानुपपत्तेश्च अमृतोऽक्षित इति पुनरुक्तेः आत्मैकत्वस्य च सर्वप्रमाणविरुद्धत्वात् विद्याप्राप्त्यर्थो मन्त्राम्नाय इति चाश्रुतकल्पना कर्मोपन्यासानन्तर्यस्यान्यथोपपत्तेः व्याख्यानान्तरस्य प्रमाणविरुद्धत्वाच्चेति भावेन प्रमाणेनैव व्याचष्टे- **संसारेति** । ऊर्ध्वमूलमित्यादिगीतोक्तरीत्या वृक्षसादृश्यात् वृक्षः संसारस्तस्य रेरिवा च्छेत्तेत्यर्थः । छेदश्च प्रकृते विनाशो विमर्शो वा च्छेदश्च विमर्श एवेति

गीताभाष्योक्तेः कीर्तिरित्यादेर्व्याख्या मम कीर्तिः पर्वतोपमागिरेः पृष्ठमिव विस्तीर्णा सुस्थिराचेति ऊर्ध्वेत्यादिकं हेतुगर्भमिति भावेनाह- **अतीति** । यतः ऊर्ध्वेन स्फुटमत्युत्कृष्टेन सर्वोत्कृष्टत्वनिश्चयपूर्वकोपासनसाक्षात्कार प्रसन्नेन हरिणेति यावत् । पवित्रः पावितः अप्रारब्धानिष्टकर्मनिर्मुक्तो अस्मि ततश्च वाजिनीवस्वमृतं वाजिरूपश्चासौ नेता च वाजिनीः सूर्यस्तत्र वसति नियामकतया स्थित इति वाजिनीवसुर्विष्णुस्तेनामृतः प्रारब्ध-विनिर्मुक्तश्चास्मि 'स तेजसि सूर्ये सम्पन्न' इति श्रुत्या केषाञ्चित् सूर्यस्थभगवत्प्राप्तौ प्रारब्धनिवृत्युक्तेः । अतः द्रविणं स्फुटं अनुभूयमान-सुखस्वरूपश्चास्मीति योज्यम् । किमात्मनः सुखात्मना परिणामः नेत्याह- **नित्येति** । नित्यानन्दस्वरूपत्वात्सत एवानन्दस्यानुभवो न कार्यात्मना परिणाम इति भावः । अत्र स्फुटमित्यनेन सुमेधा इत्यस्याभिव्यक्त-स्वरूपज्ञानार्थतया व्याख्यातप्रायत्वादमृतोक्षित इत्येतद्व्याचष्टे- **तेनेति** । अमृतेन अमृतत्वप्रदेन विष्णुना सिक्तो व्याप्त इत्येतमर्थमाहेत्यन्वयः । सा च व्याप्तिर्नसान्तेति ग्रन्थकृदाह- **तेनेति** । यतस्तेन विष्णुना सदा समस्तोत्तरकाले व्याप्तो विशेषेणाप्तः विशिष्टमोक्षात्मकतत्प्राप्त्यतिशयवानिति यावत् । अत ईदृशव्याप्तिमभिप्रेत्य व्याप्तिमाहेत्यर्थः । उक्षितपदं प्रयुक्तवानिति यावत् । एतेन तेन व्याप्त इत्यादेः श्रुतावभावात् त्रिशङ्कुवचनत्वेन तदनुवादासङ्गतिः । सिक्त इत्यस्य च व्याप्त इत्यर्थकतया यतो व्याप्तो अतो व्याप्त इति हेतुहेतुमद्भावानुपपत्तिश्च । श्रुतौ सिक्तपदाभावेन सिक्तपदोक्तः इत्यर्थायोगात् लक्षणयोक्षितपदोक्त इत्यर्थेऽपि अमृतेनेत्यस्यानन्वय इत्यादिशङ्कानवकाशः । तेन व्याप्त इत्यादेस्त्रिशङ्कु-वचनत्वानुपगमात् । सिक्तपदस्य व्याप्त्यर्थत्वेऽप्य दोषत्वस्योक्तत्वात् । यद्यपि अमृतेन अरण्याख्यसुधासमुद्रोदकेन सिक्तो अभिषिक्त इत्यपि व्याख्या सम्भवति । तथापि प्रवचनफलकथनप्रसङ्गे भगवत्प्राप्तिरूप-

मुख्यफलस्यावश्यवक्तव्यत्वात्प्रामाणिकत्वाच्चेयमेव व्याख्योपादेयेति भावः । इतीत्यनन्तरं स्वाध्यायप्रवचनफलमिति शेषः । मानवो मनुवंशजो नृप इत्यनेन कश्चिदृषिरयमित्यपास्तं, प्रसिद्धिबाधादिति भावः ।।१.२२।।

**काशी खं-** तथाचायमर्थः अहमादौ वृक्षस्य संसारवृक्षस्य रेरिवा छेत्तार छेदन इति धातोः छेदश्चविमर्शः असारानित्यत्वादिना विमर्शक इत्यर्थः । मम कीर्तिः ख्यातिर्गिरेः पृष्टमधो भाग इव विस्तीर्णा स्थिरा च तां श्रुत्वा दिग्भ्यः समागतेषु शिष्यादिषु प्रवचनादिनाविमर्शः सम्यक्कृत इति भावः । ततश्च ऊर्ध्वेन अत्युत्कृष्टेन विष्णुना सर्वोत्कृष्टत्वनिश्चयलब्धवैष्णवपरोक्षेणेति यावत् । पवित्रः अप्रारब्धानिष्टकर्मनिर्मुक्तोऽस्मि । ततः सुषुम्नाद्वारेणा-क्रम्यार्चिरादिमार्गे प्राप्तसूर्यलोके वाजिनीवस्वमृतमस्मि । वाजिरूपश्च नेता च वाजिनीः सूर्यस्तत्र नियामकतया सतीति वाजिनीवसुर्विष्णुस्तेनामृतं प्रारब्धकर्मशेषनिर्मुक्तश्चास्मि । ततो ब्रह्मणा सह विरजायां वृक्षस्य लिङ्गदेहात्मकसंसारस्य रेरिवा छेत्ता ततः सवर्चसं सप्रभं द्रविणं सुवर्णमिव द्रविणं अनुभूयमानं सुखं चास्मि । अत्र वर्चसशब्दो सकारोन्तोप्यस्ति ब्रह्म हस्तिभ्यां वर्चस इत्यत्र योगविभागात् समासान्तोऽच् प्रत्यये वेति ज्ञेयम् । तथा सुमेधाः सम्यगभिव्यक्तज्ञानश्चास्मि भगवत्प्राप्तिरूपमुख्य-फलमप्यतिशयेन लब्धमित्याशयेनाह- **अमृतेति** । अमृतेन अमृतत्वप्रदेन विष्णुना उक्षितः सिक्तः विशेषतः प्राप्त इत्यर्थः स एव स्वप्राप्तिं दत्वा सम्यगभिव्यक्तज्ञानानन्दं मां कृतवान्नतु मम स्वातन्त्र्यमिति भावः इत्येवं त्रिशकोर्मानवस्य राज्ञो वेदानुवचनं वेद प्रवचनादिफलवचनं तस्मात्सर्वाधिक्येन स्वाध्यायप्रवचने निरन्तरमनुष्ठेये इति भावः ।।१.२२।।

**रा.टि-** स्वाध्यायप्रवचनयोराधिक्यमित्युक्तेऽर्थे आख्यायिकामाह- **अहमिति** । वृक्षस्य संसारवृक्षस्य रेरिवा छेत्ता रर् च्छेदन इत्यतो लिटि लिटः क्वसुरिति क्वस्वादेशे द्विर्वचने एत्वाभ्यासलोपयोः स्वाद्युत्पत्तौ उगित्वान्नुमि

अत्वसन्तस्येति दीर्घे रेरिवेति सिद्धेः । कीर्तिः मत्कीर्तिः गिरेः पृष्ठमिव भावेनोक्तम्- **ऊर्ध्वेत्यादि** । ऊर्ध्वेन उत्कृष्टेन हरिणा पवित्रः पावितोऽस्मि यतोऽत इति योज्यम् । किञ्च वाजनीवस्वमृतमस्मि । वाजी चासौ अश्वरूपश्चासौ नीश्च नेता च वाजिनीः नयतेः क्विप् वाजिन्यां सूर्ये वसतीति वाजिनीवसुः वसतेरुः सूर्यस्थो विष्णुः तेन वाजिनीवसुना अमृतम् अमृतोऽस्मि । प्रारब्धकर्मनिर्मुक्तोऽस्मि । कथम् । सुवर्चसं शोभनकान्तियुक्तं द्रविणं स्वर्णमिव जातोऽस्मि नित्यानन्दस्वरूपत्वादिति भावः । व्याख्यातैषा श्रुतिः गीताभाष्यटीकायां पञ्चदशेऽध्याये । सुमेधा अस्मि । अमृतोक्षितः अमृतेन हरिणा उक्षितः उक्ष सेचने सिक्तः अमृतेन व्याप्तोऽस्मीति यावत् । इति एवं त्रिशङ्कोर्मानवस्य नृपस्य वेदानुवचनं वेदव्याख्यानफलम् ॥१.२२॥

### उपनिषत्

**वेदमनूच्याऽचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्र मदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । देवपितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि । नो इतराणि । यान्यस्माकꣳसुचरितानि । तानि त्वयोपास्यानि । नो इतराणि । ये के चास्मच्छ्रेयाꣳसो ब्राह्मणाः । तेषां त्वयाऽसने न प्रश्वसितव्यम् । श्रद्धया देयम् । अश्रद्धया देयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् ॥१.२३॥**

**अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः । अथाभ्याख्यातेषु । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तेषु वर्तेरन् । तथा तेषु वर्तेथाः । एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमु चैतदुपास्यम् ।।१.२४।।**

**ॐ शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वादिषम् । ऋतमवादिषम् । सत्यमवादिषम् । तन्मामावीत् । तद्वक्तारमावीत् । आवीन्माम् । आवीद्वक्तारम् । ॐ शान्तिः शान्तिः शान्तिः ।। १.१ ।।**

भाष्यम्

संहितायाः पञ्चाधिकरणाभिमानित्वं प्राणादिरूपस्य वायोरपि भवति । पृथिव्यन्तरिक्षमित्युक्तपाङ्क्त्वं च । अत उपक्रमोपसंहारयोः त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि । त्वामेव प्रत्यक्षं ब्रह्मावादिषं इति युज्यते ।

व्यास- वेदश्रवणानन्तरभाविनो यमनियमानाह- **वेदमनूच्य-व्याख्यायेत्यादिना** । उपलक्षणत्वेनोक्तं सत्यादिकं सर्वथा कर्तव्यमिति भावेन पुनराह- **सत्यादित्यादिना** । कुशलात् व्यापारात् । माता देव इव पूज्या यस्यासौ मातृदेव इत्यादि ज्ञेयम् । अश्रद्धयापि देयमेव । नतु गुणभूतश्रद्धाभावे प्रधानदानाकरणम् ।।१.२३।।

मां विहाय देशान्तरं गतस्य ते **कर्मविचिकित्सा** यज्ञादिकर्मसन्देहः । वृत्तं तदङ्गमाचारः । युक्ताः योगयुक्ताः । आयुक्ताः आग्रहयुक्ताः स्वधर्मे । अरूक्षाः कोपरहिताः प्रश्ने । अभ्याख्यातेषु निन्दितेषु । यदि विचिकित्सा स्यादिति वर्तते । एष आज्ञा हरेः न केवलं आदेशः किन्तु उपदेशः । न तस्य यादृशतादृश उपदेशः । किन्तु एषा वेदोपनिषत् रहस्यम् । एतन्मम चानुशासनम् । अस्यादेशत्वादिभावात् सत्यत्वादिकमेव उपास्यमनुष्ठेयम् । एतदेवावधारणेन पुनराह- **एवमिति** ।। १.२४ ।।

यया शान्त्या विद्योपक्रम्य परिसमाप्ता । तामेव एषा विघ्ननिर्हरणे समर्थेति भावेनान्तेऽपि पठति- **शन्नो मित्र इति** । अस्यां विद्यायां वायोरनुक्तत्वात्कथं आद्यन्तयोस्त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि त्वामेव प्रत्यक्षं ब्रह्मावादिषं इत्युक्तिस्तत्राह- **संहिताया इति** । अभिमानित्वं अभिमानिदेवतात्वम् ।। इति

**श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य तैत्तिरीयोपनिषद्भाष्यस्य विवरणे श्रीमज्जयतीर्थपूज्यचरणशिष्यव्यासतीर्थकृते प्रथमा शीक्षावल्ली सम्पूर्णा ।।**

**वादि-** अधुना वेदाभ्यासानन्तरं गुरोराज्ञया कर्तव्यनियमानाह- **वेदमनूच्येति** । आचार्यो वेदं शिष्याननूच्य व्याख्याय तमन्तेवासिनमनुशास्तीत्यर्थः । ये के चास्मच्छ्रेयांसः अस्मद्धच्छ्रेयांसश्च ये केचन ब्राह्मणाः सन्ति तेषामासने स्थित्वा न प्रश्वसितव्यम् । श्वासवायुमोचनं न कर्तव्यम् । श्वासमोचनं यावत्कालेन भवति तावत्कालमपि तेषामासने न स्थातव्यमिति भावः । सत्पात्रं चेच्छ्रद्धयाऽस्तिक्यबुध्या देयम् । असत्पात्रं चेत् तत्रापि अश्रद्धया कीर्त्यै देयम् । अ इति ब्रह्मेति श्रुतेः एतदन्तर्यामिणि नारायणे श्रद्धया देयम् । गुहाशयायैव न देहमानिने इति स्मृतेः । श्रिया निमित्तेन देयम् । बहुधनसम्पत्तौ सत्यां तद्रक्षणयानुकूलेभ्यः सर्वेभ्योऽपि देयमित्यर्थः । ह्रिया देयम् । स्वस्य दातृत्वाभावेऽप्यन्यो ददातीति ह्रिया देयम् ।

दूषयिष्यन्तीति भिया देयम् । वस्तुगत्या तु संविदा समीचीनेन ज्ञानेन देयम् । कर्मणि यज्ञादिकर्मणि विचिकित्सा संशयः वृत्ते सन्ध्यावन्दनाद्याचारे विचिकित्सा संशयो वा यदि स्यात् । ये तत्र ब्राह्मणाः संमर्शिनो विचारवन्तः, युक्ता युक्तिमन्तः आ युक्ता आ समन्ताज्ज्ञानैर्युक्ताः अलूक्षाः रलयोरभेदादरूक्षाः शान्ताः धर्मकामाः ये स्युः ते यथा तत्र सन्दिग्धकार्ये वर्तेरन् तथा त्वमपि तस्मिन् कार्ये वर्तेथाः । अथाभ्याख्यातेषु निन्दितशिवलिङ्गधारणादिकार्येषु प्राप्तेषु सत्सु य समदर्शिगुणयुक्ताः ते शिष्टाः यथा तेषु निन्दितकार्येषु ते वर्तेरन् तत्र तथा त्वमपि वर्तेथाः । शिष्टास्तावत् तानि त्यजन्ति अतस्त्वमपि त्यज । शिष्टानतिक्रम्य वित्ताद्याशया पाषण्डिनामाचारं न कदाऽप्याश्रय । बलिनः शिष्टान् ग्रामाद्बहिष्कुर्वन्ति चेत् त्वमपि शिष्टैः सहितः सन् बहिष्ठो भवेति भावः । एष आदेशः मन्त्रोपदेशवदवश्यमनुष्ठेयः । एषा वेदोपनिषत् वेदरहस्यम् । एतद्धरेर्गुरूणां चानुशासनम् अकरणे शिक्षासहितमनुशासनम् । एतदननुष्ठाने यद्यपि शिष्टैः शिक्षा न क्रियते तथाऽपि शक्तो हरिः तदाज्ञाकारिणो यमादयश्च शिक्षां करिष्यन्ति । अतः सर्वथाऽनुष्ठेयमिति भावः । एतदेवमुपासितव्यम् उपास्यमेव । दार्ढ्याय पुनः सावधारणोक्तिः ॥१.२३॥

अध्ययनारम्भेऽपि शान्तिः पाठ्याऽयुश्च प्रार्थ्यम् उपसंहारेऽपि सा पाठ्येति शिष्यशिक्षणाय तदनुकूलमन्तेऽपि पठति- **शन्नो मित्र इति** । अत एवारम्भकालीनशान्तित्वाद् वदिष्यामीत्युक्तम् । नौ गुरुशिष्यौ सहावतु रक्षतु । नौ गुरुशिष्यौ सह भुनक्तु भोजयतु । आवां गुरुशिष्यौ द्वावपि वीर्यं दुर्मतनिराकरणादिवीर्यं सह करवावहै । नौ आवयोरधीतमध्ययनं तेजस्वि अस्तु । आवां गुरुशिष्यौ कदाऽपि मा विद्विषावहै द्वेषवन्तौ न भवावः । उत्तरविद्यारम्भशान्तिस्तु पूर्वविद्यारम्भशान्तिवदेव द्रष्टव्या ।

ननु नमस्ते वायो इति वायोः पृथक् प्रार्थनं प्रागपि कृतम् । अन्तेऽपि नमस्ते वायो इति पृथग्वायुप्रार्थनं क्रियते । तदिदं वायोर्मध्ये प्रतिपाद्यत्वाभावेऽनुपपन्नमिव भवति । अतो मध्येऽपि वायोः प्रस्तावोऽस्तीत्याह भाष्यकारः संहिताया इति । संहितायाः पूर्वोत्तरवर्णसन्धिरूपसंहितायाश्चतुस्थानकथनाय अधिलोकमधिविद्यमधिज्यौतिषमधिप्रजमध्यात्ममिति यानि पञ्चाधिकरणान्युक्तानि तेषां पञ्चाधिकरणानां पञ्चरूपो वायुरभिमानी । एवं पञ्चरूपवायोः पञ्चाधिकरणाभिमानित्वमस्ति । पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः इत्यादिना अधिभूतमध्यात्ममिति यत् पाङ्क्षट्कं कथितं तस्य पाङ्क्षट्कस्य पञ्चरूपो वायुः प्रत्येकमभिमानी । तथा च पाङ्क्तत्वं पाङ्क्षट्काभिमानित्वं च वायोरस्ति । अतो विद्यामध्येऽपि बहुवारं पञ्चरूपवायोः प्रस्तावसद्भावादाद्यन्तयोरपि तस्य पार्थक्येन प्रार्थनं युक्तमिति भावः । इत्येकोपनिषदर्थः ।।१.२४।।

**श्री.भा-** ब्रह्मविद्याव्याख्यानानन्तरं आचार्येणान्तेवासिनं प्रति शिक्षणीयान्नियमानाह- **वेदमनूच्येत्यादिना** । आचार्यो वेदमनूच्य व्याख्याय अन्ते समीप एव वसतीत्यन्तेवासी शिष्यस्तं अनुशास्ति शिक्षयति । शिक्षाप्रकारमेवाह- **सत्यं वदेति** । सत्यवचननिष्ठो भव । धारकत्वाद्धर्मं भगवन्तं चर जानीहि। चरगतिभक्षणयोः गत्यर्थाश्चावगत्यर्थाः । यद्वा धर्ममेव चर आचर । स्वाध्यायात् अधीतात् वेदादिशास्त्रात् मा प्रमदः प्रमादयुक्तो माभूः । तद्विस्मृतिमान् माभूरिति यावत् । यद्वा अनध्यायातिरिक्तदिवसेषु व्याख्यानविषये प्रमादयुक्तो माभूरित्यर्थः। आचार्यकुले वेदाध्ययनानन्तरं प्रियं तदभिलषितं यद्धनं तत् आचार्याय आहृत्य दक्षिणात्वेन दत्वा प्रजातन्तुं प्रजासन्ततिं मा व्यवच्छेत्सीः मा छेदय गृहस्थाश्रमस्वीकारं कुर्विति यावत् । सत्योक्तौ धर्माचरणे च तात्पर्यद्योतनाय तदुभयविषये प्रमादो मास्त्वित्याह- **सत्यादित्यादिना** ।

कुशलात् उक्तवक्ष्यमाणातिरिक्तात् कुशलरूपात् व्यापारात् । भूत्यै ज्ञानमोक्षाख्यैश्वर्यविषय इति यावत् । न प्रमदितव्यम् । यद्वा भूत्यै भूत्या । दैवान्महैश्वर्यप्राप्त्या । तत्प्राप्तावपीति यावत् । उक्तसत्यादिविषये न प्रमदितव्यमित्यर्थः । देवतोद्देशेन क्रियमाणं कर्तव्यं देवकार्यं समाराधनादि पितॄनुद्दिश्य क्रियमाणं कर्तव्यं पितृकार्यं श्राद्धादि ताभ्यां न प्रमदितव्यम् । माता देववत् पूज्या यस्यासौ मातृदेवः स भव । पिता देववत् पूज्यो यस्यासौ तथोक्तः । आचार्यो देववत्पूज्यो यस्यासौ तथोक्तः । अतिथयो देववत्पूज्याः यस्यासौ तथोक्तः । तथाच देवपूजादिवत् मात्रादिपूजायां निरतो भवेत्यर्थः । अनवद्यानि निर्दुष्टानि तानि तान्येव इतराणि सावद्यानि । यान्यस्माकं सुचरितानि तानि अस्माभिराचर्यमाणानि समीचीनकर्माणि तान्येव तत्सदृशान्येव त्वयोपास्यानि सेव्यानि कर्तव्यानीति यावत् । नो इतराणि दैवादस्माभिर्देहादौ प्रतिबन्धकवशेन कदाचित्स्नानादिकर्तव्यं परित्यक्तं चेत् त्वया न परित्याज्यमिति भावः । ये के च ब्राह्मणाः अस्मच्छ्रेयांसः अस्मदपेक्षया ज्ञानादिना अधिकास्तेषां आसने त्वया न प्रश्वसितव्यं नासितव्यं नोपवेष्टव्यम् । यद्वा तेषां सतां तत्समक्षमिति यावत् । त्वयासनेन प्रश्वसितव्यमित्यर्थः । ज्ञानधनादिकं श्रद्धया आस्तिक्यबुद्धिपूर्वकं देयम् । अश्रद्धयापि देयमेव । गुणभूतश्रद्धाभावे प्रधानं दानं न परित्याज्यम् । 'गुणप्रधानयोर्विरोधे गुणे त्वन्य्यायकल्पनम्' इति न्यायात् । मृगभयात् बीजानावापादर्शनाच्चेति भावः । श्रिया ऐश्वर्यानुसारेण । ह्रिया स्वस्य सम्पत्तौ सत्यामप्यदाने लोका हसिष्यन्तीति लज्जया वा देयमित्यर्थः । भिया अदाने गुर्वादीनां दण्डभयेन परलोके यमदण्डभयेन वा । संविदा अनादिनिधनो विष्णुः पात्रस्थः परमेश्वर इति ज्ञानपूर्वकं सत्पात्रे देयमित्यर्थः । यद्वा पात्रापात्रविचारेणेत्यर्थः ।। २३ ।।

मां विहाय देशान्तरगतस्य ते यदि कर्मविचिकित्सा वेदादिविहित-यज्ञादिकर्मविषये सन्देहः । वृत्तं तदंगभूतः सदाचारस्तद्विषये वा विचिकित्सा संशयः स्यात् तत्र तदा तत्र देशे ये ब्राह्मणाः तत्र कर्मणि तदंगे च संमर्शिनो विचारशीलाः युक्ताः ज्ञानाद्युपाययुक्ताः आयुक्ताः स्वधर्माचरणे आग्रहयुक्ताः । अलूक्षाः अरूक्षाः प्रश्ने कृते सति कोपरहिताः धर्मकामाः धर्माचरण एव कामवन्तः स्युः भवेयुः । ते ब्राह्मणाः तत्र कर्मादौ यथा वर्तेरन् त्वमपि तत्र कर्मादौ तत्करणविषये तथैव तदनुसारेणैव वर्तेथाः । नतु तद्विरोधेनेत्यर्थः । अथानन्तरं अभ्याख्यातेषु प्रत्याख्यातेषु वेदनिन्दितेषु अधर्मेषु तद्विषय इति यावत् । यदि विचिकित्सा स्यादिति वर्तते । ये तत्रेत्यादिकमुक्तार्थम् । एवमाचार्योऽन्तेवासिनं प्रति धर्मानुद्दिश्य श्रद्धोत्पादनायाह- **एष इति** । एषः सत्यं वदेत्यादिः । आदेशः हरेराज्ञा । न केवलं राजाज्ञावत् हरेराज्ञामात्रमिदं किन्नाम एषः तस्य हरेरुपदेशः ब्रह्मादिपरम्पराप्राप्तः। नायमुपदेशो विरोचनं प्रति ब्रह्मोपदेशवत्किन्नाम । एषा वेदोपनिषत् सत्यं वदेत्यादिः वेदानां रहस्यम् । एषेत्युपनिषच्छब्दापेक्षया स्त्रीलिंगं उपसंहरति- **एतदिति** । एतदनुशासनं शिक्षणं मया त्वां प्रति कृतमित्यर्थः । एवं मच्छिक्षितप्रकारेण त्वया सत्यवचनादिकमुपासितव्यमनुष्ठेयम् । तात्पर्यातिशयद्योतनाय पुनः स्वोक्तमवधारयति- **एवमुचेति** । उ च शब्दात्रेवार्थौ । एवमु एवमेव मदुक्तप्रकारेणैव एतत्सत्यवचनादिकमुपास्यं अनुष्ठेयमेव न कदाचिदपि आलस्यादिभीरुणा परित्याज्यमित्यर्थः । विघ्नपरिहाराय आदौ यां शान्तिं पठित्वा विद्या उपक्रान्ता समापिता च । तामेव शान्तिं ब्रह्मा विघ्नपरिहारायान्ते पिपठति- **शन्नो मित्र इत्यादिना** । अक्षरार्थस्तूक्त एव । नन्वत्रोपक्रमे नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मवदिष्यामीत्युक्तिः उपसंहारे च त्वामेव प्रत्यक्षं ब्रह्मावादिषम् इत्युक्तिर्न युज्यते। पूर्वोक्तविद्यासु कुत्रापि

वायोरप्रतिपादितत्वादित्यत आह- **संहिताया इति** । संहितायाः यानि पञ्चाधिकरणानि अधिलोकाधिज्यौतिषाधिविद्याधिप्रजाध्यात्मसंज्ञकानि तदभिमानित्वं तदभिमानिदेवतात्वं प्राणापानादिपञ्चरूपस्य वायोरपि भवति । तथा पृथिव्यन्तरिक्षं द्यौर्दिशो वान्तरदिशा इत्यादिनोक्तपाङ्क्तत्वं पाङ्क्षट्काभिमानित्वं च प्राणादिपञ्चरूपस्य वायोरपि भवति अतः पञ्चरूपस्य वायोः पञ्चाधिकरणाभिमानित्वेन पाङ्क्षट्काभिमानित्वेन च पूर्वं प्रतिपादितत्वादुपक्रमे त्वमेव प्रत्यक्षं ब्रह्मवदिष्यामीत्युक्तिरुपसंहारे त्वामेव प्रत्यक्षं ब्रह्मावादिषमित्युक्तिश्च युज्यत इत्यर्थः ।।१.२४ ।।

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमत्तैत्तिरीयोपनिषद्भाष्यस्य टीकायां श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितायां पदार्थदीपिकायां शीक्षा समाप्ता ।। १.२३-२४ ।।**

**वरद-** यद्यपि संहितायाः पूर्वोत्तरादिवर्णप्रतिपाद्यत्वेन वायुरत्र नोक्तः । तथापि पूर्वोत्तरवर्णाद्यभिमानित्वेन पृथिव्यन्तरिक्षमित्याद्युक्तपञ्चकाना-मभिमानित्वेन श्रुत्या विवक्षितः । अतः 'त्वामेव वदिष्यामि' इत्यादिर्युज्यत इति भावः । अथादित एवारभ्य 'ब्रह्मविदाप्नोति परम्' इत्येतदन्ते वाक्यसन्दर्भे क्वचित् भाष्यसिद्धोऽर्थः कथ्यते । एतदुपनिषदुक्तोपासनाया अविघ्नलाभार्थं ऋषिः देवतां प्रार्थयते- **शन्नो मित्रमित्यादिना** । अस्माकं मित्रनामको देवः शं भवतु सुखकरो भवतु । एवं सर्वत्रापि द्रष्टव्यम् । भो वायो त्वं प्रत्यक्षं ब्रह्मासि । अक्षेष्विन्द्रियेषु प्रति प्रतिस्थितं ब्रह्मासि । ऋतं वदिष्यामि सत्यं वदिष्यामीति ऋतं सत्यनामकं परं ब्रह्म वदिष्यामित्यर्थः । पृथिव्यन्तरिक्षं स्वर्गसम्भवोपद्रवशान्त्यर्थं त्रिशः शान्तिप्रार्थनम् । शीक्षां व्याख्यास्याम इत्यस्यायमर्थः । ब्रह्मविद्याप्राप्तिकामेनादौ शिक्षणीयं ज्ञातव्यमर्थं कथयिष्याम इति । कोऽसौ शिक्षणीयोऽर्थ इत्यत आह- **वर्ण इति** । बलमिति । वर्णाद्युच्चरणानुकूलः प्रयत्नः उच्यते- **सामेति** । परः

सन्निकर्षरूपा संहिता सन्तानः । संहितानां पदानां परम्परा । एते पदा ब्रह्मविद्याप्राप्तिकामेनादावेवं ज्ञातव्या इत्यर्थः । तत्र तावत् वर्णादिनां षण्णां मध्ये सामशब्दोक्त-संहिताविषयां ब्रह्मविद्यां निरूपयितुं तत्साधनत्वेन गुरुः ब्रह्मवर्चसादिगुणं प्रार्थयते- **सह नौ यश इत्यादिना** । सन्धिं संहितासन्धानं संहितानिर्माणानुगुणपुरुषव्यापारः । अथवा अध्यात्रेत्यादि संहितायां योऽयमकारादिवर्ण आदिश्यमानः स सन्धानशब्दार्थः । विद्युतां समूहो वैद्युतम् । अधिलोकाधिज्योतिषसंहितयोः विजातीयवायुजलयोः प्रवेशेऽपि लोकानां ज्योतिषां च बहुत्वादधिलोकत्वमधिज्योतिष्ट्वं च युज्यते । छन्दोभ्योऽध्यमृतात्सम्भबभूव इति नित्येभ्यो वेदेभ्योऽभिव्यक्तो भवतीत्यर्थः ।

स इन्द्रः परमेश्वरः मा मां मेधया मेधां दत्वा स्पृणोतु बलिष्ठं करोतु । स्पृ प्रीतिचलनयोरिति धातोः, भो देव अहं अमृतस्य वेदस्य धारणो धारको भूयासम् । मे शरीरं पुत्रादिविशिष्टप्रजावद्भवेत् । वितन्वाना व्याप्ता सती श्रीः सर्वकामानावहन्ती यतस्ततः कारणात् मे मयि तां श्रियमावह । कथंभूतां कामानावहन्तीति अतः उक्तम् । मम मह्यं उपासकाय चिरं बहुकालमिति यावत् । आत्मनो जीवजातस्य च वासांसि गावश्च अन्नपाने च कुर्वाणेति । गाव इति प्रथमा द्वितीयार्थे । आ विमायन्तु विशिष्टा मा आयान्तु प्रकर्षेण मा यान्तु । 'आयन्तु नः पितरः सोम्यास' इतिवदयं शब्दः । ते च ब्रह्मचारिणो मां प्राप्ता दमयुक्ता भवन्तु । शमायन्तु शमयुक्ता भवन्तु । जने जनसमूहे । यशः यशस्वी आन्मानि भवानि । वस्यसः सुखस्य विषये श्रेयान् श्रेष्टोऽसानि भवानि । भगः षड्गुणसम्पन्नविष्णोरहं सहस्रशाखे बहुरूपे त्वयि निमृजे निमृष्टो भवानि । शुद्धो भवानीत्यर्थः । यथा येन प्रकारेण आपः प्रवता प्रवणप्रवतादेशेन निम्नं स्थानं यन्ति यान्ति यथा मासा अहर्जरं संवत्सरं यान्ति एवमेव ब्रह्मचारिणोऽपि मामायन्त्वित्यर्थः । प्रतिविंशति प्रजा अस्मिनिति प्रतिवेशः ।

मां प्रति प्रभाहि प्रकर्षण दीप्तो भव मा मां प्रपद्यस्य प्राप्तो भव । व्याहृतिवेत्तुः फलमुच्यते । चतस्रश्चतस्रो व्याहृतय इति । अस्यार्थः । एता भूरादिचतस्रो व्याहृतयः प्रत्येकं चतस्रः चतुष्प्रकारयुक्ता । एवंभूता व्याहृतीर्यो वेद तस्मै देवा बलिमावहन्तीति । व्याहृतीर्यो वेद तस्मै देवा बलिं वहन्तीति । व्याहृतिपाद्यरूपाणां स्थानान्तरेऽप्युपास्तिरुच्यते । स एषोन्तर्हृदय आकाश इत्यादिना । स इति स्त्रीलिङ्गप्रयोग उत्तरपदयोनि-शब्दानुसारेण । तस्य स्त्रीलिङ्गत्वात् । व्यपोह्य शीर्षकपाल इत्यस्य अशीर्षकापालादुपरि व्यपोनामकं हरेरूपं वर्तत इत्यर्थः । हृदयाकाशादि-स्थितमूर्तीनां मध्ये का मूर्तिः कया व्याहृत्या प्रतिपाद्येत्यत उच्यते- **भूरित्यग्नौ प्रतितिष्ठतीत्यादि** । तस्यार्थः । या हृदयाकाशादिस्थितमूर्तीः सा भूरिति व्याहृतिप्रतिपाद्या सति अग्नौ प्रतितिष्ठति । एवं तालुस्थिता या मूर्तिः सा भुव इति व्याहृतिप्रतिपाद्या आदित्ये वायौ प्रतितिष्ठति । एवं यत्र कोशान्तस्तत्रस्थिताविनाम्नी स्वरिंति व्याहृतिप्रतिपाद्या आदित्ये वर्तते । ब्रह्मणि स्थिता महेति व्याहृतिप्रतिपाद्यमनिरुद्धं च स्वरूपैक्येनाप्नोति । यतोऽतो महो नाम वासुदेवो वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिः इत्येतत् सर्वमपि भवति । वागादिपतिना अनिरुद्धेनैकी-भूतत्वादिति ।

एतदधिविधायेत्यादेरयमर्थः । ऋषिरेतन्मन्त्रद्रष्टा अभवत् । एतत् पाङ्क्षटकम् अधो विधाय निर्माय अवोचत् । कथमेतत्पृथिव्यादिकं पाङ्क्तं वै पञ्चत्वसङ्ख्याविशिष्टं वै । अहमेतद् पृथिव्यादि पङ्क्षट्कं पाङ्क्तेन पञ्चत्वसङ्ख्याविशिष्टेन नारायणादिरूपेण सर्वेष्वपि पाङ्क्तेषु प्रविश्य स्पृणोति बलयतीति । स्पृणोत्युत्तमपुरुषार्थे । द९इत्येतत् अनुकृतीति ओमिति शब्दे य एवं ओङ्कारस्तेनानुकामं कृत्वा पश्चात् आश्रावय इत्याश्रावयन्तीत्यर्थः । राथीरस्यापत्यत्वात् राथीतरः नामतः ।

पुरुशिष्टस्यापत्यं मौद्गल्यः स स्वाध्यायप्रवचने एव सर्वाधिके मन्यते । वेदानुवचनं नाम वेदप्रवचनस्य फलवचनमित्यर्थः । अधिगतवेदादि-विद्यस्यापि वेदादिप्रतिष्ठाहेतवो धर्मानिरुच्यन्ते वेदमधीत्येत्यादिना । श्रिया देयमिति । आत्मसम्पदनुसारेण देयमत्यर्थः ।

न दीयते चेदचेदपहसन्ति लोका इति ह्रिया देयम् । न दीयते चेदपरिष्यन्ति धर्मशिक्षका राजान इति भिया देयम् । सर्वप्रकारेण दानं कर्तव्यमिति तात्पर्यार्थः । कर्मविचिकित्सा नामाचारेषु सन्देहः । सम्मर्षिनो विचारवन्तः असाहसिका इत्यर्थः । युक्ता भगवद्भक्त्यादि-लोकयुक्ताः । अयुक्ताः तत्राभिनिवेशवन्तः । अलूक्षाः अरूक्षाः क्रूरानभवन्तीत्यर्थः । ते ब्राह्मणाः त्वया विचिकित्सेषु कर्मसु आचारेषु वा यथा येन प्रकारेण वर्तेरन् त्वमपि तद्वर्तनानुसारेण वर्तस्वेत्यर्थः । अथाभ्याख्यातेषु वर्तितव्यमिति तात्पर्यम् । आदेशः आज्ञा राजाज्ञा उपदेशः हितोपदेशः वेदोपनिषद्वेदरहस्यम् । एवमुपासितव्यम् । एवमुक्तप्रकारेणानुष्ठातव्यम् । एवमुचैतदुपास्यमिति एवमेवास्योपासनं कर्तव्यमित्यर्थः । एवं साक्षात्परब्रह्मविद्याप्राप्तिसाधनभूतां अवान्तरब्रह्मविद्यां निरूप्यान्तेऽपि शान्तिप्रार्थनं क्रियते । शन्नो मित्र इत्यादिना ।।१.२३-२४।।

**काशी.खं**- इदानीमाचार्येण शिष्यशिक्षाप्रकारं विधत्ते- **वेदमिति** । अनूच्य अध्यापयित्वा व्याँख्यायेति यावत् । अन्तेवासिनं शिष्यं अनुशास्ति शिक्षयेत् । तत्प्रकारमाह- **सत्यमिति** । सत्यमेव वद, धर्ममेवाचर, स्वाध्यायान्मा प्रमदः, अधीतं मा विस्मार्षीः, आचार्याय गुरवे प्रियमिष्टं धनं गुरुदक्षिणामिति यावत्, आहृत्य दत्वा प्रजातन्तुं प्रजासन्ततिं मा व्यवच्छेत्सीः न छिन्दि, गृहाश्रमं प्राप्य प्रजोत्पादनप्रयत्नः कार्य इति यावत् । एतच्च रक्तं प्रति, विरक्तस्य तु सन्यासस्यापि सम्भवात् अन्यथा ब्रह्मचर्यादेव प्रव्रजेदित्यादिश्रुतिविरोधात् । विद्याधिक्याय

गुर्वन्तरग्रहणेऽप्येष धर्मोऽनुवर्तितव्य इत्याशयेनाचार्येति सामान्येनोक्तम् । अन्यथा मह्यमित्यवक्ष्यत् । गृहाश्रमे चेतरकर्मोद्योगेन सत्यादिविषये प्रमादः सम्भाव्यते । स च न कार्य इत्याह- **सत्यादिति** । 'यत्सतां हितमत्यन्तं तत्सत्यमितिकीर्तितम्' इत्यादिसत्यशब्दार्थविस्मृतिर्न कार्येत्यर्थः । धर्मादिति धर्मस्यातिसूक्ष्मत्वादपात्रदानादौ धर्मबुद्धिरेकाद-श्युपवासादौ अधर्मबुद्धिश्च न कार्येत्यर्थः । कुशलात् तत्तत्कालकर्तव्यधर्मसाधन-द्रव्यसंग्रहदिव्यापारात्, भूत्यै अधिकैश्वर्यप्राप्तये न कर्मसङ्कोचादिना राजाद्युपसत्तिः कार्येत्यर्थः । स्वाध्यायेति न कर्माद्यर्थमपि स्वाध्याय-प्रवचनसङ्कोचः कार्य इत्यर्थः । देवकार्यं पूजादि, पितृकार्यं श्राद्धादि तत्र विस्मृतिरनादरो वा न कार्य इत्यर्थः । माता देवो देववत्पूज्या यस्य स मातृदेव इत्यादि । मातृधनाविरोधेन माता संरक्ष्या, पिता तु पित्रार्जितेन स्वार्जितेन च संरक्ष्यः । आचार्यस्त्वाज्ञाकरणेन सेव्यः, अतिथिरन्नदानादिना तोष्यः । नत्वेते दारादिरक्षणपरेण कदाचिदुपेक्ष्या इत्याशयः । यान्यनवद्यानि अदोषाणि कर्माणि व्रतादीनि तानि त्वया सेवितव्यान्यनुष्ठेयानि । इतराणि सावद्यानि स्वपरक्लेशकराणि नानुष्ठेयानि । कदाचिदस्मदनुष्ठितमपि सावद्यं कर्म गुर्वाचारबुध्या त्वया नानुष्ठेयमित्याह- **यान्यस्माकमिति** । उपास्यान्यनुष्ठेयानि सर्वदा स्वोत्तमानुग्रहं सम्पाद्य इत्याह- **ये केचेति** । अस्मत्समा इति शेषः, अस्मत् अस्मत्तः श्रेयांस उत्तमाश्च ब्राह्मणाः, यद्वा ये के च ब्राह्मणा अस्मच्छ्रेयांस इति त्वया ज्ञायन्त इति शेषः । अस्मच्छब्दश्च ज्ञातृशिष्यपरः । तेषामासनेन आसनदानादिना प्रश्वसितव्यं प्रश्वासः श्रमापनयः कार्य इत्यर्थः । यद्वा तेषामासने त्वया न प्रश्वसितव्यं नोपवेष्टव्यमित्यर्थः । अथवा ये के चास्मदपेक्षया श्रेयांसः विद्याधिकाः ब्राह्मणाः तेषामासनेनोपासनेन त्वया प्रश्वसितव्यमज्ञानसंशयादिश्रमापनयः कार्यः । तेभ्यस्तत्त्वज्ञानमापाद्यमेवेति यावत् । समेष्वैच्छिकत्वात्तदग्रहणम् ।

'विकल्पः समयोर्भवेत्' इत्यादिवचनादित्यवधेयम् । तेषां पुरतस्त्वया आसने नोपवेष्टव्यमित्यपि व्याचक्षते । नैतावतैवालम्, किन्त्वेतादृशेषु लब्धेषु यथाशक्ति दानमप्यावश्यकमित्याशयेनाह- **श्रद्धयेति** । भाविफलनिश्चयः श्रद्धा क्वचित्तत्सन्देहेऽपि दानं न त्याज्यमित्याह- **अश्रद्धयेति** । अश्रद्धयापि देयमेवेत्यर्थः । अश्रद्धया अदेयमित्यपि व्याचक्षते तेषां देयप्रायपाठविरोधः । दानं तु शक्तौ सत्यां नाल्पमात्रस्येत्याह- **श्रियेति** । ऐश्वर्यानुसारेणेत्यर्थः । लुब्धेनाप्यदाने जनाः हसिष्यन्तीति लज्जयापि देयमेव । पात्रदानप्रभावाल्लोभोऽपि निवर्तिष्यते इति भावेनाह- **ह्रियेति** । अदाने राजादयः कुप्येरन्निति भीत्या देयमेवेत्याह- **भियेति** । दानं च ज्ञानपूर्वकं चेन्महाफलमित्याशयेनाह- **संविदेति** । पात्रस्थपरमात्मप्रीत्यनुसन्धानेनेत्यर्थः । यद्वा अर्थिन इष्टार्थज्ञानेनेत्यर्थः । यस्य यदर्थमागमस्तस्मै सोऽर्थो देय इति भावः । गुरुसान्निध्यरहितदेशकालान्तरेषु प्रसक्तसंशयनिरसनप्रकारमाह- **अथेति** । अथेत्यर्थान्तरे, देशकालान्तरे इति वार्थः । यदि ते तव कर्मणि यज्ञादिलक्षणे विचिकित्सा संशयः, वृत्ते तदङ्गाचारे वा विचिकित्सा स्यात्, तर्हीति शेषः । तत्र देशे काले वा ये सम्मर्शिनः धर्मविमर्शदक्षाः युक्ता आचारयुक्ता आयुक्ताः कर्मानुष्ठातारः अलूक्षाः अरूक्षाः प्रश्ने कृते क्रोधरहिता इति यावत् । धर्मकामा अदृष्टार्थिनो न तु दाम्भिकाः ये ब्राह्मणा वेदविदः स्युः ते तत्र त्वत्सन्देहविषये कर्मणि वृत्ते वा यथा यत्कोटिनिश्चयेन वर्तेरन् प्रवर्तेरन् त्वमपि तथा तत्कोटिं निश्चित्य तत्र कर्मणि वृत्ते च वर्तेथाः प्रवर्तेथा इत्यर्थः । अत्रालूक्षा इत्यनेन क्वचित्प्रश्नादिनापि संशयनिरसनमापाद्यमिति सूचयति ।

यद्वा यत्कोटिप्रकारेण वर्तेरन् वृत्तिमन्तः निश्चियवन्तः स्युस्तथा तत्कोटिप्रकारेण तत्र वर्तेथा निश्चनुयाः स्वकीयप्रश्नतदीयानुष्ठानपरोपदेश-

दर्शनादिना स्वसंशयो निरसनीय इति भावः । अथ यदि अभ्याख्यातेषु निन्दितेषु कर्मसु कर्मिषु वा विचिकित्सा स्यादित्यनुषङ्गः ये तत्रेत्यादिकं पूर्ववत् उक्तातिक्रमेऽनर्थं सूचयन्नाह- **एष इति** । सत्यं वदेत्यादिरस्य हरेरादेश आज्ञा नकेवलमाज्ञा किन्तु उपदेशः । ब्रह्मादिपरंपराप्राप्तः सोऽपि न विप्रलम्भादिमूलकः किन्तु एषा वेदानामुपनिषद्रहस्यं तात्पर्यार्थः अस्माकं चैतदनुशासनं शिक्षणं अत एतदतिक्रमे हरिगुर्वाज्ञा वेदसंप्रदायोल्लङ्घनप्रयुक्तो महाननर्थः स्यादिति भावः । उक्तं निगमयति- **एवमिति** । उपासितव्यं अनुष्ठेयं एतच्च सर्वदैवेन तु कदाचिदित्याह- **एवमुचेति** । उशब्दो अवधारणे एवं श्रद्धयेत्याद्युक्तप्रकारेण एतत्सत्यादिकमुपास्यमेव नतु कदापि त्याज्यमित्यर्थः । च शब्देन करणाकरणयोरर्थानर्थप्राप्तिं सूचयति । यया शान्त्या विद्योपक्रम्य समापिता सैषा सर्वविघ्नहारिणी प्रचयादिकारिणी चेति स्फुटयितुमन्तेऽपि तां पठति- **शन्नो मित्र इत्यादिना** । अत्रोपक्रमे त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि उपसंहारे च त्वामेव प्रत्यक्षं ब्रह्मावादिषमित्युक्तिर्नयुज्यते अस्यां विद्यायां वायोरनुक्तत्वादित्यत आह भाष्यकारः- **संहिताया इति** । संहिता सम्बन्धीनि यानि पञ्चाधिकरणानि अधिलोकादीनि तदभिमानित्वं प्राणादिरूपस्येत्यनेन क्रमेणैकैकरूपस्यैकैकाभिमानित्वमिति सूचितम् । पाङ्क्तत्वं पाङ्क्षषट्कान्ततैकैकषट्काभिमानित्वम् । ननु पाङ्क्षप्रकारेण पाङ्क्तस्य प्रतिपाद्यतया तदभिमानिनो वायोरभिमान्यधिकरणन्यायेन प्रतिपाद्यत्वसम्भवेऽपि पञ्चप्रकरणेषु पञ्चप्रकरणानामप्रतिपाद्यतया कथं तदभिमानित्वे तत्प्रतिपाद्यत्वमिति चेदत्राहुः अधिलोकादिशब्दैः प्रकरणानां प्रतिपाद्यत्वात्तदभिमानिनोऽपि प्रतिपाद्यत्वं न च प्रतिज्ञावाक्यस्थाधिलोकादिशब्दप्रतिपाद्यत्वेऽपि प्रतिज्ञातप्रकरण प्रतिपाद्यत्वाभावे त्वामेव वदिष्यामीत्यादिनिर्देशविरोधः । प्राचुर्येण प्रतिपाद्यत्वस्य ततः प्रतिभासनादिति वाच्यम् । पाङ्क्षप्रकरण-

प्रतिपाद्यत्वनैव तदुपपत्तेरिति । केचित्तु त्वामेव वदिष्यामीत्यनेन प्रतिपादनमुच्चारणं च विवक्षितम् । तत्र प्रतिपाद्यत्वं पाङ्क्ताभिमानित्वेन उच्चार्यत्वं च पञ्चप्रकरणाभिमानित्वेन उपपन्नम् । अत एव त्वमेव प्रत्यक्षं ब्रह्मासि त्वेमव प्रत्यक्षं ब्रह्मवदिष्यामीत्यस्य वेदरूपस्त्वमसि वेदरूपं त्वां वदिष्यामीत्यप्यर्थः संगच्छते । न चाभिमान्यभिमन्यमानयोरैक्यव्यपदेशोऽपि कथमुच्चार्याभिमानिन उच्चार्यत्वं तस्य शब्दधर्मत्वादिति वाच्यम् । अभिमान्यधीनशक्तिकशब्दोच्चारणस्य विवक्षितत्वादित्याहुः । अन्येतु पञ्चाधिकरणशब्देन तत्प्रतिपाद्यपृथिव्यग्न्यादिचतुष्टयपञ्चकं विवक्षितं अतः तत्प्रतिपादकस्य तदभिमानिवायुप्रतिपादकत्वं तूपपन्नम् । अत एवाभिमानित्वं अभिमानिदेवतात्वमिति टीकायां व्याख्यातं देवताशब्दस्य प्रतिपाद्यर्थत्वात् अत एवचाधिकरणाभिमानित्वं पाङ्क्ताभिमानित्वं पृथगभिहितम् । अन्यथा अधिकरणपदोक्तपृथिव्यग्न्यादिघटितचतुष्क-पञ्चकस्येव पाङ्क्तषट्कस्य प्रत्येकं प्राणाद्यभिमन्यमानत्वप्रतीतौ षष्ठपाङ्क्तस्या-तिरेकापत्तेः पृथगभिधाने च प्रथमे चतुष्कपञ्चकाभिमानित्वं द्वितीये पृथिव्यग्निप्राणचक्षुश्चर्मादिषट्कपञ्चकाभिमानित्वं प्रत्येकं प्राणादिरूपस्य वायोः सिध्यतीत्याहुःउपक्रमोपसंहारयोरिति वदता वक्ष्यमाणब्रह्मविद्योपसर्गोप-शमनार्थं शन्नोमित्रः सहनाववत्विति शान्तिद्वयमिति परोक्तं परास्तम् । नमस्ते वायवित्यन्तेन नमनाद्यनन्तरत्वमेव प्रत्यक्षं ब्रह्मावादिषमित्युप-संहारेण वायुनमनादिप्रभावादेवेयं विद्यासमापितेत्यर्थ प्रतीतेः पूर्वविद्याशेषत्वस्यैव युक्तत्वात् । विद्यासमाप्त्यनन्तरं शान्तिपाठस्य विघ्ननिवृत्यर्थत्वाभावेऽपि प्रचयवीर्यवत्तादि सिध्यर्थत्वेनावैय्यर्थ्यशङ्का-नवकाशात् अत एव तन्मा मावीदित्याद्युक्तिरपि सङ्गच्छेते अन्यथा पूर्ववत्तन्मामवत्याद्यवक्ष्यदिति ।।१.२३-२४।।

।। इति प्रथमवल्ली समाप्ता ।।

**रा.खं-** वेदश्रवणानन्तरभाविनो यमनियमानाह- **वेदमनूच्येत्यादिना** । अनूच्य व्याख्याय आचार्यः शिष्यमनुशास्ति शिक्षयति । अनुशासनप्रकारमेवाऽह- **सत्यं वदेत्यादिना** । स्वाध्यायान्मा प्रमदः । प्रमादं मा कार्षीः । स्वाध्यायं मा विस्मार्षीरित्यर्थः । आचार्यायेष्टं धनमाहृत्य आनीय गुरुदक्षिणां दत्वा तदनुज्ञातोऽनुरूपदारानुद्वाह्य प्रजातन्तुं प्रजासन्तानं मा व्यवच्छेत्सीः । प्रजासन्ततेरविच्छित्तिः कार्या । आवश्यकत्वज्ञापनाय सत्यादित्यादि पुनर्वचनम् । कुशलात् श्रेयो हेतुव्यापारात् भूत्यै भूत्यर्थम् ऐश्वर्यार्थम्, न्यायोपायेन द्रव्यार्जनं कार्यमित्यर्थः । स्वाध्यायेत्यादि व्यक्तम् । मातृदेव इत्यादेः माता पूज्या यस्यासौ मातृदेव इत्यादिरर्थो ज्ञेयः । अनवद्यानि अनिन्दितानि इतराणि सावद्यानि नो न कार्याणि । अस्मच्छ्रेयांसः मत्तोऽपि श्रेष्ठाः तेषां त्वयाऽसनेन आसनादिना आसनाद्युपचारेण प्रश्वसितव्यम्, प्रश्वासः श्रमापनोदः । महात्मनामागमने तच्छ्रमापनोदो यथा तथा कर्तव्यमित्यर्थः । अश्रद्धया देयमिति । अश्रद्धयापि देयमेव । गुणभूतश्रद्धाभावेन प्रधानदानलोपो न कार्य इति भावः । केचिददेयमिति पदं छिन्दन्ति । श्रिया देयमिति । प्रसन्नेन मनसेत्यर्थः । अथेत्यर्थान्तरे । मां विहाय देशान्तरं गतस्य ते यदि कर्मविचिकित्सा यज्ञादिभगवदाराधनकर्मविषये सन्देहः वृत्तविचिकित्सा कर्माङ्गाचारविषये सन्देहः स्यात् भवेत् तदेति शेषः। संमर्शिनो विमर्शकारिणः युक्ता योगयुक्ताः आयुक्ताः स्वधर्मानुष्ठानाग्रहयुक्ताः अलूक्षाः अरूक्षाः प्रश्ने कृते कोपरहिताः धर्मकामा अदृष्टार्थिनः ते महात्मानः तत्र विचिकित्सितकर्माणि वृत्ते वा यथा वर्तेरन् तथा त्वमपि वर्तेथाः । अथेत्यर्थान्तरे अभ्याख्यातेषु निन्दितेषु विचिकित्सा स्यादिति वर्तते । ये तत्रेत्यादि प्राग्वत् । एष आदेशः इयमाज्ञा हरेः । न केवलमाज्ञा किन्तु एष उपदेशः नायं यादृशतादृशउपदेशः अपि तु एषा वेदोपनिषत्

वेदरहस्यमेतत् । एतदनुशासनं **शिक्षेत्यर्थः** । प्रागुक्तं सत्यत्वादिकं अवश्यमुपास्यमिति द्विरुक्त्याऽवधारयति- **एवमिति** । उपासितव्यं प्रागुक्त-सत्यत्ववचनादिकमवश्यानुष्ठेयमित्यर्थः । यथा शान्त्या विद्योपक्रम्य समापिता तामेव विघ्ननिवृत्तौ शक्तेति भावेनान्तेऽपि पठति- **शं नो मित्र इति** । अत्र वायो त्वामेव प्रत्यक्षं ब्रह्मावादिषमत्युक्तेर्बीजं तु उपक्रम एवोक्तम् ॥१.२३-२४॥

॥ **इति प्रथमवल्ली समाप्ता** ॥

# ब्रह्मवल्ली

## उपनिषत्

स ह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ॥२.१॥

ब्रह्मविदाप्नोति परम् । तदेषाभ्युक्ता । सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान्त्सह । ब्रह्मणा विपश्चितेति ॥२.२॥

## भाष्यम्

**स्वयोग्यं ब्रह्मविद् भुङ्क्ते विरिञ्चेन परेण च ।**
**ब्रह्मणा सह तद्वश्यः सुखमेव न दुष्कृतम् ॥ इति च ॥२.२॥**

**व्यास-** यस्याः पूर्वकर्तव्या उक्ताः तामेव वक्तुं विघ्नपरिहारकारिणीं शान्तिं पठति- **सहनाविति** । नौ आवाम् । अवतु रक्षतु । प्रविशतु । भुनक्तु पालयतु । वीर्यं व्याख्यानविषये । तेजस्विनौ भवाव । अधीतं फलप्रदमस्तु । प्रधानब्रह्मविद्यामाह - **ब्रह्मविदाप्नोति परमिति** । तस्यार्थः ब्रह्मप्राप्तिकामो ब्रह्म जानीयादिति । किं लक्षणकं ब्रह्म, कुत्र च तद्वेदनं, किञ्च फलं इत्यतः प्रस्ताव्य क्रमेणाह- **तदेषाभ्युक्तेत्यादिना** । तत्र सोऽश्नुते सर्वान् कामानिति निर्मर्यादं कामभोगः प्रतीयते । अन्यच्च ब्रह्मणा सहेति सहशब्दात् ब्रह्मणो प्राधान्यं चातः तत्सर्वं परिहरन्नाह- **स्वयोग्यमिति** । राजपुरुष इत्यत्र राज्ञ इव ब्रह्मणः शब्दाप्राधान्यमेव न तु स्वरूपत इत्यभिप्रेत्य तद्वश्य इत्युक्तम् । मुक्तत्वात्सुखमेव भुङ्क्ते ॥२.१-२॥

**वादि-** यदर्थं नियमा उक्ता अधुना तामेव ब्रह्मविद्यामाह - **ब्रह्मविदित्यादिना** । परं ब्रह्मवित् परं ब्रह्माऽप्रोतीति पूर्वोत्तरब्रह्मपरशब्दयोरन्योन्यानुषङ्गेन योजना । उपास्य प्राप्ययोरैकविध्यावश्यम्भावात् । न ह्यन्योपास्त्याऽन्यप्राप्तिर्भवति । तत् प्रागुक्तं ब्रह्म अभि प्रति एषा स्वरूपलक्षणवेदनप्रकारकफलनिरूपणपरा विद्या उक्ता वेदान्तविद्याकोविदैः मुनिभिरुक्तेत्यर्थः । किं लक्षणकं ब्रह्म ? कथं च तद्वेदनम् ? सर्वदा विद्यमानस्येदानीमपि प्राप्तिसद्भावात् का च तत्प्राप्तिः ? इति शङ्कात्रयपरिहारायाऽह- **सत्यमित्यादिना** । अत्र सत्यत्वं न पारमार्थिकत्वमात्रम् । ज्ञानत्वं च न ज्ञानत्वमात्रम् । अनन्तत्वं च नान्ताभावमात्रम् । कुलाले जीवज्ञाने आकाशे चातिव्याप्तेः । जन्माद्यस्य यतः इति वेदनिर्णायकव्याससूत्राननुगुणत्वाच्च । अतः सत्त्वं प्रागसतः सत्तारूपजनिं, सत्त्वं सद्भावरूपस्थितिं, षदलृ विशरणगत्यवसादनेषु इति धातोः सत्त्वमवसादनरूपसंहारं यापयतीति व्युत्पत्या विशेषानुक्तेः सङ्कोचे कारणाभावाच्च सकलजगत्स्रष्टृत्वं सकलजगत्पालकत्वं सकलजगत्संहर्तृत्वं चेति व्याससूत्रोक्तलक्षणत्रयं सत्यपदेन सङ्गृहीतम् । ज्ञानपदेन कर्तर्यपि ल्युटोऽनुशासनाद्विशेषोक्तेः सङ्कोचे कारणाभावान्निरवधिकसर्वज्ञातृत्वरूपं सृष्ट्याद्युपयोगितया सूत्रकृत एवाभिप्रेतं लक्षणान्तरमुदितम् । अनन्तपदेन च सृष्ट्युपयुक्ततया कोह्येवान्यात्कः प्राण्यात् इति श्रुत्युक्तं आनन्दमयोऽभ्यासात् इति सूत्रोक्तं चाऽनन्देनान्तरहितत्वाख्यमानन्दपूर्णत्वं च पञ्चमं लक्षणमुदितम् ।

एवञ्च शक्त्यादिगुणाभावे सृष्ट्ययोगात् सार्वदेशिकसार्वकालिकसृष्टेः देशकालव्याप्त्यभावे अयोगेन च सूत्रश्रुत्युक्तानन्दपदस्य सृष्ट्युपयुक्तसर्वगुणोपलक्षणत्वसम्भवाच्च देशतः कालतो गुणतोऽन्तराहित्यं सर्वशक्त्यादिगुणैरनन्तत्वे पर्यवस्यति । 'अतो महद्गुणत्वाद्यमनन्तमाहुः'

इति स्मृतिरप्यनुकूलैवाऽसीदिति ज्ञेयम् । गुहायां जीवहृदयगुहायां परमे व्योमन् व्योम्नि निहितं वेद न तु जीवतादात्म्येनेति वेदनप्रकार उक्तः । स ज्ञानी ब्रह्मणा विरिञ्चेन ब्रह्मणा परब्रह्मणा च सह काम्यन्त इति कामाः स्वयोग्यसुखानि तानश्नुत इति फलनिरूपणम् । एवं च प्राप्तिमात्रस्य पूर्वं विद्यमानत्वेऽपि स्वोचितसकलसुखानुभवानुकूलप्राप्तेः प्रागभावादपूर्वतया फलवत्त्वोपपत्तिः । ब्रह्मणैकीभवतीति परकीयदुराशाखण्डनाय सहेत्युक्तम् । ब्रह्मणा ब्रह्मभावेन सह युगपत् सर्वान् कामानश्नुत इति व्याख्यानं तु सहशब्दस्य यौगपद्यार्थे अनुशासनाभावेन श्रुतहान्यश्रुतकल्पनारूपत्वात् तूष्णीं भावप्रधानपरत्वकरणे कारणाभावात् तन्मते मुक्तौ सर्वकामाभावाच्चानुपपन्नम् । यदत्रोक्तं परेण सर्वजीवात्मकब्रह्मभावे सर्वजीवयोग्यकामानामपि सत्त्वात् सर्वकामाशनोपपत्तेरिति तदतितुच्छम् । सर्वजीवैर्नरकादिष्वनुभूयमानान्तदुःखानामप्यनुभवप्रसङ्गेन मुक्तेः संसारादप्यतिनीचत्वप्रसङ्गात् । ब्रह्मणा सहेत्युक्त्या ब्रह्मणोऽप्राधान्यशङ्कापरिहाराय तद्वश्यः इत्युक्तम् । यज्ज्ञानात्स्वयं मुक्तोऽभूत् तदप्राधान्यस्य शङ्कितुमशक्यत्वात् । सहेति प्रयोगस्तु भृत्यैः सह राजाऽगत इतिवत् तद्वश्यतामेवाऽहेति भावः । न हि पत्या सहधर्मिणी भार्या पत्या सह शेते पत्या सह भुङ्क्ते इत्यादौ पत्युरप्राधान्यं क्वापि दृष्टमिति भावः ।।२.१-२।।

**श्री.भा-** यद्ब्रह्मविद्याप्राप्त्यर्थं पूर्वसम्पादनीया विद्या निरूपिता तामेव विद्यां वरुणाय वक्तुं तत्र प्रसक्तविघ्नपरिहाराय ब्रह्मा शान्तिं पठति- **सह नाववत्वित्यादिना**। सः मित्रादिः । नौ गुरुशिष्यौ । अवतु रक्षतु । विघ्नान्परिहृत्येति शेषः । हेति मित्रादेः रक्षणे सामर्थ्यमस्तीति प्रसिद्धमिति दर्शयति । यद्वा नौ आवां सह मिलित्वा अवतु रक्षत्वित्यर्थः । स मित्रादिः नौ गुरुशिष्यौ भुनक्तु अन्नादिदानेन पालयतु । व्याख्यानादिजनितमौक्तानन्दं भोजयत्विति वा । भुजपालनाभ्यवहारयोरिति धातोः

हेति मित्रादेः भोजनदाने सामर्थ्यप्रसिद्धिमाह । नौ आवां सह मिलित्वा भोजयत्विति वा । आवां गुरुशिष्यौ सह मिलित्वा वीर्यं व्याख्यानविषये प्रयत्नं करवावहै कुर्वः । लोडुत्तमपुरुषद्विवचनमिदम् । नौ आवाभ्यां अधीतं तेजस्वि वीर्यवत्तममस्तु । आवां तेजस्विनौ भवाव । अधीतं फलप्रदमस्तु इत्यर्थ इत्यप्याहुः । गुरुशिष्यौ आवां मा विद्विषावहै विद्वेषं न करवावहै । न कुर्वः शान्तिरिति त्रिरुक्तेः प्रयोजनं पूर्वमेवोक्तमनुसन्धेयम् । यदर्थं विघ्नपरिहारिणी शान्तिः पठिता तामेव ब्रह्मविद्यामाह- **ब्रह्मविदाप्नोति परमित्यादिना** । अप्रतिपत्तिविप्रतिपत्तिनिरासायादौ तावत् ब्रह्मवल्लीं प्रमाणेनैव सम्यग्व्याचष्टे- **स्वयोग्यमित्यादिना** । तत्रादौ सोऽश्नुते इतिवाक्यं व्याचष्टे- **स्वयोग्यमिति** । स इत्यस्यार्थः ब्रह्मविदिति । सर्वान्कामानित्यस्यार्थः स्वयोग्यं सुखमेवेति । तद्व्यावर्त्यप्रदर्शनं नेति । अश्नुत इत्यस्यार्थः भुङ्क्ते इति । ब्रह्मणेत्यनूद्य तस्य विरिञ्चेन परेण चेत्यर्थद्वयकथनम् । सहेत्यनूद्य तस्याभिप्राय उक्तस्तद्वश्य इति ।।२.१- २।।

**श्री.खं-** ततश्च । ब्रह्मविदाप्नोति परमित्यादेरियमक्षरयोजना । अन्यविद्याया अन्यगतेरयुक्तत्वाद्ब्रह्मवित् परब्रह्मवित् परं ब्रह्माप्नोति । ननु तत्परं ब्रह्म किं लक्षणकम् । नहि लक्षणेन विना वस्तु स्वेतरसमस्तवस्तु-व्यावृत्ततया शक्यते ज्ञातुम् । कुत्र च तद्वेदनं किं हृदि तदन्यत्र वा काच तत्प्राप्तिः किं तदैक्यापत्तिरूपा उत तत्समीपं प्राप्य भोगानुभवरूपा वेति शंकायामाह- **तदेषेति** । तदेतच्छंकात्रयं अभि प्रति तदुत्तरत्वेनेति यावत् । एषा वक्ष्यमाणा ऋङ्मन्त्रवर्णरूपा उक्ता उच्यत इत्यर्थः । तमेव मन्त्रवर्णमुदाहरति- **सत्यमित्यादिना विपश्चितेत्यन्तेन**। तत्राद्यप्रश्नोत्तरं- **सत्यमिति** । द्वितीयतृतीयप्रश्नोत्तरमाह- **यो वेदेति** । योऽधिकारी गुहायां हृदयगुहायां परमे व्योमन् व्योम्नि दहराकाशे निहितं सत्यत्वादिविशिष्टं परब्रह्म वेद स ब्रह्मवित् अधिकारी सर्वान्कामान्स्वयोग्यानानन्दादीन्

विपश्चिता ब्रह्मणा विरिञ्चेन परेण च सह तद्वश्यः सन् अश्नुते भुङ्क्ते इत्यर्थः । अनेन हृदि तद्वेदनं तत्प्राप्तिश्च तत्समीपं प्राप्य तदधीनतया भोगानुभवरूपेत्युक्तं भवति । इति शब्दो मन्त्रवर्णसमाप्तिद्योतकः ।।२.१-२।।

**वरद-** अथ भाष्यमेवानुसरामः । यत्साधनत्वेन संहितादिविद्या निरूपिता सा परब्रह्मविद्या निरूप्यते ब्रह्मविदाप्नोति परं इत्यादिना । तत्र ब्रह्मणः सर्वगतत्वेन नित्यप्राप्तत्वात् का नाम ज्ञानिनस्तत्प्राप्तिर्नाम? इत्याकाङ्क्षायामुच्यते सोऽश्नुते सर्वान्कामान् इत्यादि । तद्ब्रह्मशब्दार्थं वदन्नेव ज्ञानी भवद्योग्यकामनामाप्नोति सर्वान्कामान् समश्नुत इत्युक्तत्वा-दित्याशङ्कां प्रमाणवाक्येनैव परिहरति- **स्वयोग्यमिति** । अत्र तावल्लक्षण-वाक्ये सत्यशब्देन जगत्सृष्टिजीवनसंहारचेष्टाप्रदत्वलक्षणाश्चत्वारो अर्थाः कथिताः । सत्यशब्दस्य एतावदर्थवत्त्वं च आचार्यैरेवान्यत्र प्रतिपादितम् ।।२.१-२।।

**काशी-** यद्विद्याप्राप्तये पूर्वकर्तव्यविषयविद्या उक्तास्तामिदानीं वक्तुं सम्भावितविघ्नशमनीं शान्तिं पठति- **सहनाविति** । अत्र पूर्वप्रकृतो मित्रादिः प्रक्रमिष्यमाणं ब्रह्म वा कर्तृत्वेन सम्बध्यते । नौ गुरुशिष्यौ सहावतु । प्रसक्तविघ्नपरिहारेण रक्षतु नौ सह भुनक्तु । अन्नादिदानेन भोजयत्विति साधकमुक्तं बाधकं परिहृत्य साधकसम्पत्तिं ददात्विति तात्पर्यम् । तत आवां सह ब्रह्मविद्याविषये वीर्यं बलवत्प्रयत्नं करवावहै । विद्याप्राप्तेर्गुरुशिष्योभयप्रयत्नसाध्यत्वादन्यतरस्य साधनादिवैकल्ये तदसिद्धेः सर्वत्र सहेत्युक्तम् । ततो नौ आवयोरधीतं तेजस्विज्ञानादिफलप्रदमस्तु । आवां मा विद्विषावहै । केनचिन्निमित्तेन विद्वेषवन्तौ न भवाव गुरुशिष्ययोर्मिथो द्वेषप्राप्तौ विद्यातत्फलयोरसिद्धेः । वाक्यद्वये स इति पदं विच्छिद्य मित्रादिरिति । व्याख्या सहवीर्यमित्यत्रैव सहेत्यव्ययमित्यप्याहुः । टीकायां तु नौ आवामवतु प्रविशतु । प्रवेशस्यापि धात्वर्थत्वात् प्रविश्य

हेति मित्रादेः भोजनदाने सामर्थ्यप्रसिद्धिमाह । नौ आवां सह मिलित्वा भोजयत्विति वा । आवां गुरुशिष्यौ सह मिलित्वा वीर्यं व्याख्यानविषये प्रयत्नं करवावहै कुर्वः । लोडुत्तमपुरुषद्विवचनमिदम् । नौ आवाभ्यां अधीतं तेजस्वि वीर्यवत्तममस्तु । आवां तेजस्विनौ भवाव । अधीतं फलप्रदमस्तु इत्यर्थ इत्यप्याहुः । गुरुशिष्यौ आवां मा विद्विषावहै विद्वेषं न करवावहै । न कुर्वः शान्तिरिति त्रिरुक्तेः प्रयोजनं पूर्वमेवोक्तमनुसन्धेयम् । यदर्थं विघ्नपरिहारिणी शान्तिः पठिता तामेव ब्रह्मविद्यामाह- **ब्रह्मविदाप्नोति परमित्यादिना** । अप्रतिपत्तिविप्रतिपत्तिनिरासायादौ तावत् ब्रह्मवल्लीं प्रमाणेनैव सम्यग्व्याचष्टे- **स्वयोग्यमित्यादिना** । तत्रादौ सोऽश्नुते इतिवाक्यं व्याचष्टे- **स्वयोग्यमिति** । स इत्यस्यार्थः ब्रह्मविदिति । सर्वान्कामानित्यस्यार्थः स्वयोग्यं सुखमेवेति । तद्व्यावर्त्यप्रदर्शनं नेति । अश्नुत इत्यस्यार्थः भुङ्क्ते इति । ब्रह्मणेत्यनूद्य तस्य विरिञ्चेन परेण चेत्यर्थद्वयकथनम् । सहेत्यनूद्य तस्याभिप्राय उक्तस्तद्वश्य इति ।।२.१- २।।

**श्री.खं-** ततश्च । ब्रह्मविदाप्नोति परमित्यादेरियमक्षरयोजना । अन्यविद्याया अन्यगतेरयुक्तत्वाद्ब्रह्मवित् परब्रह्मवित् परं ब्रह्माप्नोति । ननु तत्परं ब्रह्म किं लक्षणकम् । नहि लक्षणेन विना वस्तु स्वेतरसमस्तवस्तु-व्यावृत्ततया शक्यते ज्ञातुम् । कुत्र च तद्वेदनं किं हृदि तदन्यत्र वा काच तत्प्राप्तिः किं तदैक्यापत्तिरूपा उत तत्समीपं प्राप्य भोगानुभवरूपा वेति शंकायामाह- **तदेषेति** । तदेतच्छंकात्रयं अभि प्रति तदुत्तरत्वेनेति यावत् । एषा वक्ष्यमाणा ऋङ्मन्त्रवर्णरूपा उक्ता उच्यत इत्यर्थः । तमेव मन्त्रवर्णमुदाहरति- **सत्यमित्यादिना विपश्चितेत्यन्तेन**। तत्राद्यप्रश्नोत्तरं- **सत्यमिति** । द्वितीयतृतीयप्रश्नोत्तरमाह- **यो वेदेति** । योऽधिकारी गुहायां हृदयगुहायां परमे व्योमन् व्योम्नि दहराकाशे निहितं सत्यत्वादिविशिष्टं परब्रह्म वेद स ब्रह्मवित् अधिकारी सर्वान्कामान्स्वयोग्यानानन्दादीन्

विपश्चिता ब्रह्मणा विरिञ्चेन परेण च सह तद्वश्यः सन् अश्नुते भुङ्क्ते इत्यर्थः । अनेन हृदि तद्वेदनं तत्प्राप्तिश्च तत्समीपं प्राप्य तदधीनतया भोगानुभवरूपेत्युक्तं भवति । इति शब्दो मन्त्रवर्णसमाप्तिद्योतकः ।।२.१-२।।

**वरद-** अथ भाष्यमेवानुसरामः । यत्साधनत्वेन संहितादिविद्या निरूपिता सा परब्रह्मविद्या निरूप्यते ब्रह्मविदाप्नोति परं इत्यादिना । तत्र ब्रह्मणः सर्वगतत्वेन नित्यप्राप्तत्वात् का नाम ज्ञानिनस्तत्प्राप्तिर्नाम? इत्याकाङ्क्षायामुच्यते सोऽश्नुते सर्वान्कामान् इत्यादि । तद्ब्रह्मशब्दार्थं वदन्नेव ज्ञानी भवद्योग्यकामनामाप्नोति सर्वान्कामान् समश्नुत इत्युक्तत्वा-दित्याशङ्कां प्रमाणवाक्येनैव परिहरति- **स्वयोग्यमिति** । अत्र तावल्लक्षण-वाक्ये सत्यशब्देन जगत्सृष्टिजीवनसंहारचेष्टाप्रदत्वलक्षणाश्चत्वारो अर्थाः कथिताः । सत्यशब्दस्य एतावदर्थवत्त्वं च आचार्यैरेवान्यत्र प्रतिपादितम् ।।२.१-२।।

**काशी-** यद्विद्याप्राप्तये पूर्वकर्तव्यविषयविद्या उक्तास्तामिदानीं वक्तुं सम्भावितविघ्नशमनीं शान्तिं पठति- **सहनाविति** । अत्र पूर्वप्रकृतो मित्रादिः प्रक्रमिष्यमाणं ब्रह्म वा कर्तृत्वेन सम्बध्यते । नौ गुरुशिष्यौ सहावतु । प्रसक्तविघ्नपरिहारेण रक्षतु नौ सह भुनक्तु । अन्नादिदानेन भोजयत्विति साधकमुक्तं बाधकं परिहृत्य साधकसम्पत्तिं ददात्विति तात्पर्यम् । तत आवां सह ब्रह्मविद्याविषये वीर्यं बलवत्प्रयत्नं करवावहै । विद्याप्राप्तेर्गुरुशिष्योभयप्रयत्नसाध्यत्वादन्यतरस्य साधनादिवैकल्ये तदसिद्धेः सर्वत्र सहेत्युक्तम् । ततो नौ आवयोरधीतं तेजस्विज्ञानादिफलप्रदमस्तु । आवां मा विद्विषावहै । केनचिन्निमित्तेन विद्वेषवन्तौ न भवाव गुरुशिष्ययोर्मिथो द्वेषप्राप्तौ विद्यातत्फलयोरसिद्धेः । वाक्यद्वये स इति पदं विच्छिद्य मित्रादिरिति । व्याख्या सहवीर्यमित्यत्रैव सहेत्यव्ययमित्यप्याहुः । टीकायां तु नौ आवामवतु प्रविशतु । प्रवेशस्यापि धात्वर्थत्वात् प्रविश्य

च नौ भुनक्तु पालयतु । भुजेः पालनार्थत्वात् तेजस्विनौ भवावेति शेषः । अधीतं च फलप्रदमस्त्विति व्याख्यातम् । तेजस्विनौ तेजस्विनो-रावयोरधीतमर्थज्ञानयोग्यमस्त्विति व्याख्यानं तु विभक्तिव्यत्ययाध्याहार-गौरवादुपेक्ष्यम् । शान्तिरिति त्रिवारोक्तेः प्रयोजनं प्रागेवोक्तं अत्र शन्नोमित्र इत्यादि भृगुवाक्यं सहनावित्यादिवरुणवाक्यमिति सम्प्रदायः । यदर्थमेतावान् परिकरः कृतस्तां प्रधानब्रह्मविद्यामारभते- **ब्रह्मविदित्यादिना** । अत्रोक्तपरब्रह्मप्राप्तिः सोऽश्नुते सर्वान्कामानिति मन्त्रवर्णेन व्याख्याय ते तदयुक्तम् । सर्वेषां सर्वैश्वर्यादिकामप्राप्तौ वक्ष्यमाणतारतम्यविरोधः । सह ब्रह्मणेत्युक्त्या ब्रह्मणो प्राधान्यलाभे सर्वोत्तमत्वमहातात्पर्यविरोधश्चेत्याशङ्कां प्रमाणेनैव परिहरति- **स्वयोग्यमिति** । स्वयोग्यमेव भुङ्क्ते न तु स्वायोग्यमुत्तमैश्वर्यादित्यनेन तारतम्यविरोधः परिहृतः विरिञ्चेन परेण ब्रह्मणा चेति ब्रह्मशब्दो व्याख्यातः । तद्वश्य इत्यनेन ब्रह्मणः शब्दत एवाप्राधान्यं नत्वर्थतः । राज्ञा सहैवायमायातः इत्यादिप्रयोगदर्शनात् । एतच्चविपश्चित इति विशेषणसामार्थ्यादेव लभ्यत इति भावः । नन्वेवं कामितैश्वर्याद्यप्राप्तौ दुःखापत्तिरत आह- **नेति** । दुष्कृतं दुःखं ब्रह्मविदामयोग्यकामनैव न भवतीत्याशयः एतेन ब्रह्मविदः परब्रह्मप्राप्तिः परब्रह्मस्वरूपत्वमेवेति व्याख्यानं सह भावार्थतया मान्त्रवर्णिकव्याख्यान-विरोधादुपेक्ष्यमिति सूचयति अधिकमग्रे वक्ष्यते।।२.१-२।।

**काशी.खं**- ततश्च ब्रह्मविदित्यादेरयमर्थः अत्र ब्रह्मशब्दपरशब्दौ परब्रह्मपरौ अन्यज्ञानेनान्यप्राप्त्ययोगात् ब्रह्मवेत्तीति ब्रह्मवित् स्वयोग्यब्रह्म-ज्ञानवान्परं ब्रह्म प्राप्नोति । ब्रह्मप्राप्तिकामो ब्रह्म विद्यादिति यावत् । अत्र कीदृशं तद्ब्रह्म स्वात्मैव चेत् तत्प्राप्तुः प्राप्यत्वानुपपत्तिः स्वात्मव्यतिरिक्त-ब्रह्मणिप्रमाणाभावात् कीदृशं च तद्वेदनं सामान्यदर्शनेन तत्प्राप्त्यभावात् कीदृशी च तज्ज्ञानसाध्या तत्प्राप्तिः अपरिच्छिन्नस्य ब्रह्मणो

नित्यप्राप्तत्वादित्याशङ्कायां मन्त्रवर्णोदाहरणनैव समाधानं प्रतिजानीते तदिति । तदभि उक्तशङ्कात्रयं प्रति तदुत्तरत्वेनेति यावत् । एषा वक्ष्यमाणा ऋक् उक्ता उच्यत इत्यर्थः । तमुदाहरति- **सत्यमिति ।** अत्राद्यशंकापरिहाराय ब्रह्मणो लक्षणान्युच्यन्ते सत्यं ज्ञानमनन्तमिति । सत्छब्देन प्रजननजीवनचेष्टाविनाशाः विवक्षिताः । 'सद्भावे साधुभावे च सदित्येत्प्रयुज्यत' इति गीतायां सद्भावशब्देन प्रजननं सूचितमिति भाष्योक्तेः । जीवतीत्यर्थेऽस्तीति प्रयोगदर्शनात् षदलृविशरणगत्य-वसादनेष्विति धातुव्याख्यानाच्च । तथा च सत् प्रजननादिकं यापयति प्रापयतीति सत्यमिति व्युत्पत्या सत्यशब्देन सकलजगज्जन्मादिहेतुत्वं तदुपपादकतया ज्ञानशब्देन स्वपरगताशेषविशेषविषयकज्ञानत्वमनन्तशब्देन च देशतः कालतो गुणतश्चापरिच्छिन्नत्वं विवक्षितम् । एतैश्चेतरव्यावृत्तलक्षणैः स्वात्मव्यतिरिक्तमेव तद्ब्रह्मावसीयते आगमस्यातदनुगृहीतकार्यलिङ्ग-कानुमानस्य च प्रमाणस्योक्तत्वादिति भावः । द्वितीयशङ्कापरिहारायाह- **यो वेदेति** । गुहायां हृदयस्थाने परमेऽव्याकृते व्योमन् व्योम्न्याकाशे यद्वा हृदयाकाशे परमो जीवोत्तमे वायौ निहितमन्तर्यामितया स्थितं ब्रह्मरूपविशेषं पश्यतीति तृतीयशङ्कोत्तरमाह- **स इति** । विपश्चिता सर्वज्ञेन योग्यभोगदाने योग्यगुणोपदेशे चाभिज्ञेनेति यावत् । ब्रह्मणा परेणापरेण च सह सर्वान्कामान् तद्भुक्तशेषभूतसमस्तेष्टविषयानिति यावत् । अश्नुते भुङ्क्त इत्यर्थः । परमेश्वरपरमानुग्रहाभिव्यक्तरूपविशेषसमीपे तद्दत्ततद्भुक्तशेषभोग-प्राप्तिरेव परप्राप्तिरतो नोक्तदोष इति भावः । इति शब्दस्य इत्येष इति पूर्वेण सम्बन्धः ।।२.१-२.२।।

**रा.खं-** यस्याः विद्यायाः पूर्वं कर्तव्या विद्या उक्ता तामेव वक्तुं विघ्नविघातिनीं शान्तिं पठति - **सह नाविति** । नौ गुरुशिष्यौ अवतु अवरक्षणगतिकान्तिप्रवेशेत्यादिधातुपाठात् प्रविशतु, आवयोः सन्निधीयता-

मित्यर्थः । नौ सहैव भुनक्तु पालयतु, भुज पालनाभ्यवहारयोरिति धातोः । व्याख्यानविषयं वीर्यं सामर्थ्यं सह करवावहै । तेजस्वीनौ भवावेति योज्यम् । अधीतं फलप्रदमस्तु । नौ आवाभ्यामधीतं तेजस्वस्त्विति वा । मा विद्विषावहै विद्याग्रहणनिमित्तं शिष्यस्य गुरोर्वा प्रमादकृतापराधात् प्राप्तं विद्वेषं नैव कुर्वाव इत्यर्थः । त्रिः शान्तिपाठस्य बीजमुक्तमेव ध्येयम् ।

प्रधानब्रह्मविद्यामाह- **ब्रह्मविदिति** । ब्रह्मवित् परब्रह्मज्ञानी परं ब्रह्म प्राप्नोति । एतेन परब्रह्मप्राप्तिकामः परं ब्रह्म विद्यादित्युक्तं भवति । तत्र किं लक्षणकं ब्रह्म ? कथं च तद्वेदनम् ? नहि ब्रह्मपदेन प्रतीतस्या-परिच्छिन्नस्य साक्षात्कारो युक्तः । कीदृशी च तत्प्राप्तिः ? या ज्ञानसाध्या सर्वगतत्वेन नित्यप्राप्तत्वादित्युत्पन्नशङ्कात्रयस्य क्रमेण परिहारार्थं प्रस्ताव्यमन्त्रमुदाहरत्युपनिषत् तदेषाभ्युक्तेत्यादिना । तदभि तदाशङ्कात्रयं प्रति तत्समाध्यर्थमिति यावत्, एषा ऋक् उक्ता उच्यत इत्यर्थः । सत्यं ज्ञानमनन्तं ब्रह्मेति लक्षणशङ्कया उत्तरम् । प्रत्येकं लक्षणत्वात् त्रीणि लक्षणान्यवश्यं ज्ञातव्यत्वादुक्तानि । सत्यत्वं नाम जगत्स्रष्टृत्वं जगज्जीवनप्रदत्वं जगच्चेष्टकत्वं जगत्संहर्तृत्वं चेति ज्ञातव्यम् । सदिति सद्भावः जन्मेति यावत्, सत्वं जीवनं प्रवर्तनं च, सत्वं विशरणं नाशमिति यावत्,षदलृ विशरण इति धातोः यापयतीति व्युत्पत्या सत्यशब्देनार्थचतुष्टस्यापि प्रतीतेः । ज्ञानत्वं तु स्वपरगताशेषसामान्य-विशेषविषयकज्ञानरूपत्वम् । अनन्तत्वं च देशकालगुणापरिच्छिन्नत्वम् । द्वितीयशङ्कोत्तरम्- यो वेदेति । अपरिच्छिन्नपरिमाणस्यापि स्वशक्त्या भक्तानुकम्पयाऽल्पपरिमाणम् अक्षरनयोक्तदिशा विद्यमानमात्रं तत्प्राप्तिः । येन ज्ञानसाध्या न स्यात् । किं तु विपश्चिता सर्वज्ञेन ब्रह्मणा स्थलविशेषे अभिव्यक्ततया स्थितेन परब्रह्मणा, विरञ्चिने वा सह सर्वान् स्वयोग्यान् कामान्भुङ्क्ते इति तेन सह तदधीनतया सुखभोग एव तत्प्राप्तिरिति तदभिप्रायः । इति शब्दस्य इत्येषाऽभ्युक्तेति पूर्वेणान्वयः ।।२.१-२।।

### उपनिषत्

तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः । आकाशाद् वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात् पुरुषः ॥२.३॥

स वा एष पुरुषोऽन्नरसमयः । तस्येदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छं प्रतिष्ठा ॥२.४॥

### भाष्यम्

य एष भगवान् विष्णुर्भूतस्रष्टा गुणाधिकः ।
स एवान्नात् पुनर्जातो ह्यजातोऽपि यतो विभुः ॥

अन्नात्मनि शरीरेऽसौ व्यज्यते सुविवेकिभिः ।
अन्नस्य सारभूतोऽयं शरीरस्य च केशवः ॥

अन्ननामा चान्नसंस्थः शरीरेषु च संस्थितः ।
अत्तृत्वात् सर्वलोकानामन्नमित्युच्यते हरिः ॥
उपजीव्यश्च भूतानामिति चान्नं जनार्दनः ॥

**व्यास-** ब्रह्म सत्यमिति केन निमित्तेनोक्तमित्यतः जगत्सद्भावप्रापकत्वात् स्रष्टृत्वादिति भावेन सृष्टिमाह- **तस्मादित्यादिना** । तस्मात्सत्यत्वादिलक्षणात् एतस्मात्प्रकृतात् । स्वयं चाकाशादिनामा भूतनियामकत्वेन व्यूढ इति च ग्राह्यम् । स वा एष पुरुषोऽन्नरसमय इति । केचिदन्नात्पुरुषः इति पुरुषशब्देनोक्तप्राकृतदेहः परामृश्यत इति । तन्नेति भावेन तद्व्याचष्टे- **य एष इति** । आकाशादिषु तन्नियामकतया व्यूढः आकाशादिशब्दवाच्यः । सम्यक् कार्श्यत्वस्रष्टृत्वादिगुणाधिकः । अजातस्य जनिः कीदृशीत्यत आह-

**यतो विभुरिति** । भगवतोऽन्नरसमयशब्दवाच्यत्वे निमित्तद्वयमाह- **अन्नस्येति** । अन्नस्यात्तृत्वादेः अन्नमयशरीरस्य च साररूपोऽयं केशवोऽतोऽन्नरसमय इत्यर्थः । अन्नरसमयस्य भगवतोऽवयवस्थितिस्थान- माह- **तस्येदमेव शिर इत्यादिना** । पुरुषस्य शिर आदिषु तस्य शिरआदिकं तिष्ठतीत्यर्थः- **पुच्छमिति** । लाङ्गूलत्वप्रतीतिनिवारणायोक्तं- **प्रतिष्ठा पादाविति** । श्लोकेनाप्यन्नमयस्य प्रजास्रष्टृत्वादिमहिमानं वदन्नाह- **तदपीति** । तत्र स्रष्टृत्वे एष वक्ष्यमाणश्लोकोऽपि भवतीत्यर्थः । प्रजास्रष्टृत्वाद्यन्नस्य वेत्तुः फलमाह- **सर्वं वै त इत्यादिना** । उक्तवेदना- प्रकारमेवाह- **अन्नं हीत्यादिना** । अन्नादिशब्दादन्नरसमयोऽन्यः प्रतीयते । तां प्रतीतिं वारयन्नाह- **अन्नेति** । अन्नकार्यत्वाच्छरीरेषु अन्नेषु । अन्नशब्दवाच्यत्वे भगवतो निमित्तद्वयमाह- **अद्यतेत्ति चेति** । तद्वाक्यं प्रसिद्धान्नपरत्वप्रतीतिवारणाय व्याचष्टे- **अत्तृत्वादिति** ।।२.३-४।।

**वादि-** क्रमेणोक्तलक्षणप्रपञ्चनार्थमुत्तरो ग्रन्थः । तत्र सर्वस्रष्टृत्वरूपं प्राथमिकं लक्षणं प्रपञ्चयति- **आत्मन इति** । अत्र सर्वत्रापि आकाशादिपदैराकाशादयोऽपि ग्राह्याः । तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः तेषामन्तर्नियामकभगवद्रूपाण्यपि ग्राह्याणि । य आकाशादीनां स्रष्टा आत्मनामको नारायणः स एष पुरुषः अन्नरसमयो वै । सारतया मुख्यतया यदन्नमन्नशब्दप्रवत्तिनिमित्तं अद्यतेऽत्ति च भूतानि इति श्रुत्या स्वयमेव वक्ष्यमाणं यद्भूतात्तृत्वं तन्मयस्तत्प्रचुरः । अनाद्यनन्तकालेष्वपि नियमेन स्वतन्त्रतया सकलभूतसंहर्तेत्यर्थः । भोग्यत्वरूपासारार्थत्याजनाय श्रुतिः स्वाभिमतमन्नं रसशब्देन विशिनष्टि । पुरुषशब्दस्य स्वाभिमत- देहरूपत्वं त्याजयितुं स वा इति प्रागुक्तात्मानं परामृशति । अतो देह एष अन्नरसमय इति परव्याख्यानं गम्भीरश्रुतेर्हृदयानभिज्ञता प्रयुक्तम् । नहि श्रुत्युक्तं भूतात्तृत्वं यया कयाचन विधया आकाशाद्वायुरित्यादिना

अत्रैव भूतजन्यतयोक्तदेहे सम्भवति । नहि ब्रह्मविदित्युक्तब्रह्मप्रपञ्चनाय प्रवृत्ता श्रुतिरब्रह्मभूतमसारं देहं स्तौतीति बुद्धिमता वक्तुं शक्यम् । अनेन तृतीयलक्षणं प्रपञ्चितं भवति । स्रष्टा ब्रह्मा संहर्ता शिव इति विप्रतिपन्नत्वेन विवादास्पदतवादिदं हि लक्षणद्वयमादौ प्रपञ्चितम् । लक्षणत्वेन विवादाभावात्क्रममुल्लङ्घ्य प्राणमयप्रकरणे तस्य प्रपञ्चनमिति ज्ञेयम् । तस्येदमेव शिरः सप्तसु प्रथमेति सूत्रादिदमस्मिन्परिदृश्यमाने शिरः मनुष्याणां शिरसि शिरस्तिष्ठतीति शिरः पदाऽवृत्त्या योजना । एवमुत्तरत्रापि योजना द्रष्टव्या । दक्षिणः पक्षः दक्षिणहस्तः । उत्तरः पक्षः उत्तरहस्तः । यस्मात् पूर्वाभिमुखस्योत्तरदिशिस्थो वामः । दक्षिणदिशिस्थस्तु दक्षिणः । तस्माद्दक्षिणोत्तपदयोर्दक्षवामकरपरत्वमुचितम् । देहपार्श्वद्वये विद्यमानत्वात् पक्षपदेन हस्तौ गृह्येते । आत्मा मध्यदेहः । प्रतितिष्ठत्यनेनेति प्रतिष्ठा पादः । पुच्छपदेनाप्यर्वाचीनाङ्गत्वात् पाद एवोच्यते । मनुष्याणां शिरस्यन्नमयाख्यपरमात्मनः शिरः । करयोः करौ । मध्ये मध्यम् । पादयोः पादौ । स एवाऽनन्दमयाख्यः परमात्माऽपादमस्तकं मानुषशरीरं व्याप्य तिष्ठतीति भावः । स एवान्नात् पूजनीयः इत्यत्र सः भूतस्रष्टा परमात्मा अन्नाज्जायमाने शरीरे पुनर्जातोऽभिव्यक्तः । अन्नस्य सारभूतः श्रेष्ठः । शरीरस्य सारभूतः अन्तर्नियन्तृत्वाच्छ्रेष्ठः । तस्मिंच्छरीरे स्थितोऽनिरुद्धाख्यो भगवानत्तृत्वादुपजीव्यत्वाच्चान्ननामा । उपलक्षणमेतत् । तच्चातृत्वं सर्वेभ्योऽपि प्राचुर्येणास्तीति कृत्वा देहान्तःस्थितभगवद्रूपमन्नमयशब्देना-प्युच्यते । अन्यथाऽन्नमयप्रपञ्चत्वासम्भवादिति ज्ञेयम् । उक्तरीत्याऽ-न्नान्तर्यामी यो भगवान् सोऽप्यन्नमयप्रकरणेऽन्नशब्दार्थतयोक्तात्तृत्व-व्युत्पत्त्यैवान्ननामा । नत्वन्नवत् । तर्ह्यत्तृत्वेनेति प्रसङ्गादुक्तम् । अन्नादन्नमयात् प्राचुर्यस्यापि भगवद्रूपत्वेन पार्थक्याभावसूचनाय श्लोके अन्नादित्येवोक्तम् । अन्यथा श्लोकश्लोकिनोः वैय्यधिकरण्यम् स्यात् ।

**श्री.भा-** स वा एष पुरुषोऽन्नरसमय इत्यत्र सवा एष इत्यनेन अन्नात्पुरुष इति प्रकृतः प्रसिद्धान्नविकारभूतदेह एव परामृश्यत इत्यसदित्यभिप्रेत्य स इत्यनेन 'आत्मन आकाशः सम्भूत' इत्यत्रात्म-शब्दोक्तविष्णुरेव परामृश्यत इति तावत्प्रमाणेन दर्शयति- **य एष इति** । गुणाधिकः अत एवात्मशब्दोक्त इति शेषः । यथोक्तमनुव्याख्याने । स इत्यात्मपदोद्दिष्ट इति । एष इत्यस्य जीवशरीरगत इत्यर्थमभिप्रेत्याह- **स एवेति** । अजातोऽपि जात इत्यनेन प्रादुर्भाव एव हरेर्जनिः न हि देहोत्पत्तिरिति दर्शयति । अत एवोत्तरत्र व्यज्यत इत्युक्तम् । इतरानधिष्ठानेन साक्षात्स्वयमेव जातः किमित्यतः अन्नात्पुरुष इत्यस्याभिप्रायमाह- **अन्नात्मनीति**। अन्नविकारभूत इत्यर्थः । यथोक्तं 'एष जीवशरीरग' इति । सुविवेकिभिरिति तृतीया षष्ठ्यर्थे । सा च कर्मणीति ज्ञातव्यम् । तथाच सवा एष इति न प्रसिद्धान्नविकार-पुरुषशब्दोक्तदेहपरामर्शः । किन्तु आकाशादिपुरुषान्तशब्दैर्ब्रह्मणोऽपि वाच्यत्वमंगीकृतम् । तत्तक्रियाप्रवर्तकत्वेन ब्रह्मणोऽपि प्रादुर्भावांगीकारात् । तथाच यस्मादात्मनः आकाशादिपुरुषान्तमुत्पन्नं स एषः पुरुषशब्दोक्त-जीवशरीरगोऽन्नरसमय इति परमात्मपरामर्शांगीकारात् । नच किमर्थमसौ परामृश्यत इति वाच्यम् । आत्मन आकाशादिकारणत्वमुक्त्वा तस्यैवान्नमयादिपञ्चरूपत्वप्रदर्शनाय पुनः प्रक्रान्तत्वान्नपरामर्शवैयर्थ्यमिति भावः । यथोक्तं भाष्ये । सवा एष इत्यन्यप्रारम्भादिति । उक्तं चानुव्याख्याने । 'एवं देहादिपर्यंतमागतं हरिमेव तु । परामृशति तस्यैव पञ्चरूपत्ववित्तय' इति । 'यदवादि सवा एष इत्यन्यपरामर्शो नान्नात्पुरुष इत्युक्तदेहपरामर्श' इति । तदयुक्तम् । आत्मनो दूरोक्तत्वात् देहस्य च समीपोक्तत्वात् समीपोक्तदेहपरित्यागेन दूरोक्तात्मपरामर्श ग्रहणे कारणाभावात् । अन्नात्पुरुष इति पुरुषशब्देन प्रकृतस्यैव देहस्य सवा एष पुरुष इति

पुरुषशब्देनोक्तेरात्मनश्च पुरुषशब्देन प्रकृतत्वाभावाच्च । एकेन शब्देन द्विरुक्तेन भेदश्रुतिं विना वस्तुद्वयोक्तिग्रहणायोगादित्याशंका परिहाराया-न्नरसमय इत्येतद्व्याचष्टे- **अन्नस्य सारभूतोऽयमिति** । सारेति रसशब्दार्थः। रसः सारो वरश्चेति शब्दा एकार्थवाचका इति वचनात् । अन्नस्यान्न-शब्दार्थभूतस्यात्तृत्वादेः सारभूतः श्रेष्ठा श्रेष्ठाद्याश्चेत्यर्थः । यथोक्तं महाभोक्ता महाभोग्य इत्यर्थोऽन्नमये भवेदिति । अन्नरसमय इत्यस्यैवार्थांतरमाह- **शरीरस्य सारभूत इति** । अन्नविकारस्य शरीरस्येत्यर्थः ।

अयं भावः । सवा एष पुरुष इति वाक्येन परमात्मैव परामृश्यते न देहः । न च तस्य दूरोक्तत्वविरोधः पुरुषशब्देनाप्रकृतत्वविरोधश्चेति वाच्यम् । आकाशादिपुरुषान्तशब्दैराकाशादिसारभूतस्य परमात्मनोऽपि प्रादुर्भावांगीकारेण समीपोक्तत्वात्पुरुषशब्देन प्रकृतत्वाच्च परमात्मपरामर्शोपपत्तेः । नच पुरुषपदेन देहपरमात्मनोरुभयोरप्युक्तत्वादुभयपरामर्शोऽयमस्त्विति वाच्यम् । पुरुषशब्दोक्तदेहसारभूतः परमात्मैव देहं विहायात्र परामृश्यते । कुत इति चेत् रसशब्देन विशेषणात् । यथाप्रकृतिं पुरुषं चेति पुरुषशब्देन जीवेश्वरयोर्द्वयोः प्रकृतत्वेऽपि दुःखानुभवितृत्वविशेषणेन पुरुषः प्रकृतिस्थो हीति वाक्ये जीव एवोच्यते नेश्वरः एवमन्नात्पुरुष इत्युभयोः प्रकृतत्वेऽपि सवा एष पुरुषोन्नरसमय इति सारान्नमयत्वविशेषणेन परमात्मपरामर्शे वायमिति ज्ञायते । उक्तं च बहूनां सह निर्देशे एकयाभिधयैव तु । तयैवाभिधया तेषां परामृश्यैकमुच्यत इति । एतच्च सविस्तरमुक्तमुत्तर-प्रस्थाने ब्रह्मशब्दोदिते तस्मिन्नात्मशब्दं प्रयुज्य च इत्यादिना । अन्नमयं प्रत्युदाहृतश्लोके अन्नाद्वै प्रजाः प्रजायन्त इत्यादावन्नशब्देन प्रसिद्धान्न-मेवोच्यत इत्यन्यथाप्रतीतिनिरासायान्नशब्दार्थमाह- **अन्ननामा चेति** । अन्नाभेदेन तच्छब्दवाच्यत्वपरिहारायान्नसंस्थ इत्युक्तम् । अनेनान्नशब्दस्य हरौ रूढिरुक्ता भवति । अर्थांतरमाह- **शरीरेष्विति** । अन्नविकारभूतेषु

शरीरेष्वित्यर्थः । तथाचान्नादित्यस्यान्नविकारशरीरसंस्थाद्धरेरित्यर्थः । उक्तो भवति । प्रसिद्धान्नपरत्वे येऽन्नं ब्रह्मोपासते इत्यादिनोक्तब्रह्मशब्दाद्ययोग इति भावः । किञ्च प्रसिद्धान्ने अद्यतेऽत्ति चेति वाक्योक्तान्नशब्द-निर्वचनलभ्यार्थायोग इति भावः । भूताद्यत्वस्य कथञ्चित्सम्भवेऽपि भूतात्तृत्वस्य कथमप्यसम्भव इति भावेनात्ति च भूतानीत्यस्यार्थमाह- **अत्तृत्वादिति** ।

ननु परमात्मनोऽपि कथमन्नशब्दवाच्यत्वं भूतात्तृत्वस्य कथञ्चित्तत्र सम्भवेऽपि भूताद्यत्वस्य कथमप्यसम्भवादित्यतो भूतैरद्यत इत्यस्य तात्पर्यमाह- **उपजीव्यश्चेति** । यथोक्तं भाष्ये । उपजीव्यत्वमेवाद्यत्वमिति । उक्तं चानुव्याख्याने । भोग्यत्वमत्र चाद्यत्वमुपजीव्यतया हरेरिति ।।२.३-४।।

**श्री.खं-** इतः परं मन्त्रवर्णोक्तसत्यत्वादिविस्तृतिरेव तस्माद्वा एतस्मादित्यादिनोत्तरग्रन्थेन क्रियते । यथोक्तमनुव्याख्याने । अतो हि मन्त्रवर्णोक्तविस्तृतिस्तु समस्तया । क्रियते परया यस्मादिति । तत्र सृष्टिप्रकरणे नान्नमयप्राणमयप्रकरणाभ्यां च सत्यत्वं विव्रीयते । यथाहि । सद्भावे साधुभावे च सदित्येतत्प्रयुज्यत इति वचनात्सद्भावशब्देन प्रजननं सूचितमिति गीताभाष्योक्तेश्च सत् सद्भावं प्रजननं यापयति प्रापयतीति सत्यम् । तथासत् सत्त्वं जीवनं विशीर्णतापरपर्यायं संहारं च यापयतीति सत्यम् । अन्नशब्दार्थोऽप्ययमेव । जीवनप्रदातृतयोपजीव्यत्वाख्याद्यत्वात् विशीर्णताप्रदातृतया संहर्तुत्वाख्यात्तृत्वात् तयोरेवान्नशब्दार्थत्वात् । तथा प्राणं देवा अनुप्राणन्तीत्यादिना प्राणमयप्रकरणेन गतिजीवनप्रदातृत्व-योरुक्तत्वात् । सदिति धात्वर्थोऽपि गतिः । अस्ति देवदत्त इत्युक्ते जीवतीति प्रतीतेर्जीवनं चासधात्वर्थोऽतस्तत्प्रदातृत्वस्यापि सत्यशब्दार्थ-त्वात्सत्यत्वं प्राणत्वं चैकमेव । तथा सामान्यविशेषज्ञानत्वरूपं ज्ञानत्वलक्षणं मनोमयविज्ञानमयप्रकरणाभ्यां विव्रियते । मनुधातो-

रवबोधार्थत्वात् । देशतः कालतः आनन्दादिगुणतश्च परिच्छेदशून्यत्व-रूपमनन्तत्वं चानन्दमयप्रकरणेन नावशिष्टवाक्यैश्च विव्रियते । उक्तं च सूत्रकृता । मान्त्रवर्णिकमेव च गीयत इति। उक्तं च भाष्ये । ब्रह्मविदाप्नोति परमिति सूचयित्वा सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रवर्णे लक्षितं परमेव ब्रह्म शब्दानुसन्धानाद्गीयते इति । उक्तं चैतत्सर्वमनुव्याख्यानेऽपि

ब्रह्मवित्परमाप्नोतीति यत्प्रथमसूचितम् ।
तदेषमन्त्रवर्णेन सत्यं ज्ञानमनन्तवत् ।।

लक्षितं तत्र सत्यत्वं सृष्ट्यान्नप्राणयोरपि ।
उक्तं ज्ञानं तु मनसा विज्ञानेनाप्युदीरितम् ।।

अनन्तत्वं तथानन्दमयवाचाप्युदाहृतम् ।
सद्भावं यापयेद्यस्मात्सत्यं तत्तेन कथ्यते ।।

इति सृष्टिरिह प्रोक्ता जगत्सद्भावयापकम् ।
ब्रह्मेति स्थापनायैव सत्त्वं जीवनमेव च ।।

विशीर्णता च सत्त्वं स्यात्सन्नमित्याहुरेव यत् ।
अतोऽद्यतात्तृतान्नत्वं सत्यशब्दार्थ एव हि ।।

प्राणं देवा अनुप्राणन्ति मनुष्याः पशवश्च ये ।
आयुः प्राणो हि भूतानामिति यद्गतिजीवने ।।

उक्ते सदिति धावर्थो गतिश्चातो हि सत्यता ।
प्राणत्वमवबोधार्थो मनुधातुः प्रकीर्तितः ।।

नाल्पे सुखमिति प्रोक्त्यैवानन्दमयतोऽक्तितः ।
अनन्तत्वं सुनिर्णीतं पूर्णानन्दो हि नाल्पक इति ।।

अत्रानुवादबलादात्मत्वमादौ विधेयम् । तस्मान्मोक्षजनकीभूतज्ञान-विषयत्वेन ब्रह्मशब्दोक्तादेतस्मान्मन्त्रवर्णे लक्षितादात्मनः परमात्मनः आकाशः सम्भूत इत्यादि। अत्राकाशादिपुरुषान्तशब्दैर्भूतं भूताभिमानी भूताभिमानिनो देहः तदन्तर्नियामको हरिश्च इति चत्वार उच्यन्ते । तत्र मुख्यतो हरिरेवाकाशादिशब्दवाच्य इति ज्ञातव्यम् । तत्र भूतस्य तदभिमानिशरीरस्य च साक्षादुद्भवः अभिमानिनस्त्वभिमानोत्पत्तिः । हरेस्तु तदुत्पत्त्यादिक्रियाप्रवर्तकत्वेनाकाशादिषु प्रादुर्भाव एवेति विवेकः । यथोक्तमनुव्याख्याने ।

**ब्रह्मशब्दोदिते तस्मिन्नात्मशब्दं प्रयुज्य च ।**
**तस्मादाकाशसृष्टिं च प्रोवाचात्र चतुर्विधाम् ।।**

**भूतं भूताभिमानी च तद्देहोन्तर्नियामकः ।**
**हरिश्चाकाशशब्दोक्तो मुख्यतो हरिरेव च ।।**

**क्रियाप्रवर्तकत्वेन प्रादुर्भावो हरेर्जनिः ।**
**आकाशादिषु नान्यास्ति ह्यभिमानोऽभिमानिनः ।**
**अभिमानिशरीरस्य साक्षाद्भूतस्य चोद्भव इति ।।**

आसमन्तात्काशनादाकाशः । बलज्ञानस्वरूपत्वाद्वायुः स्वतो न गच्छतीत्यगं तन्नयतीत्यग्निः । आपालनादापः बहुरूपत्वाद्बहुवचनम् । एवमुत्तरत्रापि । प्रथितत्वात्पृथिवी । उष्टानां शरीरे जाठराग्निना दह्यमानानामाश्रयत्वात् ओषधयः । अन्नसंस्थत्वादन्नविकारशरीरसंस्थत्वाद्वा अत्तृत्वादुपजीव्यतयाऽद्यत्वाद्वा अन्नम् । पुरि शेत इति पुरुषः । यथोक्तमनुव्याख्याने । आसमंतात्काशते यदाकाशो मुख्यतो हरिः । बलज्ञानस्वरूपत्वाद्वायुरग्निरगं नयन् । आप आपालनाच्चैव पृथिवीप्रथितो यतः । उष्टानामाश्रयत्वेन स एवौषधिनामकः । ओषधीषु स्थितो विष्णुः क्षुधितैराश्रितो भवेत् । पुरिशेते यतः सोऽथपुरुषश्च निगद्यते इति ।।२.३।।

एवं पुरुषशब्दोक्तदेहपर्यंतमागतस्य हरेरन्नमयादिपञ्चरूपत्वज्ञापनाय पुनः प्रारम्भं करोति- **स वा इति** । सः भूतस्रष्टतया आत्मपदोद्दिष्टः । एषः जीवशरीरगः पुरुषः परमात्मा अन्नरसमयः सारान्नमयः अन्नशब्दार्थभूताद्य-त्वात्तृत्वप्रचुरः । प्रचुरात्ता प्रचुरोपजीव्यश्चेत्यर्थः । अयं चान्नमयो अनिरुद्धः । अस्य निराकारता परिहारायान्नमयनामकानिरुद्धस्योपास्त्यर्थं अवयवसंस्थितिप्रकारमाह- **तस्येति** । तस्य जीवशरीरगतस्यान्नमयनाम-कानिरुद्धस्य शिरः इदं अस्मिन् जीवशरीरस्य शिरसि वर्तते । दक्षिणः पक्षः दक्षिणबाहुः । अयमेतच्छरीरस्य दक्षिणबाहौ तिष्ठति। उत्तरः पक्षः सव्यबाहुः । अयमेतच्छरीरस्य सव्यबाहौ वर्तते । आत्मा मध्यदेहः अयमेतच्छरीरस्य मध्यदेहेऽस्ति । पुच्छम् । लांगूलत्वभ्रान्तिवारणाय तस्यैवार्थमाह- **प्रतिष्ठेति** । प्रतितिष्ठत्याभ्यामिति प्रतिष्ठा पादौ । इदं एतच्छरीरस्य पादयोस्तिष्ठती-त्यर्थः । एवमुत्तरत्रापि पुच्छं प्रतिष्ठेत्यस्यार्थो द्रष्टव्यः ।।२.४।।

**वरद-** तत्र सृष्टिप्रदत्वं लक्षणो यो ब्रह्मलक्षणभूतः सत्यशब्दार्थः स निरूप्यते आत्मन आकाशस्सम्भूत इत्यादिना । आकाशादिभूतानां सृष्टिकर्तृत्वेनोक्तः इत्युक्तम् । आत्मशब्दोक्तत्वात् गुणाधिकत्वम् । अजातस्य कथं अन्नात् जन्म इत्यत आह- **यत इति** । अन्नात्मनि अन्नविकार-स्वरूपे । यद्यपि हरेः साक्षादुत्पत्तिर्नास्ति तथापि लौकिकान्नादन्नोपादानके शरीरे अभिव्यज्यमानत्वात् जात इति व्यवह्रियत इत्यर्थः । प्रसिद्धान्नादभिव्यक्तस्य विष्णोः स्वरूपं निरूप्यते स वा एष पुरुषोऽन्नरसमय इति । तद्व्याचष्टे- **अन्नस्येति** । अत्र अन्नशब्देन उपजीव्यत्वादिकमुच्यते । तत्सारस्वरूपत्वाद् अन्नरसमय इति । अन्नरसमय इत्यस्यार्थान्तरं चाह- **शरीरस्येति** । शरीरमेवान्नविकारत्वात् अन्नमित्युच्यते । तस्यान्नस्य शरीरस्य धारकत्वेन रसभूतस्सारभूतो यतोऽतोऽपि अन्नरसमयो हरिरित्यर्थः । सत्यशब्देन यो जगज्जीवनजगत्संहर्तृत्वलक्षणोऽर्थः सूत्रितः

स प्रपञ्च्यते तदप्येष **श्लोको** भवति इत्याद्यन्नमयमाहात्म्यप्रतिपादकेन वाक्यजातेन । तत्र पूर्वं विष्णोरन्नरसमयशब्देन प्रस्तुतत्वात् अत्र च तस्याभावात् । अन्नाद्वै प्रजाः प्रजायन्त इत्यत्र अन्नशब्दार्थो हरेरन्य एव इत्यन्थाप्रतीतिनिरासाय अत्रापि हरिरेवान्नशब्दार्थ इत्याह- **अन्ननामेति** । शरीरेषु च संस्थित इत्यनेन अन्नशब्दवाच्यत्वे निमित्तान्तरमुक्तम् । शरीरं तावदन्नविकारत्वादन्नम् । तत्स्थितत्वादपि हरिरन्नमुच्यत इत्यर्थः । अद्यतेऽत्ति च भूतानि इत्यत्र यद् अन्नशब्दप्रवृत्तिनिमित्तमुच्यते तद्योग्यादपि विष्णुरन्नमित्याह- **अत्तृत्वादित्यादिना** ।।२.३-४।।

**काशी-** एतन्मन्त्रवर्णविवरणार्थमुत्तरप्रकरणजातम् । 'ॐ मान्त्रवर्णिकमेव च गीयत ॐ' इति सूत्रात् स्पष्टं चानुव्याख्याने 'अतो हि मन्त्रो वर्णोक्तविस्तृतिस्तु समस्तया । क्रियते परया यस्मादितरोऽत्र न कथ्यत'।। इति तत्र सत्यशब्दोक्तं स्रष्टृत्वमादौ सृष्टिप्रकरणे, संहर्तृत्वजीवनप्रदत्वे चान्नमयप्रकरणे, चेष्टकत्वं प्राणमयप्रकरणे, ज्ञानशब्दोक्तं सामान्यतः सर्वज्ञत्वं मनोमयप्रकरणे, विशेषतः सर्वज्ञत्वं विज्ञानमयप्रकरणे, अनन्तत्वं आनन्दमयप्रकरणे विव्रियते । अत्राकाशादिपुरुषान्तशब्दा भूतभौतिकजडमात्रपराः स वा एष पुरुष इत्यनेन च पुरुषशब्दप्रकृतशरीरं परामृश्य तस्यान्नरसविकारत्वं प्रत्यक्षसिद्धशिरः पाण्यादिमत्वं चोच्यते । इत्येवमन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयपञ्चकोशा ब्रह्मपुच्छं प्रतिष्ठा इत्युक्तसर्वान्तरब्रह्मावगत्यर्थतया प्रतिपाद्यन्त इत्यपव्याख्यानं प्रत्याख्यातुं प्रमाणेनैव व्याचष्टे- **य एष इति** । यो भूतस्रष्टा आकाशादि-स्रष्टृत्वेनोक्तः गुणाधिको गुणपूर्णत्वेनात्मशब्दोक्तः समन्तात्काशमानत्वादि-गुणाधिक्ययोगेनाकाशादिशब्दोक्तश्च स भगवान्विष्णुरेव शरीरे स्थित एष पुरुष इत्यध्याहारेणान्वयः ।

एतेन तस्माद्ब्रह्मविदाप्नोतीति सूत्रवाक्योक्तादेतस्मान्मन्त्रवर्णलक्षितादात्मनो जीवस्वरूपाद्ब्रह्मण आकाशः सम्भूत इति व्याख्यानं निरस्तम् । सोऽश्नुते सर्वान्कामान्सह ब्रह्मणेति पूर्ववाक्ये जीवब्रह्मणोः भेदोक्त्या तदैक्योक्तेर्व्याहतत्वात् तदपव्याख्यानं तु निरसिष्यते । अयमाशयः स वा एष इत्यनेन नान्नविकारदेहः परामृश्यते किन्तु आत्मन आकाशः सम्भूत इति भूतस्य स्रष्टृत्वेनात्मशब्दप्रकृतो विष्णुरेव न च समीपस्थपुरुषशब्द-प्रकृतदेहपरामर्शसम्भवे दूरोक्तात्मपरामर्शासम्भव इति वाच्यम् । पुरुषपदेनापि देहस्थपरमात्मरूपस्योक्तत्वात् एत एव स एष इति पदद्वयमर्थवत् आद्यस्यात्मशब्दोक्तपरत्वात् द्वितीयस्य च पुरुषशब्दोक्तपरत्वात् । यथोक्तमनुव्याख्याने स इत्यात्मपदोदिष्ट एष जीवशरीरग इति ।

नन्वेवमन्नजातत्वोक्तिविरोध इति चेन्न अन्नस्थरूपाभिव्यक्तत्वस्य विवक्षितत्वात् । आकाशादिपुरुषान्तशब्दानामाकाशादिस्थ रूपपरत्वेन पूर्वपूर्वरूपाभिव्यक्तत्वस्योत्तरोत्तररूपेषु सम्भवात् । न चैवं भूतादिसृष्ट्यसिद्धिः 'भूतं भूताभिमानी च तद्देहोन्तर्नियामकः । हरिश्चाकाशशब्दोक्तो मुख्यतो हरिरेव' चेत्युक्तरीत्या तत्सिद्धेः न चानेकार्थत्वं दोषः । मुख्यार्थस्य हरेरेकत्वादित्याशयेनाह- **यत इति** । यतो विभुरजातोऽपि अन्नादन्नस्थ-रूपदन्नात्मन्यन्नविकारे शरीरे पुनः सुविवेकिभिर्ज्ञानिभिर्व्यज्यते प्रत्यक्षीक्रियते अतोऽसौ पुनरन्नाज्जात इत्युच्यत इति सम्बन्धः । हि शब्देन प्रत्यक्षत्वं हरेर्जन्मेति प्रमाणप्रसिद्धिरुक्ता पुनः शब्देनाकाशादिष्वपि रूपविशेषा-भिव्यक्तिर्विवक्षितेति सूचयति । नन्वन्नात्पुरुष इत्यादावन्नादिशब्दैर्विष्णु-रुच्यत इत्यसत् । तत्र तच्छब्दवृत्त्यभावादित्यत आह- **अन्नस्येति** । अन्नस्य प्रसिद्धान्नस्य शरीरस्य च शब्दादाकाशादीनां च सारभूतः सत्तादिप्रदः अन्नसंस्थः शरीरेष्विति बहुवचनमाद्यर्थे शरीराकाशादिषु संस्थितश्च अन्ननामा च शब्दात्पुरुषाकाशादिनामा चेत्यर्थः ।

अत्रान्ननामत्वमन्नशरीरस्थरूपयोद्वर्योर्विवक्षितम् । तथा च विष्णोः प्रसिद्धान्नत्वाद्यभावेऽपि तत्स्वामित्वात् तच्छब्दवाच्यत्वं उक्तं चानुव्याख्याने स्वान्तत्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणं स्वातन्त्र्यं तत्र मुख्यं स्यादिति । न चैवं सर्वरूपेष्वप्यन्नादिशब्दप्रयोगप्रसङ्गः तत्तदन्तर्यामि रूपेणैव तत्तसत्तादिदानेन तत्रैव तच्छब्दप्रयोगादिति भावः । एवं विष्णौ सर्वशब्दसाधारण्येन वृत्तिं प्रदर्श्यान्नशब्दस्य विष्णुवाचकत्वाभावे 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत' इति । वक्ष्यमाणनिर्वचनविरोध इत्याशयेन तद्दर्शयति- **अत्तृत्वादिति** । अत्तीत्यन्नं कर्तरि क्तः भूतशब्दोक्तसर्वलोकानां योग्यतया सम्बन्धः । अद्यत इति चान्नं कर्मणि क्तः उपजीव्यत्वमेवाद्यत्वं अत्तृत्वानुरोधेन विष्णुग्रहणस्यावश्यकत्वे भक्ष्यत्वार्थविवक्षानुपपत्तेरिति भावः । अत एव श्रुतावद्यत इति कर्मव्युत्पत्तिरादावुक्ता अत्र कर्तृव्युत्पत्तिः आदौ उक्ता श्रुतौ चान्नस्थरूपे कर्मव्युत्पत्तिः पुरुषस्थरूपे कर्तृव्युत्पत्तिरभिप्रेता । अत एवान्नात्पुरुष इति पूर्ववाक्ये पूर्वप्रकृतान्नस्थरूपापेक्षया कर्मव्युत्पत्तिरादौ दर्शिता । एवमस्मिन्नन्नमयप्रकरणे पुरुषस्थरूपस्यैव प्राधान्येन प्रतिपाद्यत्वात् तत्रैवान्नशब्दप्रयोगबाहुल्याच्च स्मृतौ कर्तृव्युत्पत्तेरादावुक्तिरित्यवधेयम् ।

**काशी.खं-** ततश्च तस्माद्वा इत्यादेरयमक्षरार्थः । सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रवर्णोक्तलक्षणविवरणार्थान्युत्तरप्रकरणानि विवरणं चाधिकारिणं विशेषणोपासनार्थं तत्रादौ सत्यशब्देन सत्सद्भावं प्रजननं यापयतीति व्युत्पत्या यदि यथाकथञ्चिदुत्पादकत्वं विवक्षितम् । तदा जीवव्यतिव्याप्ति-रित्याशङ्कापनोदाय स्रष्टृत्वं विव्रियते । तस्माद्ब्रह्म विदाप्नोति परमित्युक्तात् एतस्मात्सह ब्रह्मणेति जीवभिन्नतयोक्तादात्मनः परब्रह्मणः सकाशात् आकाशः भूताकाशस्तदभिमानी तद्देहस्तदन्तर्यामिभगवद्रूपविशेषश्च सम्भूतः । अत्र सम्भूतशब्देन भूततदभिमानिदेहयोः स्वरूपलाभः अभिमानिनस्तत्राभिमानः अन्तर्यामिणश्च तत्तत्क्रियाप्रवर्तकत्वेनाभिव्यक्तिरुच्यते एवमुत्तरत्रापि । यथोक्तमनुव्याख्याने-

**भूतं भूताभिमानी च तद्देहान्तर्नियामकः ।**
**स हरिश्चाकाशशब्दोक्तो मुख्यतो हरिरेव च ।।**

**आसमन्तात् काशते यदाकाशो मुख्यतो हरिः ।**
**बलज्ञानस्वरूपत्वाद्वायुरग्निरगं नयन् ।।**

**आप आपलानाच्चैव पृथिवी प्रथितो यतः ।**
**उष्टानामाश्रयत्वेन स एवौषधिनामकः ।**
**औषधीषु स्थितो विष्णुः क्षुधितैराश्रितो भवेत् ।।**

**पुरि शेते यतः सोऽथ पुरुषश्चेति गीयते ।**
**क्रियाप्रवर्तकत्वेन प्रादुर्भावो हरेर्जनिः' ।**
**आकाशादिषु नान्यास्ति ह्यभिमानोऽभिमानिनः ।।**

अभिमानिशरीरस्य साक्षाद्भूतस्य चोद्भव । इति वै शब्दः श्रुत्यन्तर-प्रसिध्यर्थः । आकाशाद्वायुरित्यादौ जड़ं प्रति जडांशानामुपादानत्वं अभिमानिनं प्रति विशिष्टाभिमानिनो निमित्तत्वं परमात्मानश्च तत्तच्छक्ति-प्रेरकत्वेन मुख्यकारणत्वं कार्यगतक्रियाप्रवर्तकत्वेन रूपान्तराविर्भाव-श्चेत्यादिकमवगन्तव्यम् । तत्र परमात्मरूपेष्वाकाशादिशब्दानां महायोग-विद्वद्रूढिभ्यां प्रवृत्तिः । अन्यत्र यथा सम्भवमल्पयोगोऽज्ञरूढिश्चेत्य-वगन्तव्यम् । तथाहि आसमन्तात् काशते प्रकाशत इत्याकाशः व शब्दो बलवाची गत्यर्थत्वेनावगत्यर्थादयतेरुप्रत्ययः वश्चासावयुश्चेति वायुः । स्वतो न गच्छति न प्रवर्तत इत्यगम् अस्वतन्त्रं जगत् । तन्नयति प्रवर्तयतीत्यग्निः । आसमन्तात्पालयतीत्यापः शब्दस्वाभाव्याद्बहुवचनं प्रथत इति पृथिवीस्त्रीलिङ्गं च स्त्रीशक्तिप्रेरकत्वात् कचित् स्त्रीरूपत्वाच्च उषदाहे ओषा जठराग्निदग्धा धीयन्ते आस्वित्योषधयः क्षुधितैः क्षुत्छान्त्यर्थ-मुपादीयन्ते इति यावत् । बहुरूपत्वाच्च बहुवचनम् । अद्यते उपजीव्यत इत्यन्नम् । पुरि शरीरे शेते तिष्ठतीति पुरुषः । अत्राकाशादिशब्दैः पञ्चभिः

अत्रान्ननामत्वमन्नशरीरस्थरूपयोद्वयोर्विवक्षितम् । तथा च विष्णोः प्रसिद्धान्नत्वाद्यभावेऽपि तत्स्वामित्वात् तच्छब्दवाच्यत्वं उक्तं चानुव्याख्याने स्वान्तत्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणं स्वातन्त्र्यं तत्र मुख्यं स्यादिति । न चैवं सर्वरूपेष्वप्यन्नादिशब्दप्रयोगप्रसङ्गः तत्तदन्तर्यामि रूपेणैव तत्तसत्तादिदानेन तत्रैव तच्छब्दप्रयोगादिति भावः । एवं विष्णौ सर्वशब्दसाधारण्येन वृत्तिं प्रदर्श्यान्नशब्दस्य विष्णुवाचकत्वाभावे 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत' इति । वक्ष्यमाणनिर्वचनविरोध इत्याशयेन तद्दर्शयति- **अत्तृत्वादिति** । अत्तीत्यन्नं कर्तरि क्तः भूतशब्दोक्तसर्वलोकानां योग्यतया सम्बन्धः । अद्यत इति चान्नं कर्मणि क्तः उपजीव्यत्वमेवाद्यत्वं अत्तृत्वानुरोधेन विष्णुग्रहणस्यावश्यकत्वे भक्ष्यत्वार्थविवक्षानुपपत्तेरिति भावः । अत एव श्रुतावद्यत इति कर्मव्युत्पत्तिरादावुक्ता अत्र कर्तृव्युत्पत्तिः आदौ उक्ता श्रुतौ चान्नस्थरूपे कर्मव्युत्पत्तिः पुरुषस्थरूपे कर्तृव्युत्पत्तिरभिप्रेता । अत एवान्नात्पुरुष इति पूर्ववाक्ये पूर्वप्रकृतान्नस्थरूपापेक्षया कर्मव्युत्पत्तिरादौ दर्शिता । एवमस्मिन्नन्नमयप्रकरणे पुरुषस्थरूपस्यैव प्राधान्येन प्रतिपाद्यत्वात् तत्रैवान्नशब्दप्रयोगबाहुल्याच्च स्मृतौ कर्तृव्युत्पत्तेरादावुक्तिरित्यवधेयम् ।

**काशी.खं-** ततश्च तस्माद्वा इत्यादेरयमक्षरार्थः । सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रवर्णोक्तलक्षणविवरणार्थान्युत्तरप्रकरणानि विवरणं चाधिकारिणं विशेषणोपासनार्थं तत्रादौ सत्यशब्देन सत्सद्भावं प्रजननं यापयतीति व्युत्पत्या यदि यथाकथञ्चिदुत्पादकत्वं विवक्षितम् । तदा जीवेष्वतिव्याप्ति-रित्याशङ्कापनोदाय स्रष्टृत्वं विव्रियते । तस्माद्ब्रह्म विदाप्नोति परमित्युक्तात् एतस्मात्सह ब्रह्मणेति जीवभिन्नतयोक्तादात्मनः परब्रह्मणः सकाशात् आकाशः भूताकाशस्तदभिमानी तद्देहस्तदन्तर्यामिभगवद्रूपविशेषश्च सम्भूतः । अत्र सम्भूतशब्देन भूततदभिमानिदेहयोः स्वरूपलाभः अभिमानिनस्तत्राभिमानः अन्तर्यामिणश्च तत्तक्रियाप्रवर्तकत्वेनाभिव्यक्तिरुच्यते एवमुत्तरत्रापि । यथोक्तमनुव्याख्याने-

**भूतं भूताभिमानी च तद्देहान्तर्नियामकः ।**
**स हरिश्चाकाशशब्दोक्तो मुख्यतो हरिरेव च ।।**

**आसमन्तात् काशते यदाकाशो मुख्यतो हरिः ।**
**वलज्ञानस्वरूपत्वाद्वायुरग्निरगं नयन् ।।**

**आप आपलानाच्चैव पृथिवी प्रथितो यतः ।**
**उष्टानामाश्रयत्वेन स एवौषधिनामकः ।**
**औषधीषु स्थितो विष्णुः क्षुधितैराश्रितो भवेत् ।।**

**पुरि शेते यतः सोऽथ पुरुषश्चेति गीयते ।**
**क्रियाप्रवर्तकत्वेन प्रादुर्भावो हरेर्जनिः' ।**
**आकाशादिषु नान्यास्ति ह्यभिमानोऽभिमानिनः ।।**

अभिमानिशरीरस्य साक्षाद्भूतस्य चोद्भव । इति वै शब्दः श्रुत्यन्तर-प्रसिध्यर्थः । आकाशाद्वायुरित्यादौ जडं प्रति जडांशानामुपादानत्वं अभिमानिनं प्रति विशिष्टाभिमानिनो निमित्तत्वं परमात्मानश्च तत्तच्छक्ति-प्रेरकत्वेन मुख्यकारणत्वं कार्यगतक्रियाप्रवर्तकत्वेन रूपान्तरार्विभाव-श्चेत्यादिकमवगन्तव्यम् । तत्र परमात्मरूपेष्वाकाशादिशब्दानां महायोग-विद्वद्रूढिभ्यां प्रवृत्तिः । अन्यत्र यथा सम्भवमल्पयोगोऽज्ञरूढिश्चेत्य-वगन्तव्यम् । तथाहि आसमन्तात् काशते प्रकाशत इत्याकाशः व शब्दो बलवाची गत्यर्थत्वेनावगत्यर्थादयतेरुप्रत्ययः वश्चासावयुश्चेति वायुः । स्वतो न गच्छति न प्रवर्तत इत्यगम् अस्वतन्त्रं जगत् । तन्नयति प्रवर्तयतीत्यग्निः । आसमन्तात्पालयतीत्यापः शब्दस्वाभाव्याद्बहुवचनं प्रथत इति पृथिवीस्त्रीलिङ्गं च स्त्रीशक्तिप्रेरकत्वात् क्वचित् स्त्रीरूपत्वाच्च उषदाहे ओषा जठराग्निदग्धा धीयन्ते आस्वित्योषधयः क्षुधितैः क्षुत्छान्त्यर्थ-मुपादीयन्ते इति यावत् । बहुरूपत्वाच्च बहुवचनम् । अद्यते उपजीव्यत इत्यन्नम् । पुरि शरीरे शेते तिष्ठतीति पुरुषः । अत्राकाशादिशब्दैः पञ्चभिः

प्रत्येकं चत्वार उच्यन्ते । औषध्यादिशब्दैस्त्रिभिस्त्रयः ओषध्यादीनां देहत्वादिति केचित् । तत्रापि तद्देवता तद्देहतदन्तर्यामिणश्चत्वार इत्यन्ये ॥२.३॥

अथ सत्यशब्दोक्तजीवनप्रदत्वादिविवरणार्थमन्नमयादिभगवद्रूपोपासन-सिध्यर्थं च प्रकरणान्तरमारभते- **स वा इति** । स आत्मपदप्रकृतः एष आकाशादिपुरुषान्तशब्दैस्तत्तदन्तर्यामित्वेन प्रकृतः पुरुषोऽन्नविकार-देहस्थोऽन्नरसमयः मयानां प्रचुराणामन्नरसो मुख्यात्ता मुख्योपजीव्यश्च मयट् प्रत्ययपक्षे प्राचुर्येण मुख्यात्ता इत्यादिस्वातन्त्र्येण सर्वात्तृत्व-सर्वोपजीव्यत्ववाननिरुद्ध इति यावत् । उपास्य इति शेषः अत्रान्नात्पुरुष इति पूर्ववाक्ये देहादेः प्रकृतत्वेऽपि रसशब्देन विशेषणात्सारान्नमयस्य परमात्मन एव परामर्श इति ज्ञातव्यम् । अयमनिरुद्धः किमाकारः किं परिमाणः कीदृशश्चोपास्य इत्याकाङ्क्षायामाह- **तस्येति** । अन्नमयशब्दोक्त-स्यानिरुद्धस्य शिर इदं दृश्यमानशिरःस्थ एव शब्दः प्रमितत्वार्थ उत्तरत्रापि सम्बध्यते । दक्षिणः पक्षो बाहुरयं दृश्यमानदक्षिणबाहुस्थ एव उत्तरो वामबाहुरयं दृश्यमानवामबाहुस्थ एव । आत्मा मध्यदेहे दृश्यमान-मध्यदेहस्थ एव । पुच्छं अग्रभागः प्रतितिष्ठत्यनयेति प्रतिष्ठा पादद्वयमिति यावत् । इदं दृश्यमानपादस्थमेवेत्यर्थः । तथा च पुरुषाकारस्तत्परिमाण-स्तदवयवस्थावयवश्चायमुपास्य इति भावः । नच पक्षपुच्छश्रवणादयं पक्षिरूप इति युक्तम् । उत्तरत्र पुरुषविधत्वश्रवणात्, तदनुरोधेन पक्षादिशब्दस्य बाह्वाद्यर्थत्वोपपत्तेः । पुच्छशब्दस्य प्रतिष्ठाशब्देन पादपरतया स्वयमेव व्याख्यातत्वाच्च ॥ २.३-४ ॥

**रा.खं-** सत्यमित्यत्र सच्छब्दः सद्भावे साधुभावे चेति गीतोक्तेः सद्भावशब्देन प्रजननं सूचितम् इति गीताभाष्योक्तेश्च प्रजननरूपसद्भाव-वाचीत्युपेत्य सद्भावं जन्म यापयतीति । यतिरन्तर्णीतण्यर्थो धातोऽनुपसर्गे

कः इति भसंज्ञायाम् अपदत्वेन जश्त्वाभावे सत्यमिति रूपमुपेत्य जगत्स्रष्टृत्वं सत्यपदेनोच्यत इत्ययुक्तं पञ्चमहाभूतानामेव जगत्कारण-त्वादित्यतस्तेषामपि ब्रह्मैव कारणं, तदन्तर्गतं तत्सत्तादिप्रदं चेति भावेन सत्यपदोक्तं जगत्कारणत्वं विवृणोति- **तस्मादित्यादिना** ।।

तस्माद् ब्रह्मविदाप्नोति परम् इति परब्रह्मप्राप्तिकामेन ज्ञातव्य-तयोक्तादेतस्मात् सत्यत्वादिना लक्षिताद् आत्मन आकाशः सम्भूत जातः । अत्र प्रकरणे आकाशादिशब्दैः भूतं भूताभिमानी तद्देहस्तत्त्रितायान्तर्गतो हरिश्चेति चत्वारो ग्राह्याः । हरेस्तत्त्रितयान्तर्गतिश्च तत्सत्ताशक्त्यादि-प्रदत्वेनेति ज्ञेयम् । सम्भूतपदोक्तं जन्म च यथासम्भवं हरेरभिव्यक्ति-रभिमानिनोऽभिमानिनः तद्देहस्य भूतस्य च परिणाम इति ज्ञेयम् । आकाशाच्चतुर्विधाच्चतुर्विधो वायुः सम्भूतः । चतुर्विधाद्वायोश्चतुर्विधोऽग्निः सम्भूतः । चतुर्विधादग्नेः चतुर्विधा आपः सम्भूताः । चतुर्विधाभ्योऽद्भ्यः चतुर्विधा पृथिवी सम्भूता । चतुर्विधायाः पृथिव्याः चतुर्विधान्नात्पुरुष-शब्दितो देहस्तदभिमानी जीवः तदुभयान्तर्गतो हरिश्चेति त्रितयं सम्भूतमिति ज्ञेयम् । तदाह सूत्रकारः ॐ कारणत्वेन चाऽकाशादिषु यथा व्यपदिष्टोक्तेः ॐ इति ॐ तेजोऽतस्तथा ह्याह ॐ इति च । तत्राऽद्यनये आकाशाद्वायुरित्यादेः कल्पनोपदेशादिति न्यायेन मुख्यवृत्त्या भूतोत्पत्ति-परत्वम् अभिमानिनयन्यायेन अभिमानिपरत्वं चोपेत्य समाकर्षन्यायेन परममुख्यवृत्त्या आकाशादिपुरुषान्तशब्दानां ब्रह्मपरत्वं च द्युभ्वादिनयन्यायेन प्रादुर्भावं जनिं चोपेत्य कार्यत्वे सति कारणत्वरूपावन्तरकारणत्वसमर्थनात्, तेजोनयो तेजःपदोपक्षिताशेषभूततदभिमानिनामुपादानशक्तिकर्तृत्वशक्त्यादेः तेजोनये तेजः पदोपलक्षिताशेषभूततदभिमानिनामुपादानशक्तिकर्तृत्व-शक्त्यादेः ईशायत्तत्वोक्तेः ।

एवं सत्यपदोक्तं जगज्जन्महेतुत्वम् आत्मनः इत्यादिप्रकरणेन समर्थ्य अस्ति चैत्र इत्युक्ते जीवतीति प्रतीतेः अस्तेः शत्रन्तस्य सदिति रूपमुपेत्य सत्त्वं जीवनं यापयतीति षदलृ विशरणगतीति धातोर्भावे क्विबन्तत्वमुपेत्य सद्गतिं विशीर्णत्वं च यापयतीति च व्युत्पत्याश्रयेण उक्तमन्यदर्थत्रयं ज्ञानत्वानन्तत्वरूपलक्षणद्वयं च विवरितुं पुरुषपदेन परममुख्यवृत्योक्तस्य जीवदेहस्थस्य हरेः जीवदेहे पञ्चरूपतया स्थितिं वक्तुं प्रकरणान्तरमारभते- **स वा एष पुरुष इति** ।

स आत्मन इति सर्वभूतमूलकारणत्वेनोक्तः वै प्रसिद्धः, एष आकाशादिपदैर्मुख्यवाच्यतया प्रकृतः पुरुषः जीवदेहस्थः पुरुषनामा हरिः अन्नरसमयः मयट् प्राचुर्यार्थः, तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा इत्युक्तेः। अन्नशब्दोऽत्र अद्यतेऽत्ति चेति वाक्यशेषाददं भक्षण इत्यतः कर्मणि कर्तरि वा निष्ठाप्रत्यये रदाभ्यां निष्ठातो नः इति निष्ठातकारस्य नत्वे अन्नमिति सिद्ध्या भूतोपजीव्यत्वरूपाद्यत्वभूतात्तृत्वरूपसंहर्तृत्वपरः । रसशब्दः सारवाची । 'रसः सारो वरश्च' इति शब्दाः पर्यायवाचका इत्युक्तः । तथा चान्नेषु अन्नशब्दार्थेषु रसः सारोऽन्नरसः तत्प्रचुरोऽन्नरसमयः । प्राकृतान्नविकारदेहस्थोऽनिरुद्ध इत्यर्थः । अन्नपदस्य प्राकृतान्नपरत्वनिवृत्त्यर्थम् । अन्नमय इत्यनुक्त्वा अन्नरसमय इत्युक्तम् । एतेन स वा एष पुरुषः सर्वाद्यत्वसर्वात्तृत्वरूपसर्वोपजीव्यत्वसर्वसंहर्तृत्वाभ्यां निमित्ताभ्यां अन्नरसमय इति कथनेन सत्यपदस्य सर्वजीवनहेतुत्व-सर्वसंहर्तृत्वरूपार्थद्वयमपि विवृतं ध्येयम् । अन्नमयकोशस्थस्यानिरुद्ध-स्यान्नरसमयशब्दवाच्यस्य शिरप्रभृत्यवयवानां कोशशिरः प्रभृत्यवयवा एव स्थानानीत्याह- **तस्येदमेव शिर इति** । प्राकृतान्नविकारशरीर एव तस्य शिर इत्यर्थः । दृश्यमानजीवदेहशिरान्तस्थत्वेन तदावृततया स्थितत्वाद्धरेः शिरसो वस्त्रप्रावृतजानुनि इदं जान्विति निर्देशवदुपचारेणायं निर्देशः ।

एवमग्रेऽपि ज्ञेयम् । अयं दृश्यमानान्नविकारदेहसम्बन्धी दक्षिणः पक्षः दक्षिणबाहुः, अन्नरसमयस्यानिरुद्धस्य दक्षिणबाहुः तदन्तरस्तीत्यर्थः । अयमुत्तरः पक्षः परिदृश्यमानदेहसम्बन्ध्युत्तरः पक्षो वामबाहुः अन्नरसमयस्यानिरुद्धस्य वामबाहुः तदन्तर्वर्तत इत्यर्थः । अयमात्मा मध्यदेहः जीवदेहमध्यदेहः तस्य मध्यदेहः । इदं पुच्छं, तस्य विवरणं - **प्रतिष्ठेति** । प्रतितिष्ठत्याभ्यामिति प्रतिष्ठा पादौ, सुपां सुलुगित्यादिना द्विवचनस्याऽकारादेशः, जीवदेहपादयोरस्य पादौ वर्तेते इत्यर्थः । अन्नविकारदेहः तदवयवाश्चानिरुद्धादीनां इति भावः ।।२.३-४।।

उपनिषत्

**तदप्येष श्लोको भवति । अन्नाद् वै प्रजाः प्रजायन्ते । याः काश्च पृथिवीꣳश्रिताः । अथो अन्नेनैव जीवन्ति । अथैनदपि यन्त्यन्ततः । अन्नꣳहि भूतानां ज्येष्ठम् । तस्मात् सर्वौषधमुच्यते । सर्वं वै तेन्नऽमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते । अन्नꣳहि भूतानां ज्येष्ठम् । तस्मात् सर्वौषधमुच्यते । अन्नाद् भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि। तस्मादन्नं तदुच्यत इति ।।२.५।।**

भाष्यम्

स ज्यायान् सर्वभूतेभ्यस्तस्मात्सर्वौषधं स्मृतः ।
संसारे दह्यमानानामाश्रयत्वात्स औषधम् ।।

प्रचुरं मय इत्युक्तं प्रचुरात्ता यतो हरिः ।
प्रचुरैस्सेव्यते नित्यमतोऽन्नमय ईरितः ।।

देहस्यैव शिरस्यस्य शिरो विष्णोः प्रतिष्ठितम् ।

**बाह्वोः पक्षौ तथा मध्ये मध्यं पश्चात्तनौ तथा ।**
**पुच्छमित्येष भगवाननिरुद्धः स्वयं हरिः ।।**

**व्यास-** अन्नं हि भूतानां ज्येष्ठं तस्मात्सर्वौषधमुच्यत इति । तद्व्याचष्टे - **स ज्यायानिति** । भूतज्येष्ठत्वं कथं सर्वौषधत्वे कारणमित्यतो ज्येष्ठत्वस्य भूताश्रयत्वनिमित्तत्वादिभावेन तद्व्याचष्टे- **संसार इति** । दह्यमानानां उष्टानामिति यावत् । अद्यत्वमत्तृत्वं चेदन्नशब्दार्थस्तर्हि अन्नरसमय एवान्नम् । तथा च कथं तत्र विकारार्थो मयट् उपपद्यते इत्यत आह- **प्रचुरमिति** । प्रचुरैः बहुभिः । तस्यान्नस्येदमेव मनुष्यशिर एव शिर इति सामानाधिकरण्यप्रतीतिं वारयन्व्याचष्टे- **देहस्येति** । पश्चात्तनौ पादयोः । पुच्छं पादौ । प्राणनं चेष्टाप्रदत्वं च सत्यशब्दार्थ इत्याह- **तस्माद्वा एतस्मादन्नरसमयादित्यादिना** ।।२.५।।

**वादि-** सर्वौषधम् उष दाह इति धातोः संसाराग्निना दग्धा उषा इत्युच्यन्ते । तेषां दाहोपशामकत्वेन तत्सम्बन्धि धारकं च यद्वस्तु तदौषधमित्युच्यते । संसाराख्यं दाहं शमयित्वा मोक्षधारकं यद्भगवद्रूपं तदौषधमित्युच्यते । सर्वेषां योग्यजीवानामौषधं सर्वौषधम् । येऽन्नमयं ब्रह्मोपासते ते सर्वमन्नमयनामानं भगवन्तं प्राप्नुवन्ति । मुक्तावपेक्षितसकलान्नं प्राप्नुवन्तीति ध्वनिः । अन्नमय इत्यादावुच्यमानमन्नं न प्राकृतान्नं येनाब्रह्मविद्यात्वं स्यात्, किन्तु सर्वोपजीव्यः सकलसंहर्ता भगवानेवान्नशब्देनोच्यत इति स्वाभिप्रायं श्रुतिः स्वयमेवोद्घाटयति अद्यतेऽत्ति चेति ।।२.५।।

**श्री.भा-** प्रसिद्धान्नपरत्वे अन्नं हि भूतानां ज्येष्ठं तस्मात्सर्वौषधमुच्यत इति वाक्योक्तं सर्वभूतेभ्यो ज्यायस्त्वं संसारे दह्यमानानामाश्रयत्वरूप-मौषधत्वं च मुख्यतो न सम्भवतीत्याशयेन तद्व्याचष्टे- **स ज्यायानिति** । तस्मात् ज्यायस्त्वादेव- **संसार इति** । संसरत्यत्रेति संसारो देहस्तत्र

जाठराग्निना दह्यमानानामाश्रयत्वादित्यर्थः । यथोक्तम् । ओषधीषु स्थितो विष्णुः क्षुधितैराश्रितो भवेत् इति । तथा च उषाः उष्टाः दग्धाः । उष प्लुषदाह इति धातोः । ते धीयन्ते अस्मिन्निति व्युत्पत्तिर्द्रष्टव्या । ननु स वा एष पुरुषोऽन्नरसमय इत्युक्तान्नरसमयो न विष्णुः किन्तु देहरूपः कोश एव । कुतः विकाराभिधायकमयट्प्रत्ययप्रयोगात्तस्य चान्नविकारदेह एव सम्भवात् विकारशून्ये परमात्मनि चासम्भवादित्याशंकायां नात्र मयट् अकारार्थो विवक्षितः किन्तु प्राचुर्यार्थ एवेत्याह- **प्रचुरमिति** । प्रचुरं प्राचुर्यम् । तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधेति वचनात् । अन्नमयो यज्ञ इत्यादौ मयटः प्राचुर्ये प्रयोगदर्शनाच्चेति भावः । यथोक्तम् । ॐ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॐ इति । ननु कथमत्रान्नमय-शब्दोऽन्नप्राचुर्यार्थः । अन्नप्राचुर्यकथनस्याल्पत्वादित्यत आह- **प्रचुरात्तेति** । इदमुपलक्षणम् । प्रचुराद्य इत्यपि ग्राह्यम् । तथाच प्रचुरात्ता पूर्णात्ता । प्रधानात्तेति यावत् । एवं प्रचुराद्यः प्रचुरोपजीव्यश्चेत्यन्नमय इत्यर्थः । नात्रान्नप्राचुर्यस्यान्नमयशब्दार्थत्वायोगः । यतोऽत्रान्नशब्देन भूतात्तृत्वस्य तदद्यत्वस्य चाभिधानेनाल्पार्थत्वाभावात् । प्रसिद्धान्नार्थत्व एव तत्प्राप्तेरिति भावः । यथोक्तं भाष्ये । अन्नादीनां च प्राचुर्यमेव । अद्यतेत्ति चेति व्याख्यानात् । तत्प्राचुर्यं च युज्यत इति । उक्तं चानुव्याख्याने । प्रचुरान्नादिरेवातो ह्यन्नमन्नमयेत्यपि । उच्यत इति । किञ्च नायं मयट् प्रत्ययः। किंनाम प्रचुरवाचीमयशब्द इत्यंगीकृत्यान्नमय इत्यस्यार्थान्तरमाह- **प्रचुरैरिति** । हरिरिति वर्तते । अन्नशब्दवाच्यो हरिर्यतो मयैः प्रचुरैः बहुभिः सेव्यते अतो मयसेव्यान्न इति भाष्ये मध्यमपदलोपेन मयशब्दस्य परनिपातेन चान्नमय इति ईरित इत्यर्थः ।

ननु यदि परिदृश्यमान देह एव नान्नमयः । किन्तु परमात्मैव कथं तर्हि तस्येदमेव शिर इत्यादिप्रत्यक्षनिर्देशो युज्यते । न च वाच्यमुपनिषद्द्रष्टा

मुनिः ब्रह्मा अपरोक्षीकृत्य प्रत्यक्षतो निर्दिशतीति । तथासति तेनापरोक्षीकृतप्राणमयादावपि तत्प्रसंगात् निर्देशवैयर्थ्याच्चेत्यतस्तदभिप्राय-माह- **देहस्यैवेति** । अस्य विष्णोः शिरो देहस्य शिरसि प्रतिष्ठितमिति सम्बन्धः । अयं दक्षिणः पक्षः अयमुत्तरः पक्षः इत्यस्यार्थो बाह्वोः पक्षाविति । अस्य विष्णोः पक्षौ दक्षिणोत्तरबाहू देहस्य बाह्वोः प्रतिष्ठिताविति लिंगवचनविपरिणामेन सम्बन्धः । अयमात्मेत्यस्यार्थो मध्ये मध्यमिति। अस्य विष्णोः मध्यं मध्ये देहस्य मध्ये प्रतिष्ठितमिति सम्बन्धः । इदं पुच्छं प्रतिष्ठेत्यस्यार्थः पश्चात्तनाविति । एकवचनं द्विवचनार्थे । देहस्य पश्चात्तनौ देहाधोभागयोः पादयोरिति यावत् । अस्य विष्णोः पुच्छं पादौ प्रतिष्ठिनावित्यर्थः ।

यद्वा देहस्य पश्चात्तनौ पादद्वये विष्णोः पुच्छं पादद्वयं प्रतिष्ठितमित्यर्थः । अन्नमयशब्दवाच्यरूपस्य नामविशेषं दर्शयति- **इत्येष भगवानिति** । एवं च परिदृश्यमानदेहशिरः पक्षादौ अन्नमयनामकानिरुद्धाख्यभगवच्छिरः पक्षादेः सन्निहितत्वात् वस्त्रप्रावृतजानुनीदं जान्विति निर्देशवदिदमिति निर्देशो युज्यते इति भावः । यथोक्तं भाष्ये । इदमिति च दृश्यमानसन्निहितत्वादिति । उक्तं चानुव्याख्याने । इदमित्येव निर्देशो वस्त्रप्रावृतवद्विभोः । शिर आदेर्भवेज्जीवशिर आदौ व्यवस्थितेः इति ॥२.५॥

**श्री.खं-** अन्नमयनामकानिरुद्धस्य सर्वप्रजास्रष्टृत्वादिरूपं महिमानं श्लोकेन वक्तुं प्रतिजानीते उपनिषद्द्रष्टा मुनिः- **तदपीति** । तदपि तत्रापि अन्नमयनामकानिरुद्धस्य समस्तप्रजास्रष्टृत्वादौ एष वक्ष्यमाणः श्लोकोऽपि प्रमाणत्वेन भवतीत्यर्थः । तमेव श्लोकं पठति । अन्नाद्वै प्रजा इत्यादिना । अत्र सर्वत्रान्नशब्दोऽन्नमयपरो द्रष्टव्यः । अन्नादन्नमयनामकादनिरुद्धात् ।

कास्ताः प्रजा इत्यत आह- **याः काश्चेति** । श्रिताः आश्रिताः तत्रस्था इति यावत् । न केवलं सृष्टिकर्तृत्वमात्रं किन्नाम स्थितिकर्तृत्वं चेत्याह- **अथो इति** । सृष्ट्यनन्तरं जीवन्ति । प्रजा इति वर्तते । संहारकर्तृत्वं चाह- **अथेति** । स्थित्यनन्तरं अन्ततः प्रलये प्रजाः एनत् अन्नमय-नामकानिरुद्धमपि यन्ति प्राप्नुवन्ति । महिमान्तरमाह- **अन्नं हीति** । हि यस्मादन्नमयनामकानिरुद्धो भूतानां भूतेभ्यो ज्येष्ठं ज्यायान् तस्मात् ज्यायस्त्वादेव सर्वौषधमुच्यते शरीरे जाठराग्निना दग्धानामन्ने स्थितत्वादाश्रय इत्युच्यते । एवमन्नमयनामकानिरुद्धोपासकस्य फलमाह- **सर्वमिति** । येऽधिकारिणः अन्नं हि भूतानां ज्येष्ठमित्यादिना प्रकारेण तथा भूतैरद्यते उपजीव्यते भूतानि अत्ति च यतः तस्मात्तत् अनिरुद्धनामकरूपमन्नमुच्यत इत्येव मन्नं अन्नमयनामकमनिरुद्धं ब्रह्म ज्येष्ठत्वादिगुणपूर्णमुपासते ते सर्वं पूर्णमन्नं अन्नमयमनिरुद्धं प्राप्नुवन्तीत्येतद्वै प्रसिद्धमित्यर्थः । यद्वा उपासनाप्रकारं वर्धन्त इत्यन्तेनैवोक्त्वा श्लोकशेषेणान्नशब्दो निरुच्यते- **वर्धन्त इति** । येऽन्नं ब्रह्मोपासते इति सम्बन्धो द्रष्टव्यः । इति श्लोको भवतीति सम्बन्धः ।।२.५।।

**वरद**- अन्नꣳहि भूतानां ज्येष्ठम् इत्यस्यार्थः- **ज्यायानिति** । कथमन्यस्य सर्वौषधत्वमित्यत आह- **संसार इति** । उत्तरत्र एतमानन्दमयमात्मानमुपसङ्क्रामति इत्यादौ योऽन्नमयशब्दः पठितः तेनापि हरिरेवोक्तो नान्य इति भावेन अन्नमयशब्दस्यार्थं निरूपयति- **प्रचुरमिति** । ननु अन्नरसमयो हरिरिति न युक्तम् । तस्याप्रत्यक्षत्वेन तस्येदमेव शिरः । अयं दक्षिणः पक्षः इत्यादिनिर्देशानर्हत्वादित्यत आह- **देहस्येति** । ननु एवमन्नमयशब्देन प्रतिपादितो विष्णुः किन्नामक इत्यत आह- **एष इति** ।।२.५।।

मुनिः ब्रह्मा अपरोक्षीकृत्य प्रत्यक्षतो निर्दिशतीति । तथासति तेनापरोक्षीकृतप्राणमयादावपि तत्प्रसंगात् निर्देशवैयर्थ्याच्चेत्यतस्तदभिप्राय-माह- **देहस्यैवेति** । अस्य विष्णोः शिरो देहस्य शिरसि प्रतिष्ठितमिति सम्बन्धः । अयं दक्षिणः पक्षः अयमुत्तरः पक्षः इत्यस्यार्थो बाह्वोः पक्षाविति । अस्य विष्णोः पक्षौ दक्षिणोत्तरबाहू देहस्य बाह्वोः प्रतिष्ठिताविति लिंगवचनविपरिणामेन सम्बन्धः । अयमात्मेत्यस्यार्थो मध्ये मध्यमिति। अस्य विष्णोः मध्यं मध्ये देहस्य मध्ये प्रतिष्ठितमिति सम्बन्धः । इदं पुच्छं प्रतिष्ठेत्यस्यार्थः पश्चात्तनाविति । एकवचनं द्विवचनार्थे । देहस्य पश्चात्तनौ देहाधोभागयोः पादयोरिति यावत् । अस्य विष्णोः पुच्छं पादौ प्रतिष्ठितावित्यर्थः ।

यद्वा देहस्य पश्चात्तनौ पादद्वये विष्णोः पुच्छं पादद्वयं प्रतिष्ठितमित्यर्थः । अन्नमयशब्दवाच्यरूपस्य नामविशेषं दर्शयति- **इत्येष भगवानिति** । एवं च परिदृश्यमानदेहशिरः पक्षादौ अन्नमयनामकानिरुद्धाख्यभगवच्छिरः पक्षादेः सन्निहितत्वात् वस्त्रप्रावृतजानुनीदं जान्विति निर्देशवदिदमिति निर्देशो युज्यते इति भावः । यथोक्तं भाष्ये । इदमिति च दृश्यमानसन्निहितत्वादिति । उक्तं चानुव्याख्याने । इदमित्येव निर्देशो वस्त्रप्रावृतवद्विभोः । शिर आदेर्भवेज्जीवशिर आदौ व्यवस्थितेः इति ।।२.५।।

**श्री.खं-** अन्नमयनामकानिरुद्धस्य सर्वप्रजास्रष्टृत्वादिरूपं महिमानं श्लोकेन वक्तुं प्रतिजानीते उपनिषद्द्रष्टा मुनिः- **तदपीति** । तदपि तत्रापि अन्नमयनामकानिरुद्धस्य समस्तप्रजास्रष्टृत्वादौ एष वक्ष्यमाणः श्लोकोऽपि प्रमाणत्वेन भवतीत्यर्थः । तमेव श्लोकं पठति । अन्नाद्वै प्रजा इत्यादिना । अत्र सर्वत्रान्नशब्दोऽन्नमयपरो द्रष्टव्यः । अन्नादन्नमयनामकादनिरुद्धात् ।

कास्ताः प्रजा इत्यत आह- **याः काश्चेति** । श्रिताः आश्रिताः तत्रस्था इति यावत् । न केवलं सृष्टिकर्तृत्वमात्रं किन्नाम स्थितिकर्तृत्वं चेत्याह- **अथो इति** । सृष्ट्यनन्तरं जीवन्ति । प्रजा इति वर्तते । संहारकर्तृत्वं चाह- **अथेति** । स्थित्यनन्तरं अन्ततः प्रलये प्रजाः एनत् अन्नमय-नामकानिरुद्धमपि यन्ति प्राप्नुवन्ति । महिमान्तरमाह- **अन्नं हीति** । हि यस्मादन्नमयनामकानिरुद्धो भूतानां भूतेभ्यो ज्येष्ठं ज्यायान् तस्मात् ज्यायस्त्वादेव सर्वौषधमुच्यते शरीरे जाठराग्निना दग्धानामन्ने स्थितत्वादाश्रय इत्युच्यते । एवमन्नमयनामकानिरुद्धोपासकस्य फलमाह- **सर्वमिति** । येऽधिकारिणः अन्नं हि भूतानां ज्येष्ठमित्यादिना प्रकारेण तथा भूतैरद्यते उपजीव्यते भूतानि अत्ति च यतः तस्मात्तत् अनिरुद्धनामकरूपमन्नमुच्यत इत्येव मन्नं अन्नमयनामकमनिरुद्धं ब्रह्म ज्येष्ठत्वादिगुणपूर्णमुपासते ते सर्वं पूर्णमन्नं अन्नमयमनिरुद्धं प्राप्नुवन्तीत्येतद्वै प्रसिद्धमित्यर्थः । यद्वा उपासनाप्रकारं वर्धन्त इत्यन्तेनैवोक्त्वा 'श्लोकशेषेणान्नशब्दो निरुच्यते- **वर्धन्त इति** । येऽन्नं ब्रह्मोपासते इति सम्बन्धो द्रष्टव्यः । इति श्लोको भवतीति सम्बन्धः ॥२.५॥

**वरद-** अन्नꣳहि भूतानां ज्येष्ठम् इत्यस्यार्थः- **ज्यायानिति** । कथमन्यस्य सर्वौषधत्वमित्यत आह- **संसार इति** । उत्तरत्र एतमानन्दमयमात्मानमुपसङ्क्रामति इत्यादौ योऽन्नमयशब्दः पठितः तेनापि हरिरेवोक्तो नान्य इति भावेन अन्नमयशब्दस्यार्थं निरूपयति- **प्रचुरमिति** । ननु अन्नरसमयो हरिरिति न युक्तम् । तस्याप्रत्यक्षत्वेन तस्येदमेव शिरः । अयं दक्षिणः पक्षः इत्यादिनिर्देशानर्हत्वादित्यत आह- **देहस्येति** । ननु एवमन्नमयशब्देन प्रतिपादितो विष्णुः किन्नामक इत्यत आह- **एष इति** ॥२.५॥

**काशी-** यद्यप्यन्नमयशब्दं व्याख्याय अन्नं हि भूतानां ज्येष्ठमिति वाक्यं व्याख्येयं, परत्वात् । तथापि अन्नशब्दस्य विष्णुवाचकत्वव्यवस्थापनस्य प्रकृतत्वात् तत्संगतत्त्वेन तदुपयुक्तसर्वोत्तमत्वादिलिङ्गसमर्पकं तद्वाक्यमादौ व्याचष्टे- **स इति** । यद्यपि अन्नाद्वै प्रजाः प्रजायन्त इति पूर्ववाक्येऽपि सर्वप्रजास्रष्टृत्वादिविष्णुलिङ्गमस्ति । तथापि भूतजेष्ठत्वं सर्वौषधत्वे कथं हेतुरित्याशङ्कापरिहारार्थमवश्यव्याख्येयत्वादुपलक्षणत्वेनेदमेव व्याख्यातं ज्येष्ठत्वं न पूर्वोत्पन्नत्वम् । विष्णौ तदनुपपत्तेः किन्तूत्तमत्वमेवेति भावेनोक्तं- **ज्यायानिति** । भगवतो जीवत्वरूपभूतत्वाभावेन भूतानां मध्य इति निर्धारणायोगाद्विभक्तिव्यत्ययमाह- **भूतेभ्य इति** । तस्मात् भूतज्यायस्त्वात् सर्वौषध इति स्मृत इत्यर्थः । हेतुहेतुमद्भावं स्फुटयितुमत्र विवक्षितमोषधशब्दार्थमाह- **संसार इति** । सांसारिकदुःखानुभवि-नामाश्रयत्वात्तन्निवर्तकत्वादिति यावत् । उषदाहे इत्यतः कर्मणि घञ् दाहश्चात्र गौणो दाहसदृशसांसारिकदुःखजनककर्मरूपो विवक्षितः तथा चौषा दह्यमाना धीयन्ते अस्मिन्नित्यौषधः मुक्तिप्रद इति फलितार्थः । यत्त्वनुव्याख्याने 'ओषधीषु स्थितो विष्णुः क्षुधितैराश्रितो भवेत्' इत्यनेन जाठराग्नितप्ताश्रयात्वमोषधिशब्दार्थतयोक्तं तदोषध्यादिगतरूपापेक्षया व्याख्यानान्तरमित्यवगन्तव्यम् । इदानीमन्नमयशब्दार्थमाह- **प्रचुरमिति** । यतो धातूनामनेकार्थत्वात्प्राचुर्यार्थान्मेङ् धातोर्मत्वर्थे अच् प्रत्यये निष्पन्नेन मय इति पदेन प्रचुरमुक्तम् । यतश्च हरिर्मयानां प्रचुराणामन्नमत्ताद्यश्च कोऽर्थः । प्रचुरैर्नित्यं सेव्यते उपजीव्यत इति 'अतो विशेषणस्य परनिपातेनान्नमय इतीरित' इत्यर्थः ।

नत्वत्र मयट् प्रत्ययो विवक्षितः । तथा सति मयेत्युक्तमित्येव स्यात् । प्रत्यक्षमात्रस्य सुबन्तत्वायोगात् । मयट् प्रत्ययपक्षे तु प्रकारान्तरेण व्याख्यास्यते । यद्यपि श्रुतावन्नरसमयशब्दोऽस्ति तथापि मुख्यामुख्ययोर्मुख्ये

सम्प्रत्यय इति न्यायेनान्नमयशब्दोप्यन्नरसमयार्थ एवेत्याशयेनान्नमय इत्युक्तम् । नन्वन्नमयो हरिश्चेत्तस्येदमेव शिर इत्यादिनिर्देशानुपपत्तिः हरिशिरः करादेरप्रत्यक्षत्वादित्यत आह- **देहस्येति** । अस्य प्रत्यक्षस्यैव देहस्य शिरसि अस्य प्रकृतान्नमयस्य विष्णोः शिरः प्रतिष्ठितम् । पक्षौ बाहू मध्ये मध्यभागे मध्यमात्मपदोक्तमध्यभागः पश्चात्तनौ पादे पुच्छं पुच्छशब्दोक्तः पादः श्रुताविदं पुच्छमित्युक्तेरेकवचनं पादद्वयं तु विवक्षितम् । तथा चेदं शब्दस्य लक्षणया दृश्यमानशिरः पाण्यादिसन्नहितार्थत्वात् न दोषः । उक्तं भाष्यानुव्याख्यानयोः इदमिति च दृश्यमानसन्निहितत्वात् । इदमित्येव निर्देशो वस्त्रप्रावृतवद्विभोरिति । यद्वैतट्टीकारीत्या इदमित्यादिप्रथमा सप्तम्यर्थे सुपां सुलुगिति सूत्रात् इत्याशयेन देहस्य शिरसीत्यादिकमुक्तमिति ज्ञेयम् । अतो नानुपपत्तिरिति भावः । एतेषां च रूपाणां पृथग्व्यूहत्व-प्रतीतिनिरासार्थमाह- **इत्येष इति** । उक्तलक्षणोऽन्नमयोऽनिरुद्धाख्यो हरिः स्वयमिति । कामपुत्रं व्यावर्तयति ।।२.५।।

**काशी.खं-** अन्नमयस्य विष्णुत्वं श्लोकसंमत्या दृढयति- **तदप्येष इति** । तत् तस्मिन्नन्नमयविषये एष वक्ष्यमाणः श्लोकोऽप्यस्तीत्यर्थः । अपिना पूर्वोक्तमन्त्रवर्णपरिग्रहः । अत्रान्नशब्दोऽन्नमयानिरुद्धपरः । तस्मात्प्रजाः प्राणिनः प्रजायन्ते उत्पाद्यन्ते कास्ताः प्रजाः याः काश्चित् पृथिवीं श्रिताः पृथिवीस्थाः सर्वप्रजा इति यावत् । अत्र सर्वजनकस्यापि हरेरन्नमयरूपेण विशेषतः पृथिवीस्थप्रजाजनकत्वज्ञापनाय पृथिवीमित्युक्तम् । अत एव प्रशब्दः । तथाहि 'अन्नात्पुरुषः' इत्ययुक्तम् । अन्नस्य पुरुषैरद्यमानस्य तद्धेतुत्वाभावादित्याशङ्क्यान्नस्थ एवान्नमयरूपेण पुरुषे स्थित्वा तदुप-भुक्तान्नमेव रेतोरूपेण परिणाम्य प्रजाः सृजतीति पृथिवीशब्दः प्रकृतिपर इत्यप्याहुः । अथो जन्मानन्तरमन्नमयेनैव जीवन्ति । अथचान्ततो लयकाले एनत् अन्नमयमपि यन्ति प्राप्नुवन्ति । अतोऽन्नमयो भूतेभ्यो

ज्यायान् तस्मात्सर्वोत्तमत्वात् सर्वे ओषाः संसारतप्ता धीयन्ते अस्मिन्निति सर्वौषधं, मुक्तिप्रद इति यावत् । अन्नमयोपासनफलोक्त्या तद्विवृणोति । ये अन्नमयमनिरुद्धं ब्रह्म पूर्णगुणमुपासते ते सर्वे अन्नमयमनिरुद्धं प्राप्नुवन्ति मुक्तौ सर्वभोगांश्च प्राप्नुवन्ति वै प्रसिद्धमित्यर्थः । तदुपासनाप्रकारमाह- **अन्नमित्यादिना वर्धन्त इत्यन्तेन** । ननु किं प्रसिद्धान्नमेव ब्रह्मत्वेनोपास्यमित्याकाङ्क्षायामन्नशब्दं द्वेधा निर्वक्ति- **अद्यत्ते इति** । यस्माद्भूतैरद्यते उपजीव्यते भूतान्यत्ति च तस्मात्तदनिरुद्धाख्यं ब्रह्मान्नमय इति चोच्यते इत्यर्थः । अन्नशब्दस्यात्तृत्वादिमात्रवाचित्वेऽपि मुख्यार्थे योग्यतया सर्वभूतानामेव सम्बन्धे सर्वभूतात्तृत्वादेवान्नशब्देन लाभात् प्राचुर्यार्थेन मयटापि तस्यैव लाभादिति भावः । इतिशब्दः प्रकरणसमाप्त्यर्थः इत्युपासत इत्यन्वय इत्यप्याहुः । इत्यन्नमयप्रकरणम् ।।२.५।।

**रा.खं-** सत्यपदस्य जगजन्मस्थितिलयगतिहेतुत्वमर्थमुपेत्य जन्महेतुत्वमात्मन आकाश इत्यादिना अन्यदर्थद्वयं स वा एष इत्यादिना च व्याख्यानम् । तस्मिन्नर्थत्रये श्लोकमुदाहरत्युपनिषत्- **तदप्येष श्लोक इत्यादिना** । तत् तत्र उक्तेऽर्थे एष श्लोकोऽपि भवति । तमेवोदाहरति - **अन्नाद्वा इत्यादिना** । नामैकदेशे नामग्रहणम्, अन्नरसमयाद्वा इत्यर्थः । भौतिकान्नविकारदेहस्थादन्नरसमयनामकानिरुद्धात् प्रजाः देहयोगेन जायन्ते, वै प्रसिद्धमेतत् । याः काश्च पृथिवीं श्रिताः ताः प्रजा इत्यर्थः । अथो जाताश्च प्रजाः अन्नरसमयेन जीवन्ति प्राणान् बिभ्रति । अथ पश्चादन्ततः प्रलयकाले एनत् अन्नरसमयाख्यमनिरुद्धम् अपियन्ति । इतराज्ञेयतया तदुदरं प्रविशन्तीत्यर्थः । अन्नं हि अन्नरसमयनामाऽनिरुद्धो हि भूतानां ज्येष्ठं भूतेभ्यो ज्यायः हि यस्मात् तस्मात् सर्वौषधमुच्यते । उष दाहे इत्यतः कर्मणि घञि पुगन्तेति गुणे ओषाः संसारे दह्यमानाः सर्वे च ते ओषाश्च सर्वौषाः धीयन्ते अस्मिन्निति सर्वौषधम् संसारदग्धानामाश्रयः ।

भवभयनिवर्तकमुच्यत इत्यर्थः । अन्नमयस्य ब्रह्मत्वं जानतः फलमाह- **सर्वं वा इति** । येऽधिकारिणः अन्नम् अन्नरसमयाख्यमनिरुद्धं ब्रह्म गुणपरिपूर्णमुपासते । ते वै त एव सर्वं पूर्णम् अन्नरसमयं हरिं प्राप्नुवन्तीति । उपसंहरति- **अन्नं हि भूतानां ज्येष्ठमिति** । हि यतोऽन्नरसमयो भूतेभ्यो ज्यायान् तस्मात् सर्वौषधमुच्यते । किन्तु अलौकिकं वस्त्विति भावेन तन्निर्वक्ति- **अद्यतेऽत्ति चेति** । भूतैरिति विपरिणामेन अनुषङ्गः । अद्यते जीव्यते भूतान्यत्ति च संहरति । संहारस्योर्णनाभिवददनरूपत्वादत्तीत्युक्तम् । तस्मादद्यात्तृरूपत्वात् तद्रूपमन्नमुच्यत इत्यर्थः । इति शब्दस्य इत्येष श्लोक इति पूर्वेणान्वयः ।।२.५।।

।। इत्यन्नमयप्रकरणम् ।।

### उपनिषत्

**तस्माद् वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्राण एव शिरः । व्यानो दक्षिणः पक्षः । अपान उत्तरः पक्षः । आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठा ।।२.६।।**

**तदप्येष श्लोको भवति । प्राणं देवा अनुप्राणन्ति । मनुष्याः पशवश्च ये । प्राणो हि भूतानामायुः । तस्मात् सर्वायुषमुच्यते । सर्वमेव त आयुर्यन्ति । ये प्राणं ब्रह्मोपासते । प्राणो हि भूतानामायुः । तस्मात् सर्वायुषमुच्यत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ।।२.७।।**

ज्यायान् तस्मात्सर्वोत्तमत्वात् सर्वे ओषाः संसारतप्ता धीयन्ते अस्मिन्निति सर्वौषधं, मुक्तिप्रद इति यावत् । अन्नमयोपासनफलोक्त्या तद्विवृणोति । ये अन्नमयमनिरुद्धं ब्रह्म पूर्णगुणमुपासते ते सर्वे अन्नमयमनिरुद्धं प्राप्नुवन्ति मुक्तौ सर्वभोगांश्च प्राप्नुवन्ति वै प्रसिद्धमित्यर्थः । तदुपासनाप्रकारमाह- **अन्नमित्यादिना वर्धन्त इत्यन्तेन** । ननु किं प्रसिद्धान्नमेव ब्रह्मत्वेनोपास्यमित्याकाङ्क्षायामन्नशब्दं द्वेधा निर्वक्ति- **अद्यत्ते इति** । यस्माद्भूतैरद्यते उपजीव्यते भूतान्यत्ति च तस्मात्तदनिरुद्धाख्यं ब्रह्मान्नमय इति चोच्यते इत्यर्थः । अन्नशब्दस्यात्तृत्वादिमात्रवाचित्वेऽपि मुख्यार्थे योग्यतया सर्वभूतानामेव सम्बन्धे सर्वभूतात्तृत्वादेवान्नशब्देन लाभात् प्राचुर्यार्थेन मयटापि तस्यैव लाभादिति भावः । इतिशब्दः प्रकरणसमाप्त्यर्थः इत्युपासत इत्यन्वय इत्यप्याहुः । इत्यन्नमयप्रकरणम् ।।२.५।।

**रा.खं-** सत्यपदस्य जगजन्मस्थितिलयगतिहेतुत्वमर्थमुपेत्य जन्महेतुत्वमात्मन आकाश इत्यादिना अन्यदर्थद्वयं स वा एष इत्यादिना च व्याख्यानम् । तस्मिन्नर्थत्रये श्लोकमुदाहरत्युपनिषत्- **तदप्येष श्लोक इत्यादिना** । तत् तत्र उक्तेऽर्थे एष श्लोकोऽपि भवति । तमेवोदाहरति - **अन्नाद्वा इत्यादिना** । नामैकदेशे नामग्रहणम्, अन्नरसमयाद्वा इत्यर्थः । भौतिकान्नविकारदेहस्थादन्नरसमयनामकानिरुद्धात् प्रजाः देहयोगेन जायन्ते, वै प्रसिद्धमेतत् । याः काश्च पृथिवीं श्रिताः ताः प्रजा इत्यर्थः । अथो जाताश्च प्रजाः अन्नरसमयेन जीवन्ति प्राणान् बिभ्रति । अथ पश्चादन्ततः प्रलयकाले एनत् अन्नरसमयाख्यमनिरुद्धम् अपियन्ति । इतराज्ञेयतया तदुदरं प्रविशन्तीत्यर्थः । अन्नं हि अन्नरसमयनामाऽनिरुद्धो हि भूतानां ज्येष्ठं भूतेभ्यो ज्यायः हि यस्मात् तस्मात् सर्वौषधमुच्यते । उष दाहे इत्यतः कर्मणि घञि पुगन्तेति गुणे ओषाः संसारे दह्यमानाः सर्वे च ते ओषाश्च सर्वौषाः धीयन्ते अस्मिन्निति सर्वौषधम् संसारदग्धानामाश्रयः ।

भवभयनिवर्तकमुच्यत इत्यर्थः । अन्नमयस्य ब्रह्मत्वं जानतः फलमाह- **सर्वं वा इति** । येऽधिकारिणः अन्नम् अन्नरसमयाख्यमनिरुद्धं ब्रह्म गुणपरिपूर्ण-मुपासते । ते वै त एव सर्वं पूर्णम् अन्नरसमयं हरिं प्राप्नुवन्तीति । उपसंहरति- **अन्नं हि भूतानां ज्येष्ठमिति** । हि यतोऽन्नरसमयो भूतेभ्यो ज्यायान् तस्मात् सर्वौषधमुच्यते । किन्तु अलौकिकं वस्त्विति भावेन तन्निर्वक्ति- **अद्यतेऽत्ति चेति** । भूतैरिति विपरिणामेन अनुषङ्गः । अद्यते जीव्यते भूतान्यत्ति च संहरति । संहारस्योर्णनाभिवददनरूपत्वादत्तीत्युक्तम् । तस्मादद्यात्तृरूपत्वात् तद्रूपमन्नमुच्यत इत्यर्थः । इति शब्दस्य इत्येष श्लोक इति पूर्वेणान्वयः ।।२.५।।

।। इत्यन्नमयप्रकरणम् ।।

उपनिषत्

**तस्माद् वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्राण एव शिरः । व्यानो दक्षिणः पक्षः । अपान उत्तरः पक्षः । आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठा ।।२.६।।**

**तदप्येष श्लोको भवति । प्राणं देवा अनुप्राणन्ति । मनुष्याः पशवश्च ये । प्राणो हि भूतानामायुः । तस्मात् सर्वायुषमुच्यते । सर्वमेव त आयुर्यन्ति । ये प्राणं ब्रह्मोपासते । प्राणो हि भूतानामायुः । तस्मात् सर्वायुषमुच्यत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ।।२.७।।**

भाष्यम्

तस्यान्तरं परं रूपमभिन्नमपि भिन्नवत् ।
प्रद्युम्नाख्यं प्राणमयं प्रणेतृत्वात् प्रकीर्तितम् ॥

शिरस्तस्य प्राणगतं प्राण इत्येव नामतः ।
व्यानाख्यो दक्षिणः पक्षो व्यानगश्चोत्तरस्तथा ॥

अपानाख्योऽपानगत आकाशस्थं च मध्यमम् ।
आकाशाख्यं तथा पुच्छं पृथ्व्यां पृथिविनामकम् ॥

उदान आकाशनामा समानः पृथिवीति च ।
प्रणेतृत्वात् प्राणनाम शिरो विष्णोः प्रकीर्तितम् ॥

विशेषाच्चेष्टयेद्यस्माद्व्यानाख्यो दक्षिणः करः ।
यस्मादपनयेद्दोषानपानः सव्य उच्यते ॥

आकाशस्त्ववकाशत्वान्मध्यदेहो महात्मनः ।
पृथिवी पुच्छमस्योक्तं सर्वस्यापि प्रधारणात् ।
स एष जगतामायुस्तस्मिन् सङ्कर्षणः स्थितः ॥

**व्यास**- तत्प्राणप्रकरणं व्याचष्टे- **तस्यान्तरमिति** । अन्नरसमयादन्य इत्युक्त्यान्नरसमयात्प्राणमयस्य भेदः प्रतीयते । तां वारयति- **अभिन्नमपि भिन्नवदिति** । प्राणस्य शिर आदिकं शरीरस्थप्राणादौ तिष्ठतीति प्रसङ्गे आत्माख्यमध्यदेहपुच्छयोः कथमाकाशपृथिवीस्थितत्वोक्तिरित्यतो नात्र पृथिव्याकाशावुच्येते येन प्रसङ्गाननुगुणत्वमित्याह- **उदान इति** । प्रद्युम्नस्य शिर आदिकं प्राणादिकं प्राणादिनामकं कैर्निमित्तैरित्यतो निरुच्याह- **प्रणेतृत्वात्प्राणनामेत्यादिना** । प्रद्युम्नाख्यो भगवान् शरीरस्थतया सर्वप्रवर्तक इत्युक्तार्थे श्लोकं पठन्नाह- **तदपि तत्रार्थेऽपीति** । तत्र श्लोके सर्वमेव त आयुर्यन्तीति सर्वायुःप्रदत्वमुक्तं तद्घटयितुमुक्तं- **प्राणो हि**

**भूतानामायुरिति** । तद्व्याचष्टे- **स एव जगतामायुरिति** । सामान्यज्ञानं विशेषज्ञानं च ज्ञानपदार्थः । तं मनोमयविज्ञानमयप्रकरणाभ्यामाह- **तस्मादिति** । तत्र मनोमयप्रकरणं व्याचष्टे- **तस्मिन्सङ्कर्षण इत्यादिना** ।।२.६-७।।

**वादि-** अन्तरः अन्नमयस्यान्तर्विद्यमानः आत्मा प्रद्युम्नाख्यः परमात्मा प्राणमय इत्युच्यते । रूपविशेषत्वाभिप्रायेणान्यत्वोक्तिः । न तु भिन्नत्वात् । सर्वेषामपि रूपाणां तत्तच्छ्लोकेषु श्रुत्यैव स्पष्टब्रह्मपदेन ब्रह्मत्वोक्तेः । तेन प्राणमयेन एषोऽन्नमयः पूर्णः । अन्नमयस्य शिरोन्तः प्राणमयस्य शिरः । करयोरन्तः करौ । मध्यस्यान्तर्मध्यम् । पादयोरन्तः पादौ । एवमन्तर्जलेन पूरितघटवत् प्राणमयेऽन्नमयोऽन्तः पूरित इत्यर्थः । स वा एष प्राणमयः पुरुषविध एव पुरुषाकार एव । तस्य प्रद्युम्नस्य पुरुषविधतामनु अनुसृत्यायमन्नमयः पुरुषविधः । यथा देहे स्थितकरचरणादिना कञ्चुकस्य करचरणादिकं तथेति भावः । अत्रापि प्राणो प्रद्युम्नस्य शिरः । एवमुत्तरत्रापि द्रष्टव्यम् । प्राणं प्राणमयम् । यः अन्नमयः पूर्वस्य प्राणकृतदेहस्य शारीरः शरीरात्मकतदन्तर्विद्यमानः तस्यान्नमयस्य एषः प्राणमयः शारीरः शरीरान्तर्विद्यमान आत्मा अन्तर्देहाकारतया स्थितः । अनेन प्राणनहेतुभूतत्वाख्यं सर्वजगद्रक्षकत्वलक्षणं विवृतं भवति ।।२.६-७।।

**श्री.भा-** तस्माद्वा एतस्मादन्नरसमयादन्योन्तर आत्मा प्राणमय इत्यादिप्राणमयप्रकरणं व्याचष्टे- **तस्यान्तरमित्यादिना** । तस्यान्नमय-नामकानिरुद्धस्य । अन्य इत्यस्यार्थः परमिति । अन्तर आत्मेत्यस्यार्थः अन्तरं रूपमिति । अन्तरवस्थितं स्वरूपमित्यर्थः । प्राणमयोऽपि कोश इति विकत्थ्यन्ते तदसदिति भावेनोक्तं प्रद्युम्नाख्यं प्राणमयमिति । तत्र निमित्तमाह- **प्रणेतृत्वादिति**। प्रकर्षेण नेतृत्वादित्यर्थः । नन्वन्योन्तर आत्मेत्यादिनान्योन्यमन्यतयोक्तान्नमयादेः कथं परब्रह्मत्वं युज्यते ।

भगवद्रूपेषु भेदाभावादित्यत उक्तं अभिन्नमपि भिन्नवदिति। विशेषबलादिति भावः । यथोक्तमनुव्याख्याने । अभेदेऽपि विशेषेणैवान्य इत्युदितो हरिरिति । अत एकस्स पञ्चधा । उक्त इति च । प्राणमयस्य शिरआदिकं शरीरस्थप्राणापानादौ तिष्ठतीति वक्तुं तस्य प्राण एव शिर इत्यादिकं प्रवृत्तम् । तत्प्रद्युम्नाख्यभगवच्छिरआदेः प्राणाद्यभेदप्रतीतिवारणाय व्याचष्टे- **शिरस्तस्येत्यादिना** । तस्य प्राणमयस्य प्रद्युम्नस्य नामतः प्राणशब्दवाच्यमेवेत्यर्थः । उत्तरः पक्ष इत्यनुवर्तते। मध्यमं मध्यमशरीरम् । पुच्छं पादद्वयं पृथिव्यां स्थितम् ।

ननु प्राणमयस्य विष्णोः शिरआदिकं अध्यात्मप्राणापानादौ तिष्ठतीति कथनप्रसंगे आत्माख्यमध्यदेहपुच्छयोराकाश पृथिवीस्थितत्वोक्तिरसंगते-त्याशंक्य नात्राकाशपृथिवीशब्दाभ्यां प्रसिद्धाकाशपृथिव्यावभिधीयेते किन्तु उदानसमानावेवातो नासंगतिरित्याह- **उदान इति** । प्राणमयस्य प्रद्युम्नस्य शिरआदिकं प्राणादिगतं प्राणादिनामकमिति रूढिमाश्रित्योक्तम् । इदानीं योगमभिप्रेत्य प्राणादिशब्दान्प्राणमयशिरआदौ निरुच्य दर्शयति- **प्रणेतृत्वादि-त्यादिना** । विष्णोः प्राणमयस्य । विशेषादित्यनन्तरमासमन्तादित्यपि ग्राह्यम् । अपनयेत् परिहरेत् । सव्यः करः । अवकाशत्वात् अवकाशप्रदत्वात् । अस्य पुच्छं सर्वस्यापि प्रधारणात्पृथिवीत्युक्तमिति सम्बन्धः । प्राणमयं प्रत्युदाहृतश्लोके प्राणो हि भूतानामायुरित्युक्तम् । तस्यार्थमाह- **स एष इति** । जगतामुत्पत्तिमतां प्राणिनां आयुरायुष्यप्रदः । तस्माद्वा एतस्मात्प्राणमयादित्यादिमनोमयप्रकरणं व्याचष्टे - **तस्मिन्निति** ।।२.६-७।।

**श्री.खं-** तस्मात् तस्येदमेव शिर इत्युक्तमहिमोपेतादेतस्माच्छ्लोकोक्त-महिमोपेतादन्नरसमयादनिरुद्धादन्यः विशेषेणैवान्य इत्युदितः प्राणमय आत्मा प्रद्युम्नः अन्तरः अन्नमयनामकानिरुद्धान्तवरस्थितो देहिवज्ज्ञातव्यः ।

अन्नमयस्तु बहिष्ठत्वाद्देहवज्ज्ञातव्यः । तेनान्तरवस्थितेन प्राणमयेन एषः अन्नमयः पूर्णः निश्छिद्रत्वेन पूरितः । स वा एषः अन्तरवस्थितप्राणमयः पुरुषविध एव पुरुषाकार एव । तस्यान्तरवस्थितस्य प्राणमयस्य पुरुषविधतां पुरुषाकारतामनु अनुसारेणायं बहिष्ठो देहस्थानीयो अन्नमयः पुरुषाकारः । प्राणामयनामकप्रद्युम्नस्योपास्त्यर्थं शिरो बाह्वादिकमाह- **तस्येति** । तस्य प्राणमयस्य प्रद्युम्नस्य शिरः प्राण एव । प्राणगतत्वात्प्रणेतृत्वाच्च प्राणनामकं प्रकीर्तितम् । तस्य दक्षिणो बाहुर्व्यानः व्यानगतत्वात् विशेषात् आसमंताच्चेष्टकत्वाच्च व्याननामा । उत्तरः पक्षः सव्यबाहुरपानः अपानगत्वाद्दोषापनेतृत्वाच्चापाननामकः । आत्मा मध्यदेहः आकाशः आकाशनामको दानगतत्वादवकाशदातृत्वाच्चाकाशनामा । पुच्छं तस्यैव विवरणं प्रतिष्ठेति पादद्वयं पृथिवी पृथिवीनामकसमानगतत्वात्सर्वस्य धारणाच्च पृथिवीनामकमित्यर्थः ।। २.६ ।।

प्राणमयनामकप्रद्युम्नस्य शरीरस्थतया प्राणादिसमस्तप्रवर्तकत्वरूपार्थे श्लोकं प्रमाणयति- **तदपीति** । तमेव श्लोकं पठति - **प्राणमिति** । ये देवाः मनुष्याः पशवश्च ते सर्वे प्राणं प्रणेतृत्वात्प्राणनामकं प्रद्युम्नमनु तत्प्रेरणामनु तत्प्रेरणयैवेति यावत् । प्राणन्ति चेष्टन्ते हि यस्मात्प्राणः प्रद्युम्नो भूतानां जगतां उत्पत्तिमतां सर्वेषां प्राणिनामायुरायुष्यप्रदस्तस्मात्सर्वायुषं सर्वायुष्यद इत्युच्यते । एवमुपासकस्य फलमाह- **सर्वमेवेति** । येऽधिकारिणः प्राणो हि भूतानामायुस्तस्मात्सर्वायुषमुच्यते इति प्रकारेण प्राणं प्रद्युम्नं ब्रह्म सर्वायुष्यप्रदत्वादिगुणपूर्णमुपासते ते सर्वं पूर्णमायुर्मोक्षमिति यावत् । यन्त्येव प्राप्नुवन्त्येव । तस्माद्वा एतस्मादन्नरसमयादन्योन्तर आत्मा प्राणमय इत्युक्तमुपसंहरति- **तस्यैष एवेति** । पूर्वस्य तस्यान्नमयस्य शरीरस्थानीयस्यानिरुद्धस्य य एष एव प्राणमयः प्रद्युम्नः स एव शारीर आत्मा शरीरान्तर्गत आत्मा अन्तर्व्याप्तिविशेषेण देहिस्थानीय इत्यर्थः ।

यद्वा तस्यैष इत्युक्ततच्छब्दार्थो व्यनक्ति- **यः पूर्वस्येति** । पूर्वस्य अन्नविकारदेहाख्यकोशस्य योऽनिरुद्धः शारीर आत्मा शरीरागतात्मतया वर्तते तस्य अन्नमयकोशस्थस्यानिरुद्धस्य एषः प्राणमयः शारीर आत्मेत्यर्थः ।।२.७।।

**वरद**- सत्यशब्देन यो जगत् चेष्टाप्रदत्वलक्षणोऽर्थः सूचितः स प्रपञ्च्यते । तस्माद्वा एतस्मादन्नरसमयात् । अन्योन्तर आत्मा प्राणमयः इत्यादि प्राणमयप्रकरणे । तद्व्याख्याति- **तस्यान्तरमिति** । कथं प्रद्युम्नाख्यरूपस्य प्राणमयत्वमित्यत आह- **प्रणेतृत्वादिति** । तस्य प्राण एव शिर इत्यादिव्याचष्टे- **शिरस्तस्येति** । ननु प्राणमयस्यांशत्वेन प्राणादिवायूनां प्रसङ्गे कथं विजातीययोराकाशपृथिव्योरभिधानमित्यत आह- **उदान इति** । विष्णोः शरीरः प्रभृत्यङ्गानां प्राणादिनामकत्वमुक्तम् । तत्केन निमित्तेन इत्यत आह- **प्रणेतृत्वादिति** । प्राणो हि भूतानामायुः इत्यस्यार्थः- **स एष जगतामायुरिति** । एवं सत्यशब्देनोक्तं लक्षणं सृष्ट्यनुवाकेन अन्नमयप्राणमयप्रकरणाभ्यां च विस्तरतो व्याख्याय इदानीं ज्ञानशब्दोक्तं लक्षणं प्रपञ्च्यते तस्माद्वा एतस्मात् प्राणमयात् । अन्योन्तर आत्मा मनोमयः इत्यादि मनोमयविज्ञानमयप्रकरणाभ्याम् । ते प्रकरणे क्रमेण व्याचष्टे **तस्मिन्सङ्कर्षण स्थित** इत्यादिना ।।२.६-७।।

**काशी**- नन्वन्नमयस्य विष्णुत्वे प्राणमयादिकोशप्रायपाठविरोधः । प्राणमयादीनामपि विष्णुत्वे तस्माद्वा एतस्मादन्नरसममयादन्योन्तरात्मा प्राणमय इत्यादावन्यत्वाद्युक्तिविरोधः विष्णौ स्वगतभेदाभावादित्याशङ्कां निवारयन्नुत्तरवाक्यानि व्याचष्टे- **तस्येति** । अन्नमयरूपस्यान्तरमन्तः स्थं प्रणेतृत्वात्प्राणमयशब्दोक्तं प्रद्युम्नाख्यं रूपं अभिन्नमपि परं परमैश्वर्यवत् तत एव भिन्नवत् भिन्नमिवान्यादिशब्देन प्रकीर्तितमित्यर्थः ।

तथा च प्राणमयादिशब्दानामपि प्राणमयादिकोशगतविष्णुमात्रपरत्वान्नप्रायपाठविरोधः । अन्नादिशब्दानां विशेषपरतया भेदपरत्वाभावान्नतद्विरोधोऽपीति भावः । उक्तं चानुव्याख्याने अभेदेऽपि विशेषेणैवान्य इत्युदितो हरिरिति । तस्य प्राण एव शिर इत्यादिना प्रद्युम्नशिर आदेः प्राणादिवाय्वाद्यात्मकत्वमुच्यत इति प्रतीतिनिरासाय व्याचष्टे- **शिर इति** । तस्य प्राणमयस्य प्रद्युम्नस्य शिरः । प्राणाख्यनासिक्यवायुगतं नामतः प्राण इत्येव प्रकीर्तितमित्यनुषङ्गः । व्यानगतो दक्षिणो बाहुः व्यानाख्यः । अपानगत उत्तरः सव्यो बाहुरपानाख्यः आकाशाख्यवायुगतो मध्यभाग आकाशाख्यः पृथिव्याख्ये वायौ स्थितं पादद्वयं पृथिवीनामकमित्यर्थः । आकाशाख्यः पृथिव्याख्यश्च क इत्यपेक्षायामाह - **उदान इति** । समानश्च पृथिवीत्युच्यत इति शेषः । एतेनाकाश आकाशस्थः समानवायुरात्मा मध्यस्थत्वात् पृथिवी पृथिवीदेवतापुच्छं प्रतिष्ठा प्राणमयस्थितिहेतुत्वादिति व्याख्यानमपास्तम् । उक्तप्रमाणविरोधात् पृथिवीपदेन तद्देवता विवक्षायां प्रायपाठविरोधाच्च । प्राणादिस्थप्राणमयशिर आदौ प्राणादिशब्दानां विद्वद्रूढिमुक्त्वा महायोगमप्याह- **प्रणेतृत्वादिति** । सर्वस्य प्रणेतृत्वादपि प्राणनामेति सम्बन्धः । 'प्राणं देवा अनुप्राणन्ति' इत्युत्तरश्रुत्यनुसारेण प्राणन्ति प्रकर्षेण समन्तात् अनन्ति प्रवर्तन्ते अनेनेति व्युत्पत्या विशेषाच्चेष्टयेद्यस्मादित्याद्युत्तरप्रमाणानुसारेण प्राणयतीति व्युत्पत्या प्रणेतृत्वं प्राणशब्दार्थः विष्णोः प्राणमयस्य विशब्दार्थो विशेषादिति समन्तादित्याद्यर्थोऽपि ग्राह्यः । चेष्टयेदपनयेदित्यनतेरन्तर्णीतणिजर्थोक्तिः अपानः अपानाख्यः सव्यः करः अवकाशत्वादवकाशप्रदत्वादाकाशाख्यो मध्यदेहः सर्वस्य प्रधारणादस्य पुच्छं पादद्वयं पृथिवीत्युक्तमित्यर्थः । प्रथते तिष्ठति सर्वमस्यामिति पृथिवीति विग्रहो विवक्षितः प्राणं देवा अनुप्राणन्तीत्युक्तदेवादिप्रवर्तकत्वे प्राणो हि भूतानामायुरिति हेतुरुच्यते

यद्वा तस्यैष इत्युक्ततच्छब्दार्थो व्यनक्ति- **यः पूर्वस्येति** । पूर्वस्य अन्नविकारदेहाख्यकोशस्य योऽनिरुद्धः शारीर आत्मा शरीरागतात्मतया वर्तते तस्य अन्नमयकोशस्थस्यानिरुद्धस्य एषः प्राणमयः शारीर आत्मेत्यर्थः ।।२.७।।

**वरद-** सत्यशब्देन यो जगत् चेष्टाप्रदत्वलक्षणोऽर्थः सूचितः स प्रपञ्च्यते । तस्माद्वा एतस्मादन्नरसमयात् । अन्योन्तर आत्मा प्राणमयः इत्यादि प्राणमयप्रकरणे । तद्व्याख्याति- **तस्यान्तरमिति** । कथं प्रद्युम्नाख्यरूपस्य प्राणमयत्वमित्यत आह- **प्रणेतृत्वादिति** । तस्य प्राण एव शिर इत्यादिव्याचष्टे- **शिरस्तस्येति** । ननु प्राणमयस्यांशत्वेन प्राणादिवायूनां प्रसङ्गे कथं विजातीययोराकाशपृथिव्योरभिधानमित्यत आह- **उदान इति** । विष्णोः शरीरः प्रभृत्यङ्गानां प्राणादिनामकत्वमुक्तम् । तत्केन निमित्तेन इत्यत आह- **प्रणेतृत्वादिति** । प्राणो हि भूतानामायुः इत्यस्यार्थः- **स एष जगतामायुरिति** । एवं सत्यशब्देनोक्तं लक्षणं सृष्ट्यनुवाकेन अन्नमयप्राणमयप्रकरणाभ्यां च विस्तरतो व्याख्याय इदानीं ज्ञानशब्दोक्तं लक्षणं प्रपञ्च्यते तस्माद्वा एतस्मात् प्राणमयात् । अन्योन्तर आत्मा मनोमयः इत्यादि मनोमयविज्ञानमयप्रकरणाभ्याम् । ते प्रकरणे क्रमेण व्याचष्टे **तस्मिन्सङ्कर्षण स्थित** इत्यादिना ।।२.६-७।।

**काशी-** नन्वन्नमयस्य विष्णुत्वे प्राणमयादिकोशप्रायपाठविरोधः । प्राणमयादीनामपि विष्णुत्वे तस्माद्वा एतस्मादन्नरसममयादन्योन्तरात्मा प्राणमय इत्यादावन्यत्वाद्युक्तिविरोधः विष्णौ स्वगतभेदाभावादित्याशङ्कां निवारयन्नुत्तरवाक्यानि व्याचष्टे- **तस्येति** । अन्नमयरूपस्यान्तरमन्तः स्थं प्रणेतृत्वात्प्राणमयशब्दोक्तं प्रद्युम्नाख्यं रूपं अभिन्नमपि परं परमैश्वर्यवत् तत एव भिन्नवत् भिन्नमिवान्यादिशब्देन प्रकीर्तितमित्यर्थः ।

तथा च प्राणमयादिशब्दानामपि प्राणमयादिकोशगतविष्णुमात्रपरत्वान्नप्रायपाठविरोधः । अन्नादिशब्दानां विशेषपरतया भेदपरत्वाभावान्नतद्विरोधोऽपीति भावः । उक्तं चानुव्याख्याने अभेदेऽपि विशेषेणैवान्य इत्युदितो हरिरिति । तस्य प्राण एव शिर इत्यादिना प्रद्युम्नशिर आदेः प्राणादिवाय्वाद्यात्मकत्वमुच्यत इति प्रतीतिनिरासाय व्याचष्टे- **शिर इति** । तस्य प्राणमयस्य प्रद्युम्नस्य शिरः । प्राणाख्यनासिक्यवायुगतं नामतः प्राण इत्येव प्रकीर्तितमित्यनुषङ्गः । व्यानगतो दक्षिणो बाहुः व्यानाख्यः । अपानगत उत्तरः सव्यो बाहुरपानाख्यः आकाशाख्यवायुगतो मध्यभाग आकाशाख्यः पृथिव्याख्ये वायौ स्थितं पादद्वयं पृथिवीनामकमित्यर्थः । आकाशाख्यः पृथिव्याख्यश्च क इत्यपेक्षायामाह - **उदान इति** । समानश्च पृथिवीत्युच्यत इति शेषः । एतेनाकाश आकाशस्थः समानवायुरात्मा मध्यस्थत्वात् पृथिवी पृथिवीदेवतापुच्छं प्रतिष्ठा प्राणमयस्थितिहेतुत्वादिति व्याख्यानमपास्तम् । उक्तप्रमाणविरोधात् पृथिवीपदेन तद्देवता विवक्षायां प्रायपाठविरोधाच्च । प्राणादिस्थप्राणमयशिर आदौ प्राणादिशब्दानां विद्वद्रूढिमुक्त्वा महायोगमप्याह- **प्रणेतृत्वादिति** । सर्वस्य प्रणेतृत्वादपि प्राणनामेति सम्बन्धः । 'प्राणं देवा अनुप्राणन्ति' इत्युत्तरश्रुत्यनुसारेण प्राणन्ति प्रकर्षेण समन्तात् अनन्ति प्रवर्तन्ते अनेनेति व्युत्पत्या विशेषाच्चेष्टयेद्यस्मादित्याद्युत्तरप्रमाणानुसारेण प्राणयतीति व्युत्पत्या प्रणेतृत्वं प्राणशब्दार्थः विष्णोः प्राणमयस्य विशब्दार्थो विशेषादिति समन्तादित्याद्यर्थोऽपि ग्राह्यः । चेष्टयेदपनयेदित्यनतेरन्तर्णीतणिजर्थोक्तिः अपानः अपानाख्यः सव्यः करः अवकाशत्वादवकाशप्रदत्वादाकाशाख्यो मध्यदेहः सर्वस्य प्रधारणादस्य पुच्छं पादद्वयं पृथिवीत्युक्तमित्यर्थः । प्रथते तिष्ठति सर्वमस्यामिति पृथिवीति विग्रहो विवक्षितः प्राणं देवा अनुप्राणन्तीत्युक्तदेवादिप्रवर्तकत्वे प्राणो हि भूतानामायुरिति हेतुरुच्यते

तत्प्राणाख्यशिरस एवेति प्रतीतिनिरासाय व्याचष्टे- **स एष इति** । सः प्राणाद्यवयवक एष प्राणमयः प्रद्युम्नो जगतां सर्वदेहिनामायुर्जीवनहेतुरित्यर्थः । मनोमयप्रकरणं व्याचष्टे- **तस्मिन्निति** । प्राणमयाख्यः प्रद्युम्ने सर्वसामान्यज्ञानपूर्णत्वेन मनोमयाख्यः सङ्कर्षणः स्थित इत्यर्थः ।।२.६-७।।

**काशी.खं-** सत्यशब्दोक्तगतिजीवनप्रदत्वे विवृण्वन् प्राणमयं निरूपयति- **तस्मादिति** । यद्यप्यन्नशब्देन जीवनप्रदत्वमुक्तं तथापि तत्पोषकत्वरूपं अत्र तु आयुःप्रदत्वरूपमिति भेदः । तस्मात् ब्राह्मणोक्तगुणकादेतस्मान्मन्त्रोक्तगुणकादन्नरसमयादनिरुद्धादन्यो विशेषेण रूपान्तररूपः अन्तरः अन्नमयकोशस्थप्राणमयकोशस्थतया अनिरुद्धान्तः स्थितः प्राणमयः प्राचुर्येण सर्वप्रणेता प्रद्युम्न उपास्य इति शेषः । स किं परिमाणः कीदृशश्चेत्याकाङ्क्षायामाह- **तेनेति** । तेन प्राणमयेनैषोऽन्नमयः पूर्णो निश्छिद्रतया व्याप्तः । स एषः प्राणमयः पुरुषविधः पुरुषाकार एव वै तस्य पुरुषाकारतामनुसृत्यायमन्नमयः पुरुषाकारस्तस्मादुद्भूत इति यावत् । तस्य प्राणमयस्य प्राण एव कोशघटकप्राणवायुस्थं प्रणेतृत्वगुणं शिरः व्यानः विशेषेण समन्ताच्चेष्टको व्यानवायुस्थो दक्षिणः पक्षः करः अपानः भक्तानां दोषानपनीय प्रवर्तको अपानवायुस्थ उत्तरो वामः करः आकाशो अवकाशप्रद उदानवायुस्थ ऊर्ध्वगतिहेतुत्वेनोदानाख्य आत्मा मध्यदेहः पृथिवी सर्वप्रधारकं समानवायुस्थं समं योग्यतानुसारेण प्रवर्तनात्समानाख्यं पुच्छमग्रभागः प्रतिष्ठापाद इत्यर्थः ।।२.६।।

तत् प्राणमयविषये एष वक्ष्यमाणः श्लोकोऽप्यस्ति तं पठति- **प्राणमिति** । प्राणमयं प्रद्युम्नमनुसृत्य तत्प्रेरणयेति यावत् । ये देवादयः सर्वे प्राणिनः प्राणन्ति चेष्टन्ते जीवन्ति च । तत्र हेतुः हि यस्मात्प्राणमयो भूतानामायुरायुःप्रदस्तस्मादित्यर्थः । वृद्धसम्मत्येदं द्रढयति- **तस्मादिति** ।

सर्वेषां आयुःप्रदत्वात्सर्वायुषमुच्यते इत्यर्थः । उक्तमर्थं फलोक्त्यापि द्रढयति- **सर्वमिति** । ये प्राणं प्रद्युम्नं ब्रह्मोपासते ते सर्वं पूर्णमायुरायुःप्रदं प्रद्युम्नमेव यन्ति प्राप्नुवन्ति । क्षयरहितमेवायुर्वा मोक्षमिति यावत् । यन्ति इत्येवेति वा सम्बन्धः । तत्रेति कर्तव्यतामाह- **प्राणो हीति** । इति ज्ञात्वेति शेषः इत्युपासत इति व्याचक्षते । प्राणमयस्यान्नमयान्तरत्वं विवृण्वन्नुपसंहरति- **तस्येति** । य एष प्राणमय एष एव पूर्वस्य पूर्वोक्तस्य तस्यान्नमयस्य शारीरः अन्तर्व्याप्तिविशेषेण देहिवद्विद्यमानः स च देहवद्वर्तत इत्यर्थः । अत्रान्नमयप्रकरणेऽन्नमयस्य हरेः पुरुषशब्दोक्तदेहे शारीरत्वं कुतो नोक्तमिति न शङ्क्यं पञ्चरूपाणामेव देहदेहिवद्भावे-नोपासनार्थमुच्यमानत्वात् 'देहिदेहवदेवासौ पञ्चधावस्थितो हरिः' इत्युक्तत्वादिति ध्येयम् । केचित्तु पूर्वस्य पुरुषपदोक्तदेहस्य योऽन्नमयः शारीरस्तस्यैष प्राणमयः शारीर इति व्याचक्षते । प्राणमयप्रकरणम् ।।२.६-७।।

**रा.खं-** सत्यं ज्ञानमिति लक्षणवाक्यस्थसत्यपदेन जगत्स्रष्ट्रत्वं जगज्जीवनदत्वं जगत्प्रवृत्तिरूपगतिहेतुत्वं संहर्तृत्वं चेति विवक्षितार्थ-चतुष्टयमध्ये स्रष्ट्रत्वं जीवनदत्वं संहर्तृत्वं चेति त्रयं आकाशाद्युत्पत्तिप्रकरणे अन्नमयप्रकरणे च विवृतम् । जगत्प्रवर्तकत्वरूपगतिहेतुत्वरूपमर्थं प्राग्विवृतजीवनदत्वं च स्फुटं विवरितुं देहस्थप्रद्युम्नाख्यरूपप्रतिपादनरूपं प्रकरणान्तरमारभते - **तस्माद्वा एतस्मादित्यादिना** । तस्मात् सत्यत्वेन लक्षितात् एतस्मात् प्रकरणद्वयेन प्रतिपादितात् अन्नरसमयात्, प्राकृतान्नविकारदेहे नियन्तृतया स्थितात् अन्नरसमयनामकात् अनिरुद्धात् अन्यः अन्तरः तदन्तस्थः आत्मा नियामकः प्राणमयः वायुविकार-प्राणमयकोशस्थः। प्राणं देवा अनुप्राणन्तीति वाक्यशेषोक्तदिशा प्राणन्ति प्रवर्तन्ते वा बाहुल्येन भूतान्यनेनेति व्युत्पत्या प्राणमयशब्दवाच्यः

प्रद्युम्नाख्यस्तिष्ठतीत्यर्थः। तेन प्राणमयेन प्राणमयकोशस्थेन प्रद्युम्नेन एष अन्नमयकोशस्थोऽन्नरसमयोऽनिरुद्धः निश्चिद्रतया पूर्णः। स वा एष पुरुषविधः । प्राणमयकोशस्थो प्राणमयनामा प्रद्युम्नः पुरुषविधतामनु पुरुषाकारतानुसारेण अयं अन्नमयकोशस्थः तन्नामाऽनिरुद्धः पुरुषाकारः । तस्मादुद्भूत इत्युपलक्षणतया ग्राह्यम् । प्राणमयशब्दितप्रद्युम्नस्यावयवानां प्राणनामकः शिर इत्यर्थः । एवं व्यानस्थो विशेषेण अनतीति व्युत्पत्या सव्यबाहुः । आकाशपृथिवीशब्दाभ्यां उदानसमानौ ग्राह्यौ तस्य प्राणमयाख्यप्रद्युम्नस्य मध्यदेहः उदाननामोदानस्थः पुच्छमिवान्तिमतया स्थितौ । प्रतिष्ठा प्रतिष्ठौ पादौ समाननामकौ समानस्थौ । प्राणमयकोशप्राणादयः प्रद्युम्नाधीना इति भावः।

जगद्गतिजीवनयोर्हेतुत्वनिमित्तेन प्राणमयनामकः तन्नामकोशस्थ इत्युक्तेऽर्थे श्लोकमुदाहरति- **तदप्येष श्लोको भवतीत्यादिना** । तदपि तत्रापि उक्तेऽर्थे इत्यर्थः। ये मनुष्याः पशवो देवाश्च प्राणं प्राणमयमनुप्राणन्ति प्राणमयप्रेरणया प्राणन्ति चेष्टन्ते हिताहितप्राप्ति-परिहारार्थं प्रवृत्तिमन्तो भवन्ति जीवन्ति चेत्यर्थः। प्राणो हि प्राणमयो हि भूतानामायुः जीवनहेतुः । तस्माद्भूतानां जीवनहेतुत्वात् सर्वायुषमुच्यते । प्राणमयः सर्वायुषः उच्यत इति विपरिणामः। प्राणमयज्ञानिनः फलमाह - **सर्वमिति** । येऽधिकारिणः प्राणमयकोशस्थं प्रागुक्तनिमित्तेन प्राणमयशब्दवाच्यं प्रद्युम्नं ब्रह्म देशकालगुणपरिच्छिन्नतया ब्रह्मपदवाच्यम् उपासते जानन्ति च । ते सर्वमेव आयुर्मोक्षं यान्ति । उपसंहरति - **प्राणो हीति** । तात्पर्यार्थमभ्यासो वा ।

यद्वा सर्वायुःप्रदत्वे हेतुकथनाय पुनर्वचनम् । इतिशब्दः इत्येष श्लोक इत्यन्वेति । प्राणमयप्रकरणसमाप्तौ वा । यद्वा इतिशब्देन श्लोकं समाप्य प्राणमयस्य धर्मान्तरमहोपनिषत्- **तस्येति** । तस्यान्नमयकोशस्थस्य

तन्नामकानिरुद्धस्य एष प्राणमयकोशस्थः तन्नामा प्रद्युम्नः । शारीर आत्मा देहिरूपात्मा । अन्नमयाख्यकोशस्थमनिरुद्धं देहवत्कृत्वा तदन्तस्थप्राणमयकोशस्थः प्रद्युम्नो देहिवद्वर्तत इत्यर्थः । रूपयोरभेदेऽपि देहदेहिभावान्यत्वान्तरत्वादिभेदप्रतिनिधिविशेषेणैश्वर्यबलेन यः पूर्वस्येति । पूर्वस्य अन्नविकारकोशस्य । यः अनिरुद्धः शारीरात्मतया वर्तते अन्नविकारदेहं शरीरवत्कृत्वाऽन्तर्वर्तते तस्यैवेति ।।२.६-७।।

।। इति प्राणमयप्रकरणम् ।।

उपनिषत्

**तस्माद् वा एतस्मात् प्राणमयात् । अन्योन्तर आत्मा मनोमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य यजुरेव शिरः । ऋग् दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा ।।२.८।।**

**तदप्येष श्लोको भवति । यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचनेति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ।।२.९।।**

भाष्यम्

शिरस्तस्य यजुर्नाम यज्ञानां हरणात् स्मृतम् ।
यजुःसंस्थं च बाहू तु ऋक्सामान्तस्थितौ सदा ।।

ऋगर्चनायाः स्वीकारात् साम दोषात्समीकृतेः ।
पञ्चरात्रगतं मध्यमादेशाख्यं सुविस्तृतेः ।।

**अथर्वाख्यं तथा पुच्छमधरं चाङ्गिनां रसः ।**
**मनोवाचामगम्यं तं ज्ञात्वाऽनन्दस्वरूपिणम् ।।**
**कुतश्चिन्न बिभेत्येव वासुदेवोऽन्तरस्ततः ।।**

**व्यास-** सुविस्तृतेरुपदेशरूपत्वात् पञ्चरात्रमादेशाख्यमित्युच्यते । अथर्वाख्यं अथर्वाङ्गिरसाख्यम् । अधरत्वादङ्गिरसत्वाच्च पुच्छं तथोक्तमित्यर्थः । साकल्येन यजुराद्यप्रतिपाद्यत्वं तात्पर्यार्थः । तं महिमानं श्लोकेन वक्ष्यन्नाह- **तदपीति** । मनोमयस्य वागाद्यगोचरत्ववेत्तुः फलमाह समग्रश्लोकेन । योजना तु मनोमयस्य ब्रह्मण आनन्दं विद्वान् कदाचन न बिभेति । आनन्दः किं प्रकारो ज्ञातव्यः यज्ज्ञानं भयराहित्यकारणमित्यतो वागाद्यगोचरत्वेनेति तं श्लोकं आनन्दं ब्रह्मण इत्युक्त्या भेदप्रतीतिं निवारयन्व्याचष्टे- **मनोवाचामिति** । श्रद्धादिस्थशिरआदिमद्विज्ञानाधीनं यज्ञादीत्यभिप्रायार्थः । तं श्लोकेन वक्ष्यन्नाह- **तदप्येष इति** । विज्ञानं यज्ञादिप्रवर्तकत्वेन ज्ञेयम् । तथा ज्ञातुः फलमाह- **विज्ञानं ब्रह्म यज्ञादिप्रवर्तकत्वेन वेद चेदिति** । विज्ञानमयप्रकरणं व्याचष्टे- **वासुदेव इत्यादिना** ।।२.८-९।।

**वादि-** ज्ञानपदोक्तसर्वज्ञत्वलक्षणं सामान्यतः सर्वज्ञत्वं विशिष्य सर्वज्ञत्वमिति द्वेधा प्रपञ्चयितुं क्रमेण प्रकरणद्वयं प्रवृत्तम् । तत्र मनोमयप्रकरणस्य सङ्कर्षणः उत्तरस्य वासुदेवः प्रतिपाद्य इति विवेकः । सामान्यतः सर्वज्ञत्वं नामानन्तानन्तपदार्थेषु ब्राह्मणत्वक्षत्रियत्ववैश्यत्व-शूद्रत्वब्रह्मचारित्वगृहस्थत्ववानप्रस्थत्वयतित्वदेवत्वमनुजत्वराक्षसत्वपिशाचत्वादिभेदेन यान्यनन्तानि चेतननिष्ठसामान्यानि घटत्वपटत्वपृथिवीत्वाप्त्वपर्वतत्वादि-भेदेनानन्तजडनिष्ठा ये सामान्यधर्मास्तेषां सर्वेषां विविच्य वेत्तृत्वाख्यं सामान्यतः सर्वज्ञत्वमपि भगवत्यसाधारणत्वाद्भगवल्लक्षणम् । अतः प्रमेयत्वेन सार्वज्ञ्यमस्मदादीनामप्यस्तीति कुचोद्यं गर्भस्रावेणैव गतम् । अत एव हि

**ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः।**
**ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणा ।।**

इति समग्रसामान्यज्ञानस्य भगवदसाधारणभाग्यत्वोक्तिः । अस्य मनोमयस्य शिरः ज्ञानजनकयजुर्वेदनियामकं सत् यज्ञधारकत्वादि-ज्यत्वाद्यजुर्नामकं यजुर्वेदमूलमुख्यप्राणान्तः स्थितप्राणनामकप्राणमयशिरोऽ-न्तस्तिष्ठति । एवमन्यत्रापि । ऋक् पूजायामिति धातोः पूजास्वीकारात् ऋङ्नामकः ऋगन्तर्नियामकः मनोमयस्य दक्षिणकरः व्याननामकप्राणमय-दक्षिणकरान्तस्तिष्ठति । दोषादुद्धृत्य सतां समकर्षणात्सामनामा सामान्तर्यामी मनोमयस्य वामकरः । प्राणमयस्यापानान्तर्गतपाननामककरान्तस्तिष्ठतीति । आसमन्तादेशो यस्येति व्युत्पत्या विस्तृतत्वादादेशनामा सन्नादेशाख्य-पञ्चरात्रान्तर्गतो मनोमयस्य मध्यदेहः आ समन्तात्काशनादाकाशनामके मध्ये तिष्ठति । तृतीयोऽतिशये इति वचनात्सर्वस्मादधो विद्यमानः अङ्गिनां रसभूतश्च पुच्छं प्रतिष्ठा मनोमयस्य पादः पृथक्त्वात् पृथ्वीनामकप्राणमय-पादान्तस्तिष्ठति । पुच्छपदस्य नित्यनपुंसकत्वात् रसपदस्य नित्यपुल्लिङ्गत्वात् स्त्रीलिङ्गप्रतिष्ठापदविशेषणत्वं ज्ञेयम् । मनोवाचामगोचराऽनन्दस्वरूप-सङ्कर्षणप्रतिपादकत्वाच्छ्लोकश्लोकिनोरैकार्थ्यं ज्ञेयम् ।।२.८-९।।

**श्री.भा-** प्राणमयनामके प्रद्युम्ने मनोमयनामा संकर्षणस्स्थित इत्यनेन मनोमयस्यापि कोशत्ववचनं परास्तं वेदितव्यम् । तस्य यजुरेव शिर इत्यादौ मनोमयनामसंकर्षणाख्यभगवच्छिर आदेर्यजुराद्यभेदप्रतीतिवारणाय यजुरादिशब्दान्मनोमयनामकभगवच्छिरादौ योगरूढिभ्यां व्याख्याति- **शिरस्तस्ये-त्यादिना** । तस्य मनोमयनामकस्य संकर्षणस्य । यज्ञानां हरणात् यज्ञसम्बन्धभागस्वीकारादित्यर्थः । यजुः संस्थं चेत्यादिना तत्र तत्रस्थितत्वोक्त्या रूढिरुक्तेति ज्ञातव्यम् । यजुर्वेदादौ प्रतिपाद्यतया स्थितमित्यर्थः । अर्चनायाः पूजायाः । दोषात् दोषवत्त्वेन । सर्वाभक्तस्वरूपस्य समीकृतेः साम्यकरणादित्यर्थः ।

**अथर्वाख्यं तथा पुच्छमधरं चाङ्गिनां रसः ।**
**मनोवाचामगम्यं तं ज्ञात्वाऽनन्दस्वरूपिणम् ।।**
**कुतश्चिन्न बिभेत्येव वासुदेवोऽन्तरस्ततः ।।**

**व्यास-** सुविस्तृतेरुपदेशरूपत्वात् पञ्चरात्रमादेशाख्यमित्युच्यते । अथर्वाख्यं अथर्वाङ्गिरसाख्यम् । अधरत्वादङ्गिरसत्वाच्च पुच्छं तथोक्तमित्यर्थः । साकल्येन यजुराद्यप्रतिपाद्यत्वं तात्पर्यार्थः । तं महिमानं श्लोकेन वक्ष्यन्नाह- **तदपीति** । मनोमयस्य वागाद्यगोचरत्ववेत्तुः फलमाह समग्रश्लोकेन । योजना तु मनोमयस्य ब्रह्मण आनन्दं विद्वान् कदाचन न बिभेति । आनन्दः किं प्रकारो ज्ञातव्यः यज्ज्ञानं भयराहित्यकारणमित्यतो वागाद्यगोचरत्वेनेति तं श्लोकं आनन्दं ब्रह्मण इत्युक्त्या भेदप्रतीतिं निवारयन्व्याचष्टे- **मनोवाचामिति** । श्रद्धादिस्थशिरआदिमद्विज्ञानाधीनं यज्ञादीत्यभिप्रायार्थः । तं श्लोकेन वक्ष्यन्नाह- **तदप्येष इति** । विज्ञानं यज्ञादिप्रवर्तकत्वेन ज्ञेयम् । तथा ज्ञातुः फलमाह- **विज्ञानं ब्रह्म यज्ञादिप्रवर्तकत्वेन वेद चेदिति** । विज्ञानमयप्रकरणं व्याचष्टे- **वासुदेव इत्यादिना** ।।२.८-९।।

**वादि-** ज्ञानपदोक्तसर्वज्ञत्वलक्षणं सामान्यतः सर्वज्ञत्वं विशिष्य सर्वज्ञत्वमिति द्वेधा प्रपञ्चयितुं क्रमेण प्रकरणद्वयं प्रवृत्तम् । तत्र मनोमयप्रकरणस्य सङ्कर्षणः उत्तरस्य वासुदेवः प्रतिपाद्य इति विवेकः । सामान्यतः सर्वज्ञत्वं नामानन्तानन्तपदार्थेषु ब्राह्मणत्वक्षत्रियत्ववैश्यत्व-शूद्रत्वब्रह्मचारित्वगृहस्थत्ववानप्रस्थत्वयतित्वदेवत्वमनुजत्वराक्षसत्वपिशाचत्वादिभेदेन यान्यनन्तानि चेतननिष्ठसामान्यानि घटत्वपटत्वपृथिवीत्वाप्त्वपर्वतत्वादि-भेदेनानन्तजडनिष्ठा ये सामान्यधर्मास्तेषां सर्वेषां विविच्य वेत्तृत्वाख्यं सामान्यतः सर्वज्ञत्वमपि भगवत्यसाधारणत्वाद्भगवल्लक्षणम् । अतः प्रमेयत्वेन सार्वज्ञ्यमस्मदादीनामप्यस्तीति कुचोद्यं गर्भस्रावेणैव गतम् । अत एव हि

**ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः।**
**ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणा ।।**

इति समग्रसामान्यज्ञानस्य भगवदसाधारणभाग्यत्वोक्तिः । अस्य मनोमयस्य शिरः ज्ञानजनकयजुर्वेदनियामकं सत् यज्ञधारकत्वादि-ज्यत्वाद्यजुर्नामकं यजुर्वेदमूलमुख्यप्राणान्तः स्थितप्राणनामकप्राणमयशिरोऽ-न्तस्तिष्ठति । एवमन्यत्रापि । ऋक् पूजायामिति धातोः पूजास्वीकारात् ऋङ्नामकः ऋगन्तर्नियामकः मनोमयस्य दक्षिणकरः व्याननामकप्राणमय-दक्षिणकरान्तस्तिष्ठति । दोषादुद्धृत्य सतां समकर्षणात्सामनामा सामान्तर्यामी मनोमयस्य वामकरः । प्राणमयस्यापानान्तर्गतपाननामककरान्तस्तिष्ठतीति । आसमन्तादेशो यस्येति व्युत्पत्या विस्तृतत्वादादेशनामा सन्नादेशाख्य-पञ्चरात्रान्तर्गतो मनोमयस्य मध्यदेहः आ समन्तात्काशनादाकाशनामके मध्ये तिष्ठति । तृतीयोऽतिशये इति वचनात्सर्वस्मादधो विद्यमानः अङ्गिनां रसभूतश्च पुच्छं प्रतिष्ठा मनोमयस्य पादः पृंथत्त्वात् पृथ्वीनामकप्राणमय-पादान्तस्तिष्ठति । पुच्छपदस्य नित्यनपुंसकत्वात् रसपदस्य नित्यपुल्लिङ्गत्वात् स्त्रीलिङ्गप्रतिष्ठापदविशेषणत्वं ज्ञेयम् । मनोवाचामगोचराऽनन्दस्वरूप-सङ्कर्षणप्रतिपादकत्वाच्छ्लोकश्लोकिनोरैकार्थ्यं ज्ञेयम् ।।२.८-९।।

**श्री.भा-** प्राणमयनामके प्रद्युम्ने मनोमयनामा संकर्षणस्स्थित इत्यनेन मनोमयस्यापि कोशत्ववचनं परास्तं वेदितव्यम् । तस्य यजुरेव शिर इत्यादौ मनोमयनामसंकर्षणाख्यभगवच्छिर आदेर्यजुराद्यभेदप्रतीतिवारणाय यजुरादिशब्दान्मनोमयनामकभगवच्छिरादौ योगरूढिभ्यां व्याख्याति- **शिरस्तस्ये-त्यादिना** । तस्य मनोमयनामकस्य संकर्षणस्य । यज्ञानां हरणात् यज्ञसम्बन्धभागस्वीकारादित्यर्थः । यजुः संस्थं चेत्यादिना तत्र तत्रस्थितत्वोक्त्या रूढिरुक्तेति ज्ञातव्यम् । यजुर्वेदादौ प्रतिपाद्यतया स्थितमित्यर्थः । अर्चनायाः पूजायाः । दोषात् दोषवत्त्वेन । सर्वाभक्तस्वरूपस्य समीकृतेः साम्यकरणादित्यर्थः ।

यद्वा दोषादिति ल्यब्लोपनिमित्ता पञ्चमी । दोषपरिहारं विधाय निर्दोषत्वेनेति यावत् । **सर्वभक्तस्वरूपस्य** साम्यकरणादित्यर्थः । दोषाच्छमीकृतेरिति क्वचित्पाठः। तत्र भक्तानां दोषात् शान्तिकरणात् परिहारकरणादित्यर्थो द्रष्टव्यः । आदेश आत्मेत्यस्यार्थः पञ्चरात्रगतं पञ्चरात्रप्रतिपाद्यं मध्यं मध्यागं आदेशाख्यमिति पञ्चरात्रे आदेशशब्दं निर्वक्ति- **सुविस्तृतेरिति** । बुध्या विवेकेन पञ्चरात्रमित्यनुवर्तते। उपदेशरूपत्वादिति शेषः । तथाच भगवद्गुणसुविस्तृतेरुपदेशरूपत्वात्पञ्चरात्र-मादेशाख्यमिति सम्बन्धः ।

यद्वा पञ्चरात्रगतमिति आदेशशब्दस्य रूढिमुक्त्वा सुविस्तृतेरत्यन्तं विस्तृतत्वादादेशाख्यमिति योगप्रदर्शनपरत्वेन व्याख्येयम् । अथर्वांगिरस-स्थितत्वादथर्वाख्यमथर्वांगिरसशब्दवाच्यमित्यर्थः । ऋषिद्वयदृष्ट भागद्वयो-पेतोऽथर्वणवेद एवाथर्वांगिरसशब्देनोच्यत इति सम्प्रदायविदः । अधरं चेत्यत्र च शब्दात् वर्तयतीत्यस्यांऽगिरस इत्यस्य च संग्रहः । तथाचाधरं पातालादिस्थं प्राणिजातं वर्तयतीत्यथर्वाख्यमित्यर्थः । धकारस्य थकारो निर्वचनादित्यवगन्तव्यम् । अंगिनां प्रधानानां देवानां सकाशात् रसः सारो वर इति हेतोरंगिरस इत्यर्थः । 'यतो वाचो निवर्तन्ते' इत्यादेस्तात्पर्यं मनोवाचामगम्यं तमिति । साकल्येनेति शेषः । आनन्दं ब्रह्मणो विद्वानित्यत्र आनन्दं ब्रह्मण इत्युक्त्या प्राप्तभेदशंकां परिहरति- **ज्ञात्वानन्दस्वरूपिणमिति** । विशेषबलात्तथा व्यवहार इति भावः। न बिभेति कदाचनेत्यस्यार्थः कुतश्चिदिति । तस्माद्वा एतस्मान्मनोमयादिति विज्ञानमयप्रकरणं व्याचष्टे- **वासुदेव इत्यादिना** । ततोऽन्तरः । मनोमयनामके संकर्षणे स्थितः । अनेन विज्ञानमयोऽपि कोश इत्यपास्तम् ॥२.८-९॥

**श्री.खं-** तस्मादित्यपूर्ववद्व्याख्येयम् । मनोमयः संकर्षणः तेन मनोमयेन एषः प्राणमयः सवा एषः मनोमयः । तस्य मनोमयस्य । अयं प्राणमयः । मनोमयनामकसंकर्षणस्योपास्त्यर्थं शिर आदिकमाह- **तस्येत्यादिना** । तस्य शिरो यजुः प्रतिपाद्यतया यजुः संस्थत्वात् यज्ञसम्बन्धि-भागस्वीकर्तृत्वाच्च यजुर्नामकम् दक्षिणः पक्षो दक्षिणबाहुः ऋकूप्रतिपाद्यतया ऋक्संस्थत्वादर्चनायाः स्वीकर्तृत्वाद्वा ऋङ्नामकः । उत्तरः पक्षो वामबाहुः सामप्रतिपाद्यतया सामान्तस्थित्वा तत्सर्वभक्तानां निर्दोषत्वेन समीकरणाच्च सामनामकः । आत्मा मध्यदेहः आदेशः भगवत्तनुविस्तृत्युपदेश-रूपत्वेनादेशनामकपञ्चरात्रप्रतिपाद्यत्वात् अत्यन्तविस्तृतत्वाद्वा आदेशनामकः । पुच्छं प्रतिष्ठा पादद्वयं अथर्वांगिरसप्रतिपाद्यतयाथर्वांगिरसाख्यमुनिद्वय-दृष्टभागद्वयोपेताथर्वणवेदस्थितत्वादधरं वर्तयतीति व्युत्पत्त्या पातालाद्य-धोलोकस्थित प्राणिजातप्रवर्तकत्वाच्चाथर्वनामकम् । निर्वचनत्वाद्दकारस्य थकारः । अंगिनां प्रधानानां देवानां रसत्वात् श्रेष्ठत्वादंगिरसनामकमित्यर्थः ।।२.८।।

भगवच्छिर आदेर्यजुरादिवेदवाक्यप्रतिपाद्यत्वेन तन्नामकत्वमुक्तम् । तत्किं साकल्येनेति शंकायां नेत्यभिप्रेत्याह- **तदपीति** । तत्रापि साकल्येन सकलवेदाप्रतिपाद्यत्वेऽपीत्यर्थः । तमेव श्लोकं पठति- **यत इति** । यतो मनोमयनामकात्संकर्षणाद्वाचो वेदवाचः मनसा सहाऽप्राप्य साकल्येना-प्रतिपाद्य निवर्तन्ते । तस्य ब्रह्मणो मनोमयस्यानन्दं आनन्दस्वरूपिणं मनोमयनामकं संकर्षणमिति यावत् । विद्वान्कदाचित्कुतश्चिन्न बिभेति । तस्माद्वेत्युक्तमुपसंहरति- **तस्यैष इति** । पूर्वस्य तस्य प्राणमयस्य य एष मनोमयः स शारीर आत्मेत्यर्थः। यद्वा यः प्राणमयः पूर्वस्य अन्नरसमयाख्यस्य अनिरुद्धस्य शारीर आत्माऽभवत् । तस्य प्राणमयस्य एषः मनोमयः शारीर आत्मा देहिवत्तिष्ठतीत्यर्थः ।।२.९।।

**वरद-** तस्य यजुरेव शिर इत्यादि व्याचष्टे - **शिर इत्यादिना** । मनोमयस्य माहात्म्यमुच्यते यतो वाचो निवर्तन्त इति । तत्र ब्रह्मण आनन्दम् इत्यानन्दमयस्य ब्रह्मसम्बन्धितया प्रतीयमानत्वादसौ ब्रह्मणोऽभिन्न इति प्रतीतिर्भवेत् । तां निवर्तयितुं श्लोकं व्याख्याति - **मनोवाचमिति** । तस्माद्वा एतस्मान्मनोमयात् । अन्योन्तर आत्मा विज्ञानमय इत्यादि व्याचष्टे - **वासुदेव इति** ।।२.८-९।।

**काशी-** तस्य यजुरेव शिर इत्यादौ यजुरादिवेदस्यैव शिरस्त्वादिकमुच्यत इति प्रतीतिनिरासाय महायोगविद्वरूढिभ्यां यजुरादिशब्दान्व्याचष्टे- **शिर इति** । इज्यते इति व्युत्पत्या यज्ञानां यज्ञभागानां हरणात्स्वीकारान्निमित्ताद्यजुर्नामकं यजुः सत्तादिप्रदत्वेन यजुसंस्थं शिर इत्यर्थः । सदा ऋक्सामसत्तादिप्रदत्वेन ऋक् सामान्तः स्थितौ तस्य बाहू तत्रार्च्यत इति व्युत्पत्या पूजास्वीकतृत्वनिमित्तादृगाख्यो दक्षिणबाहुः समयतीति व्युत्पत्या दोषात् दोषं निरस्य समीकृतेर्योग्यता व्यञ्जनान्निमित्तात्सामाख्यः सव्यबाहुः । वर्णविकारादिनिर्वचनत्वात् आदिश्यते इति विस्तृतत्वेनोपदिश्यत इति व्युत्पत्या सुविस्तृतोपदेश्यत्वनिमित्तादादेशाख्यं पञ्चरात्रसत्तादिप्रदत्वेन पञ्चरात्रगतं मध्यम् । अधरमाधारत्वेनाधः स्थितमिति यावत् । अङ्गिनां देहिनामप्रधानवतां श्रेष्ठानां वा रसः श्रेष्ठं चाथर्वाख्यमथर्वाङ्गिरसाख्यं अथर्वाणां अङ्गिरसा च दृष्टं भागद्वयमथर्ववेदस्तसत्तादिप्रदत्वेन तत्स्थं पुच्छं पादद्वयमित्यर्थः । एतेन यजुषो यागादिकर्मणि सन्निपत्योपकारकत्वेन प्राधान्यात् शिरस्त्वमित्यपास्तम् । भगवद्रूपाणामेव यजुरादिशब्दार्थत्वात् तत्र च पारावर्याभावात् कर्मणि कथञ्चित्प्राधान्यस्य ब्रह्मकाण्डेऽनुपयुक्तत्वाच्च ।

नचैवं यजुरेव शिर इत्यादावेवकारवैय्यर्थ्यम् । मुख्ययजुरादिशब्दार्थलाभार्थत्वात् मुख्यो यज्ञभोक्तेत्यादिमनोमयकोशगतसङ्कर्षणशिरःपाण्यादिकं

यजुरादिसंस्थत्वेन कथमुच्यते यजुरादीनां मनोमयकोशानन्तर्भूतत्वात् अन्नमयादिकोशान्तर्गतानिरुद्ध प्रद्युम्नावयवानामन्नमयादिको शान्तर्भूत-तदवयवसंस्थत्ववदिहापि मनोमयकोशान्तर्भूतावयवयसंस्थत्वस्यैव वक्तव्य-त्वादिति चेत्सत्यम् । क्रमविशेषविशिष्टवर्णा एव हि यजुरादिशब्दैरुच्यन्ते क्रमश्च न पौर्वापर्यरूपो वर्णानां सम्भवति । नित्यत्वात् अतः क्रमिकबुद्धिविषयत्वरूप एव वाच्यः । बुद्धिश्च मनोवृत्तिरेवेति तद्विशिष्टवर्णात्मकयजुरादीनां मनोमयत्वान्नोक्तदोष इति । यतो वाचो निवर्तन्त इति फलवाक्यतात्पर्यमाह- **मन इति** । अगम्यं साकल्येनाविषयं तं सङ्कर्षणं आनन्दस्वरूपिणमित्यनेन ब्रह्मण इति षष्ठी तादात्म्ये सम्बन्धे चेत्युक्तं भवति । विशेषबलात्तदुपपत्तिरिति भावः । न बिभेत्येवेकारेण पुनर्भवभयव्यवच्छेदकेन कदाचनेत्यस्य तात्पर्यमुक्तम् तेन मुक्तिरेव फलमिति सूचितम् । उत्तरत्र कुतश्चनेत्युक्तेस्तत्संग्रहाय कुतश्चिदिति कस्मादपि कारणादित्यर्थः ।

विज्ञानमयप्रकरणं व्याचष्टे- **वासुदेव इति** । ततो मनोमयसङ्कर्षण-स्यान्तरोऽन्तः स्थितः । सर्वविशेषज्ञानपूर्णत्वेन विज्ञानमयाख्यो वासुदेव इत्यर्थः ।।२.८-९।।

**काशी.खं-** मन्त्रवर्णस्थज्ञानशब्दार्थं प्रकरणद्वयेन विवृण्वन् रूपद्वयो-पास्तिमाह- **तस्मादिति** । तस्माद्ब्राह्मणोक्तादेतस्मान्मन्त्रोक्तात्प्राण-मयात्प्रद्युम्नादन्यो विशिष्टोन्तरोन्तःस्थ आत्मा देहिवद्वर्तमानः मनोमयः प्राचुर्येण सामान्यज्ञानवान्सङ्कर्षण उपास्यः । अत्र सामान्यज्ञाने प्राचुर्यं सर्वसामान्यगोचरत्वं निरवधिकस्पष्टत्वादिरूपमतो नेतरसाधारण्यमिति ज्ञेयम् । तेन मनोमयेनैष प्राणमयो निश्छिद्रतया पूर्णः स मनोमयः पुरुषाकार एव तस्य पुरुषाकारतामनुसृत्यायं प्राणमयः पुरुषाकारस्तद्भूत इति यावत् । तस्य मनोमयस्य यजुर्यज्ञभोक्तृयजुर्वेदस्थमेव शिरः,

ऋगर्चनीयऋग्वेदस्थ एव दक्षिणो बाहुः साम समीकर्ता । भक्तानां दोषान्निरस्य योग्यताव्यञ्जक इति यावत् । सामवेदस्यैव वामो बाहुः आसमन्ताद्विस्तृतत्वेन दिश्यते उपदिश्यत इत्यादेशः पञ्चरात्रस्थमध्यदेहः अथर्वा सर्वाधारः अगम्यः श्रेष्ठः ब्रह्मादिभ्यो रसः श्रेष्ठमथर्वाङ्गिरो दृष्टभागद्वयात्मकाथर्ववेदस्थमेवाग्रं पादद्वयमित्यर्थः । अत्र प्रतिपाद्यतया यजुरादिसंस्थत्वस्यापि विवक्षितत्वाद्यजुरादिसर्वं तदेकदेशमात्रप्रतिपादकमित्याशयो ज्ञातव्यः ।।२.८।।

तत् तत्रैष श्लोकोऽप्यस्ति तमाह- **यत इति** । मनसा सहिता वाचो वेदाद्या अप्राप्य साकल्येनाविषयीकृत्य यतो निवर्तन्ते किञ्चित्प्रतिपाद्य ततोऽपरिमेयत्वेनैव प्रतिपादयन्तीत्यर्थः । तस्य ब्रह्मणो मनोमयस्य स्वरूपसम्बन्धिनं तादृशमानन्दं विद्वान् जानन् अपरिमितस्वरूपानन्दवत्वेन मनोमयोपासक इति यावत् । कदापि न बिभेति पुनरावृत्तिभयरहिततत्प्राप्तिरूपमुक्तिमेतीत्यर्थः । अत्रानन्दशब्देनोपलक्षणया आनन्दयतीति व्युत्पत्त्या वा ज्ञानानन्दादिगुणजातं विवक्षितम् । तेन ज्ञानविवरणत्वमप्यस्येति ज्ञातव्यम् । इति शब्दः श्लोक इत्यनेन सम्बध्यते । मनोमयस्य प्राणमयान्तरत्वं विवृण्वन्नुपसंहरति- **तस्येति** । तस्य प्राणमयस्यैष मनोमयः । पूर्ववद्योजना इति मनोमयप्रकरणम् ।।२.९।।

**रा.खं-** एवं लक्षणवाक्यस्थसप्तपदार्थं प्रकरणत्रयेण विवृत्येदानीम् अखिलवस्तुगताखिलसामान्यविषयकत्वरूपं ज्ञानत्वलक्षणं विवृणोति - **तस्मादित्यादिना** । तस्मान्मन्त्रवर्णलक्षितात् । एतस्मात्प्राणमयप्रकरणेन व्याख्यानात् प्राणमयकोशस्थात् तन्नामकात्प्रद्युम्नात् अन्योऽन्तरोऽन्तस्थः आत्मा व्याप्तः मनोमयः । मनु अवबोधने इत्यतोऽसुन्प्रत्यये मनसा ज्ञानेन प्रचुरो मनोमय इति व्युत्पत्त्या अशेषवस्तुगतसामान्याकारगोचरज्ञानप्राचुर्यवत्त्वनिमित्तेन मनोमयनामको मनोमयाख्यकोशस्थः सङ्कर्षण-

स्तिष्ठतीत्यर्थः । तेन मनोमयेनोक्तरूपेण सङ्कर्षणाख्येन एष प्राणमय-कोशस्थः तन्नामा प्रद्युम्नः निश्छिद्रतया पूर्णः । स वा एष मनोमयः सङ्कर्षणः पुरुषाकार एव । तस्य पुरुषाकारतां अनुसृत्य अयं प्राणमयः पुरुषाकारः तत उद्भूत इत्यपि ध्येयम् । मनोमयस्थस्य तन्नाम्नः सङ्कर्षणस्य शिरआद्यवयवानां स्थानान्याह- **तस्येत्यादिना** । तस्य मनोमयकोशस्थस्य सङ्कर्षणस्य यजुः यज्ञहरणनिमित्तेन यजुर्नामकं यजुस्संस्थितम् । एवशब्दो यजुश्शब्दस्य मुख्यत्वार्थः । अर्चनस्वीकारहेतुना ऋङ्नामकः ऋक्स्थः दक्षिणबाहुः दोषात्सम्यक्कारणहेतुना सामनामा सामस्थः उत्तरबाहुः । शतकोटितया अतिविस्तृतत्वहेतुना उपदेशत्वरूपहेतुना च आदेशाख्य आदेशशब्दितपञ्चरात्रस्थो मध्यदेहः । अधरत्वाङ्गिरसत्वहेतुभ्यां अथर्वाङ्गिरसनामकौ अर्थर्वाङ्गिरसस्थौ पुच्छं पुच्छमिवान्त्यतया स्थितौ । प्रतिष्ठा प्रतिष्ठौ पादौ । यजुरादिकं तस्य शिरःप्रभृत्येकैकावयवप्रतिपादकं न साकल्येन तत्स्वरूपप्रतिपादनक्षममिति तात्पर्यार्थः ।

यजुरादिभिः साकल्येनाप्रतिपाद्यत्वरूपोक्तार्थे श्लोकं संवादयन् तज्ज्ञानिनः फलं चाह- **तदप्येष इति** । तदपि तत्रापि । पूर्वोक्तार्थेऽपीत्यर्थः । ब्रह्मणः मनोमयकोशस्थस्य सङ्कर्षणरूपब्रह्मणः आनन्दं भेदप्रतिनिधिविशेषात् ब्रह्मण इति षष्ठीप्रयोगः । आनन्दरूपं ब्रह्म विद्वान् । कदाचन बिभेति । मुक्तो भवति । कथं विद्वान्भयहीनो भवतीत्यतो मनोवाचामगोचरत्वेनापरिच्छिन्न-त्वेनेति भावेनोक्तम् - **यतो वाच इत्यादि** । इति शब्दस्य इत्येष श्लोक इति पूर्वेणान्वयः। मनोमयस्थितिप्रकारमाह- **तस्येति** । प्राणमयस्य प्रद्युम्नस्य एष मनोमयः सङ्कर्षणशारीर आत्मा देहिवत्तिष्ठतीत्यर्थः । पूर्वस्यान्नरसमयाख्यस्यानिरुद्धस्य । यः प्राणमयः प्रद्युम्नः शारीर आत्माऽभवत् । तस्य प्रद्युम्नस्येत्यर्थः ।।२.८-९।।

**।। इति मनोमयप्रकरण् ।।**

## उपनिषत्

तस्माद् वा एतस्मान्मनोमयात् । अन्योऽन्तर आत्मा विज्ञानमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य श्रद्धैव शिरः । ऋतं दक्षिणः पक्षः । सत्यमुत्तरः पक्षः । योग आत्मा । महः पुच्छं प्रतिष्ठा ।।२.१०।।

तदप्येष श्लोको भवति । विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च । विज्ञानं देवाः सर्वे । ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद् वेद । तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा । सर्वान् कामान्त्समश्नुत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ।।२.११।।

## भाष्यम्

श्रद्धाख्यं श्रुतिधर्तृत्वाच्छ्रद्धायां तच्छिरः स्मृतम् ।<br>ऋतं ज्ञानततेर्दाता चर्तस्थो दक्षिणः करः ।।<br>वामः सत्यस्थितः सत्यं सतां यस्मान्नियामकः ।<br>योगाख्यं सर्वलोकस्य योगादत्रैव योगगम् ।।<br>मध्यं पुच्छं महोनाम महनीयत्वतस्सदा ।<br>तस्मिन्नानन्दरूपोऽसौ स्थितो नारायणस्सदा ।।

**व्यास**- श्रुतिं धत्त इति श्रद्धा । ज्ञानं ददातीति ऋतम् । मध्यं योगाख्यम् । सर्वस्य लोकस्यात्र योगात् । देशतः कालतः गुणतश्चानन्तत्वमनन्तपदार्थः । तत्कुत इत्यतः पूर्णानन्दत्वाद्व्यतिरेकेण यथाहमित्याहानन्दमयप्रकरणेन । तद्व्याचष्टे- **तस्मिन्नान्दरूप** इत्यादिना ।।२.११-१२।।

**वादि-** तस्य विज्ञानमयस्य शिरः श्रद्धैव । श्रु श्रवणे इति धातोः कर्मण्यौणादिके डतुप्रत्यये कृते श्रुतिरत्र श्रदित्युच्यते । अतः श्रुतेर्धारणाच्छ्रद्धापदवाच्यं सत् श्रद्धायां तिष्ठति । ऋ गताविति धातोः क्विप् प्रत्यये सर्वापहारे कृते ऋपदेनैव ज्ञानमुच्यते । तत्ततं यस्मिन् तत् ऋतं ऋतनामकं विज्ञानमयस्य दक्षिणः पक्षः दक्षिणहस्तः ऋते ज्ञानततौ तिष्ठति । ऋतशब्दस्य नित्यनपुंसकत्वात् पल्लिङ्गेन सम्बन्धो युज्यते । सतां नियामकत्वात् सत्यशब्दवाच्यो विज्ञानमयस्य वामकरः सत्ये सत्यवचने तिष्ठति । सर्वलोकस्य योगात्संयोगाद्योगपदवाच्यो विज्ञानमयस्याऽत्मा मध्यदेहः भगवति मनोयोगाख्ये योगे तिष्ठति । महनीयत्वान्महोनाम्नी विज्ञानमयस्य पुच्छोपमप्रतिष्ठा मह पूजायामिति धातोः भगवदाराधनाख्ये महसि तिष्ठति ।।२.१०-११।।

**श्री.भा-** तस्य श्रद्धैव शिर इत्यादौ. विज्ञानमयनामकवासुदेवाख्य-भगवच्छिर आदेः श्रद्धाद्यभेदप्रतीतिनिरासाय श्रद्धादिशब्दान् विज्ञान-मयनामकभगवच्छिर आदौ योगरूढिभ्यां व्याख्याति- **श्रद्धाख्यमिति** । श्रद्धेत्यास्तिक्यबुद्धिरुच्यते भारती वा । श्रद्धायां स्थितं तच्छिरः श्रुतिधर्तृत्वाच्छ्रुति धारकत्वाच्छ्रद्धाख्यमित्यनेन रूढियोगौ दर्शिताविति ज्ञातव्यम् । ऋतस्थः यथार्थज्ञानस्थः । नियामक इति च शब्दार्थः । सर्वं लोकस्यात्रैव मध्यदेह एव योगात् आश्रितत्वेन सम्बन्धादित्यर्थः। पुच्छमित्यनन्तरं महः सूर्यादितेजःपुञ्जं तत्स्थमित्यपि द्रष्टव्यम् । महनीयत्वतः पूज्यत्वतः । महपूजायामिति धातोः । तस्माद्वा एतस्मात् विज्ञानमयादित्यानन्दमयप्रकरणं व्याचष्टे- **तस्मिन्नित्यादिना** । तस्मिन् विज्ञानमयनामके वासुदेवे । आनन्दरूप इत्यनेन मयटस्तादात्म्यमर्थ इत्युक्तं भवति । नारायण इत्यनेनानन्दमयस्यापि कोशत्वोक्तिः परास्तेति ज्ञातव्यम् ।।२.१०.११।।

**श्री.खं-** विज्ञानमयो वासुदेवः । तेन विज्ञानमयनामकेन वासुदेवेन । एषः मनोमयनामकः संकर्षणः पूर्णः । सवा एष विज्ञानमयः । तस्य विज्ञानमयस्य । अयं मनोमयः । विज्ञानमयनामकस्य वासुदेवस्योपास्त्यर्थं शिरो बाह्वादिकमाह- **तस्येत्यादिना** । तस्य शिरः श्रद्धैव श्रद्धायां स्थितत्वात् श्रुतिधर्तृत्वाच्च श्रद्धानामकम् । दक्षिणः पक्षो दक्षिणबाहुः । ऋतं यथार्थविज्ञानं तत्रस्थत्वात् ज्ञानततेर्दातृत्वाच्च ऋतनामकः । उत्तरः पक्षस्सव्यबाहुः सत्यं सत्यसंस्थितत्वात्सतां नियामकत्वाच्च सत्यनामकः । आत्मा मध्यदेहः योगसंस्थत्वात् सर्वलोकस्थत्वाद्वा तत्रैवाश्रितत्वेन सम्बन्धाद्वा योगनामकः पुच्छं प्रतिष्ठा पदद्वयं महः सूर्यादितेजः पुञ्जसंस्थत्वान्महनीयत्वाच्च महोनामकमित्यर्थः ।। २.१० ।।

महःपुच्छमिति विज्ञानमयनामकभगवत्पुच्छस्य महनीयत्वमुक्तम् । तेनावयवावयविनोरभेदाद्विज्ञानमयस्यापि पूज्यत्वं लब्धम् । तत्कुत इत्याशंकायां सम्प्रदायप्रवर्तकतया समस्तयज्ञादिकर्तृत्वात् ज्येष्ठत्वेन सर्वदेवोपास्यत्वाच्चेत्यभिप्रेत्य तत्रार्थे श्लोकसम्मतिं वक्तुमाह- **तदपीति** । तत्रापीत्यर्थः । महः शब्दोक्तपूज्यत्वोपपादके समस्तयज्ञादिकर्तृत्वे ज्येष्ठत्वेन सर्वदेवोपास्यत्वे च वक्ष्यमाणश्लोको भवतीत्यर्थः। तमेवोदाहरति- **विज्ञानमित्यादिना** । श्रद्धादिस्थशिर आदिमद्विज्ञानमयाधीनं यज्ञादीति तात्पर्यार्थः । तं श्लोकेन वक्ष्यन्नाह । तदप्येष इतीति । पूर्वटीकाकाराः। विज्ञानं विज्ञानमयनामा वासुदेवः कृष्णरामादिरूपेण वैदिकसम्प्रदायप्रवृत्त्यर्थे यज्ञं अश्वमेधादिकं तनुते लोके विस्तरयति करोतीति यावत् । न केवलं यज्ञमेव तनुते किन्तु कर्माणि उक्तातिरिक्तानि नित्यनैमित्तिकान्यपि च तनुते । 'ब्राह्मे मुहूर्ते उत्थाय वार्युपस्पृश्य माधवः । 'दध्यौ प्रसन्नकरण स्वात्मानं तमसः परम्' इति वचनात् । चापिशब्दौ यज्ञकर्मकरणयोः परस्परसमुच्चायकौ । सर्वे देवाः विज्ञानं विज्ञानमयवासुदेवं ज्येष्ठं कालतो

देशतश्चज्यायांसं ब्रह्म यज्ञादिप्रवर्तकत्वादिगुणपूर्णमुपासते । एवं वेत्तुः फलमाह- **विज्ञानं ब्रह्म चेदिति**। चेद्यदि कश्चिद्विज्ञानं विज्ञानमयं वासुदेवं ब्रह्म यज्ञप्रवर्तकत्वादिगुणपूर्णं वेद श्रवणादिना । न केवलं वेदनमात्रेण पूर्यते किन्तु चेद्यदितस्माद्विज्ञानमयाद्वासुदेवात् न प्रमाद्यति कदापि प्रमादयुक्तो न भवति सर्वदा ध्यायतीति यावत् । तर्हि अपरोक्षज्ञानद्वारा प्राक् शरीरे सति सम्पादितान् पाप्मनः अप्रारब्धपापानि हित्वा भस्मसाद्विधाय भोगेन प्रारब्धान्पाप्मनो हित्वा क्षपयित्वा लिंगभंगानन्तरं योग्यान्सर्वान्कामान्सम्यगश्नुत इत्यर्थः । तस्माद्वेत्युक्तस्योपसंहारः- **तस्यैष इति** । पूर्वस्य तस्य मनोमयस्य य एष विज्ञानमयः शारीर आत्मेत्यर्थः । यद्वा मनोमयः पूर्वस्य प्राणमयनामकप्रद्युम्नस्य शारीर आत्माऽभवत् । तस्य मनोमयस्य एषः विज्ञानमयः शारीर आत्मादेहिवदस्तीत्यर्थः ।। २.११ ।।

**वरद**- लक्षणवाक्ये यदनन्तत्वं ब्रह्मण .उक्तं तत्र युक्तित्वेन तस्माद्वा एतस्माद्विज्ञानमयात् इत्याद्यानन्दमयप्रकरणस्य अवतारः । तत्प्रकरणं व्याचष्टे- **तस्मिन्नानन्दरूप इति** ।।२.१०-११।।

**काशी**- तस्य श्रद्धैव शिर इत्यादौ तच्छिर आदेः श्रद्धाद्यभेदप्रतीति-निरासाय व्याचष्टे- **श्रद्धाख्यमिति** । श्रुत्युल्लेख्यास्तिक्यबुद्धिः श्रद्धा तत्र स्थित्वा श्रुतेः प्रामाण्यनिर्वाहकत्वेन धारकत्वात् श्रद्धाख्यमित्यर्थः । ऋतं यथार्थविज्ञानं तत्र स्थित्वा भक्तानां तत्सन्ततिसम्पादकत्वादृतमित्युच्यते तस्य सफलत्वसम्पादक इति चार्थः । सत्यं यथार्थज्ञानविशिष्टकृतिः सतां ज्ञानं वा तत्र स्थित्वा यस्मात् सतां नियामकः सत्प्रवृत्तिप्रदो वामकरः तस्मात्सत्यमित्युच्यते योगः । विमोक्षोपायेश्वरापरोक्षं तद्रं मध्यं योगाख्यं कुतो निमित्तात् अत्रैव योगगे मध्य एव सर्वलोकस्य योगात्सम्बन्धात् सर्वलोकव्याप्तस्वरूपावभासकत्वादिति यावत् ।

पुच्छमित्यस्य महःस्थमित्यादिः महःशब्देन च स्वरूपज्ञानं विवक्षितम् । तत्र स्थितं पुच्छं पादः महनीयत्वात्सदा पूजनीयत्वान्महोनामकमित्यर्थः । अत्र महत्तत्वं मह इति व्याख्यानमसत्, तस्य विज्ञानकोशानन्तर्भूतत्वात् । आनन्दमयप्रकरणं व्याचष्टे- **तस्मिन्निति** । विज्ञानमयकोशस्थवासुदेवे आनन्द इति रूप्यते इत्यानन्दरूपः, पूर्णानन्दत्वेनानन्दमयाख्य इति यावत् ।।२.१०-११।।

**काशी.खं-** तस्मादिति मनोमयात् मनोमयकोशस्थसङ्कर्षणात् विज्ञानमयः विज्ञानमयकोशस्थः प्राचुर्येण विशेषज्ञानात्मा वासुदेवः अत्र ज्ञानस्य प्राचुर्येण विशेषविषयकत्वं नाम स्वपरगतप्रातिस्विकाशेषविशेषविषयकत्वेन तद्विषये निरवधिकस्पष्टत्वादिकं चेति ज्ञातव्यम् । तेन विज्ञानमयेन एष मनोमयः स एष विज्ञानमयः अयं मनोमयः अन्यदुक्तार्थः । तस्य विज्ञानमयस्य श्रद्धाश्रुतिधारकं श्रुत्युक्तास्तिक्यबुद्धिरूपश्रद्धायां स्थित्वा श्रुतिप्रामाण्यनिर्वाहकमिति यावत् । तदेव शिरः ऋतं यथार्थज्ञाने स्थित्वा भक्तानां यथार्थज्ञानसन्ततिप्रदो दक्षिणो बाहुः सत्यम् । सज्ज्ञाने स्थित्वा सतां नियामकं सत्प्रवृत्यादिप्रदमिति यावत् । वामो बाहुः योगः अपरोक्षज्ञानरूपमोक्षोपाये स्थित्वा सर्वैर्युज्यमानः सर्वावभासक इति यावत् । आत्मा मध्यदेहः महः स्वरूपप्रकाशे स्थित्वा महनीयमग्रं पादद्वयं भक्तानां श्रद्धादिस्वरूपाविर्भावान्तप्रदो वासुदेव इति तात्पर्यार्थः ।।२.१०।।

तत्रैष श्लोकोऽस्ति तमुदाहरति- **विज्ञानमिति** । विज्ञानश्रद्धाद्यङ्गक-वासुदेव एव यज्ञं वैदिकं कर्म लौकिककर्माण्यपि तनुते प्रवर्तयति । सकलवैदिकलौकिककर्मप्रवर्तक इत्यर्थः । यद्वा यज्ञं कर्म यज्ञज्ञानयज्ञादि-रूपं प्रधानसाधनं तदङ्गकर्माण्यपि तनुत इत्यर्थः । अत एव सर्वप्रवर्तक-त्वात्सर्वे देवा ब्रह्मादयो विज्ञानं वासुदेवं ज्येष्ठमनादिब्रह्म पूर्णमुपासते तदुपास्तिफलमाह यो विज्ञानमयं ब्रह्म वेद जानाति तस्माद्विज्ञानमयान्न

प्रमाद्यति । तं न विस्मरति । यद्वा तस्माद्वेदनान्न प्रमाद्यति नान्यथा ज्ञानं प्राप्नोति तर्हि स तदपरोक्षज्ञानं प्राप्य शरीरे पाप्मनो हित्वा शरीरेण सर्वानिष्टकर्माणि विहाय मुक्तः सन्निति यावत् । सर्वान् कामान् मौक्तिकविषयान् समश्नुते तेन सह भुङ्क्ते इत्यर्थः । इति श्लोक इति पूर्वेणान्वयः । य एष विज्ञानमयः । इति विज्ञानमयप्रकरणम् ।।२.११।।

**रा.खं-** स्वपरगताशेषविशेषविषयकत्वरूपविज्ञानत्वमपि लक्षण-वाक्यस्थज्ञानपदस्यार्थ इति भावेन तद्विवृणोति- **तस्माद्वा एतस्मादित्यादिना** । प्राग्वद्व्याख्या ध्येया । विशेषज्ञानप्राचुर्येण निमित्तेन विज्ञानमयशब्दाभिधेयो विज्ञानमयकोशस्थो वासुदेवः तेन विज्ञानमयाख्येन वासुदेवेन एष मनोमयो निश्छिद्रत्वेन पूर्णः। स वा इत्यादि प्राग्वत् । अन्वयं पुरुषविध इत्यनन्तरं तत उद्धृत इत्यपि ग्राह्यम् । तस्यावयवस्थानान्याह । तस्य विज्ञानमयस्य वासुदेवस्य शिरः श्रुतिधर्तृत्वयोगेन ऋतनामकः ऋतस्थो दक्षिणबाहुः । सतां नियामकत्वहेतुना सत्यनामकः सत्यस्थः सव्यबाहुः सर्वलोकयुक्तत्व-हेतुना योगनामको योगस्थो मध्यदेहः । महनीयत्वतो महर्नामकौ पुच्छमिवान्तिमौ प्रतिष्ठा । प्रतिष्ठौ पादाविति । श्रद्धा ऋतमित्यादि । विज्ञानमयाख्यवासुदेवाधीनमिति तात्पर्यार्थः । तदेव श्लोकेन व्यनक्ति - **विज्ञानमिति** । विज्ञानमयकोशगतः तन्नामा वासुदेवः यज्ञं समुदायाभिप्रायं यजमानऋत्विगादिषु सर्वत्र स्थित्वा यज्ञान् तदङ्गकर्माण्यपि च तनुत इत्यर्थः । विज्ञानं विज्ञानमयं वासुदेवं ब्रह्म गुणपूर्णं चेद्वेद वेद चेत् साक्षात्करोति चेदित्यर्थः । तस्माज्ज्ञानात् न प्रमाद्यति न विस्मरति च इत्यर्थः । शेषं स्पष्टं तस्यैष इत्यादि प्राग्वत् ।।२.१०-११।।

**।। विज्ञानमयप्रकरणम् ।।**

## उपनिषत्

तस्माद्वा एतस्माद् विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा ।

तदप्येष श्लोको भवति । असन्नेव स भवति । असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद् वेद । सन्तमेनं ततो विदुरिति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य ॥२.१२॥

## भाष्यम्

शिरः प्रिये स्थितं तस्य परेयं प्रियनामकम् ।
मोदप्रमोदयोर्बाहू मोदनाच्च प्रमोदनात् ॥

मोदप्रमोदनामानावानन्दश्चाततत्वतः ।
मध्यमानन्दसंस्थं च ब्रह्म सृष्ट्या तु बृंहयेत् ॥

पुच्छं प्रधानवायौ च ब्रह्माख्ये संस्थितं सदा ।
अभेदोऽप्यविशेषोऽपि परमैश्वर्ययोगतः ॥

देहदेहिवदेवासौ पञ्चधाऽवस्थितो हरिः ।
बहिस्थो देहवद्विष्णुरन्तस्थो देहिवत्स्मृतः ॥

अन्तर्व्याप्तिविशेषेण न त्वशक्तत्वतो बहिः ।
सर्वेऽपि पुरुषाकाराः उत्तरात्पूर्वसम्भवाः ॥

**उत्तरैः पूरिताः पूर्वे निश्छिद्रत्वेन सर्वशः ।**
**अत्तृत्वं च प्रणेतृत्वं बोधो विविधवेत्तृता ।।**

**आनन्दश्च यतः पूर्णस्ततोऽन्नादिमयास्स्मृताः ।**
**अत्त्यादिदास्ते प्रत्येकं सर्वे सर्वगुणा अपि ।।**

**नामभेदस्ततस्तूक्तः सर्वनामवतामपि ।**
**पञ्चरूपं च तद् ब्रह्म जीवादन्यन्न विद्यते ।।**

**इति ये तु विजानन्ति तेऽसन्तस्तमआलयाः ।**
**जीवादन्यत्परं ब्रह्म पञ्चरूपं च ये विदुः ।**
**सन्तस्त इति विज्ञेया मोक्षयोग्या हि ते ध्रुवम् ।।**

**व्यास**- परेयं परैः प्राप्यत्वात्प्रियनामकमित्यर्थः । मध्यमानन्दनामकं आनन्दस्थं च । कुतो मध्यमानन्दनामकमित्यत आह- **आततत्वादानन्द इति योज्यम्** । ब्रह्म पुच्छमित्यत्र ब्रह्मशब्देन किमुक्तमिति न ज्ञायते अतो व्याकरोति- **ब्रह्मेति** । योजना तु पुच्छं सृष्ट्या बृंहयेदतो ब्रह्मनाम । देहस्थितब्रह्माख्यप्रधानवायौ पुच्छं संस्थितम् । पूर्वस्य यः शरीर आत्मा । तस्यैष एव शारीर आत्मेति शरीरशारीर्युक्त्या भेदः प्रतीयते तां निवारयन्नाह- **अभेदो भेदरहितोऽपीति** ।

इन्द्रार्जुनादिवदविशेषो विशेषरहितोऽपि को देहवत्को देहिवदित्यत आह- **बहिस्थ इति** । वयं यथा शरीरं विहाय केवलं बाह्यादाने अशक्तत्वात् देहीत्यर्थः । स वा एष पुरुष विध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तेनैष पूर्ण इति पञ्चस्वपि प्रकरणेषु स्थितवाक्यं क्रमेण व्याचष्टे- **सर्वेऽपीत्यादिना** । उत्तरादुत्तरस्य पुरुषविधत्वात् पूर्वस्य पुरुषविधत्वसम्भवः । स्पष्टमन्नमयादिशब्दार्थानाह- **अत्तृत्वमिति** । नन्वत्तृत्वादिगुणाः पञ्चानामपि सन्ति । अतोऽन्नमयादिनामान्यपि । तथापि किं

निमित्ततो नामभेद इत्यत आह- **अत्त्यादिदा इति** । यद्यपि अन्नमयादीनि पञ्चापि ब्रह्माणि जीवाद्भिन्नानि चेति वस्तुगतिः । अन्नात् खल्विमानि भूतानि जायन्ते इत्यादिना ब्रह्मलक्षणवत्त्वादित्युक्तत्वात् । तथापि तानि ये न ब्रह्मेति विदुः ये च ब्रह्मेति विदुस्तेषां फलमाह- **असन्नेवेति** । जीवादन्यत् ब्रह्म असन्नास्तीति वेद चेदसन्नेव दुःख्येव भवति । विपर्येणोत्तरार्धं योज्यम् । तं श्लोकं व्याचष्टे- **पञ्चरूपमिति** । असत्त्वं सत्त्वं च विशदतयोक्तं तमआलया मोक्षायोग्या इति ।।२.१२।।

**वादि-** विज्ञानमयस्यान्तरात्मा नारायणाख्यः पुरुषः आनन्द-प्रचुरत्वादानन्दमयः । तस्याऽनन्दमयस्य शिरः पृ पालनपूरणयोरिति धातोः पूर्ववत्कर्त्रर्थे क्विपि कृते सर्वस्य लोपे सति पृषदमेव परवाचकं भवति । एवं च पृणा परेण इयम् इति व्युत्पत्या प्रियपदवाच्यं सत् प्रिये उक्तव्युत्पत्त्या प्रिये उक्तव्युत्पत्त्या विषयप्राप्ये सुखे तिष्ठति तदन्तस्तिष्ठतीत्यर्थः । मोदनात् ध्याने परोक्षज्ञानजनितसुखदानात् प्रमोदनादपरोक्षज्ञाने सति ततोऽप्यतिशयितसुखदानाच्च मोदप्रमोद-नामानावानन्दमयस्य दक्षवामकरौ मोदे प्रमोदे च तिष्ठतः । वरदायक-दक्षिणकरादपि मोक्षाभयदायकवामकरस्य प्रकृष्टानन्ददायकत्वद्वामकरस्यैव प्रमोददातृत्वमुचितम् । आत्मा मध्यदेहः आ समन्तात् साधुहृदये स्थित्वा नन्दयतीति व्युत्पत्त्या आनन्दपदवाच्यः आनन्दे अङ्गोपाङ्गैः पूरितपूर्णानन्दसमुदायैः तिष्ठति । पुच्छं प्रतिष्टा 'यत्राऽनन्दाश्च मोदाश्च मुदः प्रमुद आसते । कामस्य यत्राप्ताः कामाः तत्र माममृतं कृधि' इति श्रुत्युक्तपञ्चविधानन्दानां मध्ये चतुर्णामुक्तत्वादुर्वरितमुख्यानन्दरूपः पादः 'पद्भ्यां भूमिः' इति श्रुतेः सकलप्राण्याधारभूतः सकलजनेन सकलप्राण-बृंहणहेतुत्वात् ब्रह्मनामकः सन् ब्रह्मणि सर्वेऽभ्योप्यतिशयितशतानन्द-बृंहितत्वाद् ब्रह्मशब्दवाच्ये प्रधानवायौ तिष्ठतीत्यर्थः ।

एवं च स्पर्शनगमनादिव्यापारहेतुतया शिरःपाण्यादिसर्वाङ्गव्याप्तत्वं जीवनहेतुतया शरीरगतप्राणादिप्रेरकत्वं ज्ञानहेतुतया वेदपञ्चरात्रप्रवर्तकत्वं तैरुद्बोधितविशिष्टज्ञानोदये सति मुक्तेरन्तरङ्गभूतश्रद्धादिजनकत्वम् अन्ते पञ्चविधानमन्नमयादीनां देहव्याप्तमूर्तित्वं प्राणादिव्याप्तमूर्तित्वं ऋगादिव्याप्तमूर्तित्वं श्रद्धादिशुभगुणव्याप्तमूर्तित्वम् आनन्दमयमूर्तित्वं च श्रुतिः प्रकरणपञ्चकेन प्रतिपादयतीति वाक्यसमुदायस्याभिसन्धिरनुसन्धेयः ।

तत् पञ्चविधं ब्रह्मोद्दिश्य एष श्लोको भवतीत्यर्थः । प्रागुक्तम् पञ्चविधं ब्रह्म असत् सतोऽन्यत् असदविद्यमानमिति वेद चेत् स असन् सन्न भवतीत्यसन् असज्जीव एव भवति । अथ तत् आनन्दमयाख्यं पञ्चमं रूपमुद्दिश्य एष श्लोको भवति । एतत् आनन्दमयाख्यं पञ्चमं रूपम् असत् ब्रह्म न किन्तु पुच्छमेव ब्रह्मेति वेद चेत् स असन्नेव भवतीति तत्रोक्तश्लोकवत्पञ्चरूपविषयतया श्लोकस्य योजना द्रष्टव्या । स्वतोऽन्यद् ब्रह्मास्ति पञ्चरूपमपि ब्रह्मास्ति ब्रह्मतयैवास्तीति च वेद चेदेवं वेत्तारं ततः ईदृशतत्त्वज्ञानात् सन्तं विदुरित्यर्थः ।।२.१२।।

**श्री.भा**- तस्य प्रियमेव शिर इत्यादौ आनन्दमयनामकनारायणाख्यभगवच्छिर आदेः प्रियाद्यभेदप्रतीतिवारणाय प्रियादिशब्दानानन्दमयनामकभगवच्छिरआदौ योगरूढिभ्यां व्याख्याति- **शिरः प्रिये स्थितमित्यादिना** । प्रिये वस्तुनि परेयं परैः संसारिविलक्षणैर्मुक्तैरुत्तमैर्वा इयं प्राप्यमित्यर्थः । परेति प्रशब्दार्थः । प्रकारस्थाकारलोपः । बाहू मोदप्रमोदौ अपकृष्टप्रकृष्टविषयोत्थावानन्दौ मोदप्रमोदौ। तयोः संस्थिताविति शेषः । आनन्दः स्वरूपभूतः । तत्र संस्थं मध्यम् । आततत्वतो निमित्तादानन्द इत्युच्यत इति योज्यम् । पुच्छं पादद्वयं तु सृष्ट्या पृथिव्यादिलोकान् बृंहयेद्यतो अतो ब्रह्मेत्युच्यत इत्यर्थः ।

यद्वा तुशब्दः सृष्टौ विशेषद्योतकः । तथाच भक्तानां सृष्ट्या मुक्तिसृष्ट्या मोक्षदानेनेति यावत् । बृंहयेत् ज्ञानानन्दैः बृंहयेद्यतोऽतः पुच्छं पादद्वयं ब्रह्मेत्युच्यत इत्यर्थः । यथोक्तं बृहद्भाष्ये । 'स्वित्यानन्दः समुद्दिष्टो वरीति ज्ञानमुच्यते । मुक्तिदानेन तज्ज्ञानात्सुवरस्य पदद्वयम्' इति । अथ कस्मादुच्यते ब्रह्मेति बृहति बृंहयति चेति श्रुतिरिति भावः । रूढिमप्याह- **प्रधानवायाविति** । देहसंस्थे मुख्यवायावित्यर्थः । तस्यैष एव शारीर आत्मा यः पूर्वस्येत्यत्रान्नमयप्राणमयादीनां शरीरशरीरिभावोक्त्या भेदो नियम्यनियामकभावादिरूपो विशेषश्च प्रतीयते तदयुक्तम्। एकमेवेत्यादि- श्रुतिविरोधादित्यत आह- **अभेदोऽपीति** । भेदरहितोऽपीत्यर्थः । अविशेषोऽपि नियम्यनियामकभावादिविशेषरहितोऽपीत्यर्थः । इन्द्रार्जुनादि- वद्विशेषरहितोऽपीत्यर्थ इति पूर्वटीकाकाराः । परमैश्वर्ययोगत इत्युपलक्षणम्। विशेषबलाच्चेति द्रष्टव्यम् । को देहवत्कश्च देहिवदित्यत आह- **बहिःस्थ इति** । अन्नमयादिरित्यर्थः । अन्तस्थितः प्राणमयादिः ।

ननु यथा अस्मदादीनां देहसम्बन्धं विना बहिःस्थिताश्माद्यादाने असमर्थत्वाद्देहसम्बन्धोऽपेक्षितः एवं प्राणमयादिरूपस्य हरेरप्यन्नमयादि- रूपदेहसम्बन्धं विना बहिःस्थितवस्त्वादानेऽसमर्थत्वाद्देहित्वं किमित्य- पेक्षायामाह- **अन्तर्व्यापीति** । अन्नमयाद्यन्तर्व्याप्तिविशेषेणैव हरिर्देही बहिःस्थितत्वमात्रेणैवान्नमयादेर्देहत्वमित्यपि द्रष्टव्यम् । बहिर्बहिष्ठवस्तुविषये तदादानादाविति यावत् । अशक्तत्वतो देही जात इति तु नेत्यर्थः । प्राणमयादिप्रकरणचतुष्टयगतस्य सवा एष पुरुषविध एवेत्यस्यार्थमाह- **सर्वेऽपीति** । प्रकरणचतुष्टयगतस्य तस्य पुरुषविधतां अन्वयं पुरुषविध इत्यस्य तात्पर्यमाह- **उत्तरादिति** । उत्तरादानन्दमयादेः सकाशात्पूर्वस्य विज्ञानमयादेः सम्भवः प्रादुर्भावो भवतीत्यर्थः । नारायणादिरूपैर्वासुदेवादि- रूपाणामभिव्यक्तिरिति भावः । प्रकरणचतुष्टयगतस्य तेनैषपूर्ण इत्यस्यार्थ-

माह- **उत्तरैरिति** । पूर्वे सर्वशः सर्वे विज्ञानमयादयः उत्तरैरानन्दमयादिभिर्निश्छिद्रत्वेन निश्छिद्रतया निरवकाशतयेति यावत् । पूरिताः पूर्णा इत्यर्थः । स्पष्टमन्नमयादिशब्दार्थानाह- **अत्तृत्वं चेत्यादिना**। च शब्देनाद्यत्वं संग्रहः । अत्तृत्वमद्यत्वं चान्नशब्दार्थः । प्राणशब्दार्थः प्रणेतृत्वम् । मनु अवबोधने इति धातोः बोधो मनोमयशब्दार्थः । विज्ञानमयशब्दार्थे विविधवेत्तृतेति। तत्र वीत्यस्यार्थो विविधेति । ज्ञानशब्दार्थो वेत्तृतेति । मयटामर्थः पूर्णा इति । नन्वन्नमयादीनां पञ्चानामपि प्रत्येकमत्तृत्वादिसर्वगुणोपेतत्वेन प्रत्येकमन्नमयादि सर्वनामकत्वात्कथमन्नमयादीनां प्रत्येकमत्तृत्वादिगुणोक्तिः तत्प्रत्युक्तान्नमयादीनामभेदश्चेत्यत आह- **अत्त्यादिदास्त इति** । अपि यद्यपि प्रत्येकं ते सर्वे सर्वगुणाः अत्तृत्वादिसर्वगुणवन्तः तथापि प्रत्येकं अत्त्यादिदाः स्वोपासकानां रुद्रादीनामत्तृत्वादिदाः स्वस्य तदभावे परस्मै तद्दानानुपपत्तेरिति न्यायेनाऽत्तृत्वाद्युपेता इति यावत् । उच्यन्ते ततः स्वोपासकानामत्तृत्वादिगुणदातृत्वादेव सर्वनामवतामपि नामभेदः उपनिषदुक्तः उपपद्यत इति भावः । असन्नेव स भवति असद्ब्रह्मेति वेदचेदित्यस्यार्थमाह- **पञ्च रूपश्चेति** । असदित्यस्यार्थो जीवादन्यन्न विद्यत इति । ततश्च दुःखीति यावत् । 'अभाववाचकाः शब्दाः सर्वे ते दुःखवाचका' इति गीतातात्पर्यवचनात् । असन्नेव स भवतीत्यस्य तात्पर्यमाह । तेऽसन्त इति दुःखिन इत्यर्थः । तत्र हेतुस्तम आलया इति । तम आलयः अन्ते आश्रयो येषां ते तथा । तमसि मग्ना इत्यप्याहुः । यत इतिशेषः । यतोऽतस्तेऽसन्त इति सम्बन्धः । 'अस्ति ब्रह्मेति चेद्वेद' इत्यस्यार्थमाह- **जीवादन्यदिति** । ततश्च सुखीति यावत् । 'सद्भाववाचिनः शब्दाः सर्वे ते सुखवाचका' इति वचनात् । सन्तमेनं ततो विदुरित्यस्यार्थः सन्तस्त इतीति । सन्तः सुखिन इत्यर्थः । तत्र हेतुः मोक्षयोग्या हीति । हि यस्मात् ध्रुवं निश्चयेन मोक्षयोग्यास्तस्मात्सन्तस्त इति विज्ञेया इति सम्बन्धः ।। २-१२ ।।

**श्री.खं-** आनन्दमयो नारायणः तेन आनन्दमयेन एषः विज्ञानमयः पूर्णः। एषः आनन्दमयः तस्यानन्दमयस्य अयं विज्ञानमयः। आनन्दमयनामक-नारायणस्योपास्त्यर्थं शिरो बाह्वादिकमाह- **तस्येत्यादिना**। तस्य शिरः प्रियं प्रिये स्थितत्वात्परैरीयत्वात्प्राप्यत्वाच्च प्रियनामकं दक्षिणः पक्षो दक्षिणबाहुः मोदः अपकृष्टविषयोत्थानन्दस्थत्वान्मोदनाच्च मोदनामकः। उत्तरः पक्षः सव्यबाहुः प्रमोदः प्रकृष्टविषयोत्थानन्दस्थत्वात्प्रमोदनाच्च प्रमोदनामकः। आत्मा मध्यदेहः आनन्दः स्वरूपभूतः तत्रस्थत्वादातत्वा-च्चानन्दनामकः। पुच्छं प्रतिष्ठा पादद्वयं ब्रह्म देहसंस्थे ब्रह्माख्ये प्रधानवायौ संस्थितत्वात् भक्तानां मोक्षदानेन ज्ञानानन्दौ बृंहयेत् यतोऽतश्च ब्रह्मनामकमित्यर्थः। एवमन्नमयादीनां पञ्चानामपि येऽन्नं ब्रह्मेत्यादिना ब्रह्मशब्दाभ्यासाद्ब्रह्मत्वमेव न जीवत्वं कोशत्वं वा। यथोक्तं सूत्रकृता आनन्दमयोभ्यासादिति। उक्तं चानुव्याख्याने 'येऽन्नं ब्रह्मेत्यादि-रूपादभ्यासात्तैत्तिरीयके। अन्यासु चैतद्रूपासु शाखास्वपि सहस्रशः। आनन्दमय इत्याद्यैः शब्दैर्वाच्यो हरिः स्वयम्' इति। एवमन्नमयादि-पञ्चरूपं ब्रह्म जीवादन्यन्नास्तीति ये विदुः ये च जीवादन्यदेवेति विदुः तदुभयोः फलं वक्तुमाह- **तदपीति**। तत्रापि पञ्चरूपस्य ब्रह्मणो जीवादनन्यत्ववेदने तदन्यत्ववेदने च यत्फलं तद्विषये एषः वक्ष्यमाणः श्लोको भवतीत्यर्थः। तमेवोदाहरति- **असन्नेवेति**। ब्रह्म अन्नमयादिपञ्चरूपं असत् जीवादन्यत्वेन विद्यमानं न भवति दुःखीति यावत्। इति चेत् यदि वेद। अत्र सर्वत्रापि एकवचनं बहुवचनार्थे। विदुः। तर्हि सः ते वेत्तारो सन्नेव भवति 'सद्भाववाचकाः शब्दाः सर्वे ते सुखवाचकाः। अभाववाचकाः शब्दाः सर्वे ते दुःखवाचका' इति वचनेन सच्छब्दस्य सुखार्थकत्वादसन् असन्तो दुःखिनो भवन्ति। तम आलयाः भवन्तीति यावदिति ज्ञानिनो विदुरिति सम्बन्धः। तथा ब्रह्म अन्नमयादिपञ्चरूपं

अस्ति जीवादन्यत्वेन सुखि इति चेद्यदि वेद विदुः तर्हि एतान् वेत्तॄन् ततः सम्यग्वेत्तृत्वादेव । सन्तं सतः । सुखिनः मोक्षयोग्यानिति यावत् । इति ज्ञानिनो विदुरित्यर्थः । इति श्लोको भवतीति सम्बन्धः । तस्माद्वेत्युक्तमुपसंहरति- **तस्यैष एवेति** । पूर्वस्य तस्य विज्ञानमयस्य य एष आनन्दमयः शारीर आत्मेत्यर्थः । यद्वा यो विज्ञानमयः पूर्वस्य मनोमयनामकसंकर्षणस्य शारीर आत्माऽभवत् । तस्य विज्ञानमयस्य एष आनन्दमयः शारीर आत्मेत्यर्थः ।। २.१२ ।।

**वरद-** कथं नारायणस्य शिरसः प्रियनामकत्वमित्यत आह - **परेयमिति** । आनन्दमयस्य पुच्छं पाद प्रधानवायौ ब्रह्माख्ये चतुर्मुखे च संस्थितं कथं भूतं पुच्छम् । ब्रह्मनामकम् । कथं तद्ब्रह्मेत्यत्र आह- **सृष्ट्या बृंहयेदिति** । ननु अन्नमयादयः परमेश्वरूपाणीति न युज्यते । पञ्चस्थानेष्वपि तस्यैष एव शारीर आत्मा इत्यादिना शरीरशरीरिभाव-कथनानुपपत्तेरित्यत आह- **अभेदोऽपीति** । अभेदेऽपीन्द्रार्जुनादौ सुखानुसन्धानादिविशेषोऽस्ति । सोऽप्यत्र ज्ञापयितुं अविशेषोऽपि इत्युक्तम् । नन्वेवं सति को देहि । कश्च तस्य देह इत्यत आह - **बहिस्थेति** ।

ननु परमेश्वरो देहीति न युज्यते । तथात्वे यथा लोके देहिनो देहमन्तरेण दूरस्थवस्तुतत्सरणादौ सामर्थ्याभावः । एवमस्यापि देहाद्बहि-स्सामर्थ्याभावप्रसङ्गादित्यत आह- **अन्तरिति** । यथा लोके जीवानां शरीरान्तश्चैतन्यव्याप्त्या शरीरत्वं एवमस्यापि बहिः सामर्थ्यसद्भावेऽ-प्यन्नमयादेरन्तर्विशेषप्राप्तिसादृश्यमात्रेण देहित्वं युज्यत इति भावः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविध इति पञ्चस्थानगतमपि वाक्यं युगपदेव व्याख्याति सर्वेऽपीति ।

तस्य पुरुषविधताम् इत्यस्यायमर्थः । उत्तरोत्तरस्य पुरुषविधताम् पुरुषप्रकारताम् अनुसारेण अयं पूर्वपूर्वोदितः पुरुषविध इति । अत्र युक्तिमाह - **उत्तरादिति** । उत्तरोत्तररूपात् पूर्वपूर्वरूपस्य उत्पद्यमानत्वात् उत्तरप्रतियोगिकसादृश्यवत्त्वं पूर्वपूर्वस्योपपद्यत इत्यर्थः । तेनैष पूर्णः इत्यस्यार्थः- **उत्तरैः पूरिता इति** । मनोमयविज्ञानमयादिशब्दानां निर्वचनस्य प्रागकृतत्वाद् तन्निर्वचनं अन्नमयप्राणमयशब्दनिर्वचनानुवाद-पूर्वकमाह- **अत्तृत्वं इत्यादिना** ।

ननु भगवद्रूपाणां सर्वेषामपि अत्तृत्वादिगुणवत्त्वसाम्यात् कथमेकस्य अत्तृत्वमेकस्य प्रणेतृत्वं इत्यादि विशेषव्यवहार इत्यत आह - **अत्त्यादिदा इति** । अत्ति अत्तृत्वमादि येषां प्रणेतृत्वादिगुणानां ते अत्त्यादयः तान् ददतीति अत्त्यादिदाः । यद्यप्येतेऽन्नमयादयः सर्वेऽप्यत्तृत्वादिगुणवन्तः सर्वनामानश्च । तथाऽप्यन्नमयस्योपासकस्य विशेषेणात्तृत्वादिगुणदः प्राणमयः प्रणेतृत्वादिगुणद इत्यादि विशेषव्यवहार इत्यर्थः । न चैवं अन्नमयादीनां एकैकस्मादेकैकस्यान्यत्वान्तरत्वादिकथनात् कोशादित्वमेवेति मन्तव्यमित्युच्यते असन्नेव स भवति इति श्लोकेन । तस्यार्थः- **पञ्चरूपमिति** ।।२.१२।।

**काशी-** असावनिरुद्धादिपञ्चव्यूहान्तर्गतो नारायणः सदा स्थितः तस्य शिरः प्रियं उपकारजन्यसुखे स्थितं परैः ईयते प्राप्यते इति परेयं तदेव वर्णलोपेन प्रियनामकम् । मोदप्रमोदयोरप्रकृष्टप्रकृष्टविषयजन्यसुखयोर्बाहु-दक्षिणवामौ मोदप्रमोददातृत्वान्मोदप्रमोदनामानौ । मध्यं जीवस्वरूप-भूतानन्दसंस्थं आततत्वाद्देशतः कालतश्च व्याप्तत्वादानन्द इत्युच्यते । ब्रह्माख्ये प्रधानवायौ सदा प्रेरकतया स्थितं पुच्छं यतः सृष्ट्या विशेषतो जगत् बृंहयत् वर्धयत् अतो ब्रह्मेत्युच्यते । ननु प्रधानवायोरानन्दमय-कोशानन्तर्भूतत्वात् तत्स्थस्य कथमानन्दमयशिरस्त्वमुच्यत इति चेन्न ।

तस्यानन्दरूपत्वात् । न च वायुशब्देन तद्देहविवक्षायां न तस्यानन्दरूपत्वं, तत्स्वरूपविवक्षायां तस्य मध्यदेहत्वमेवोक्तमिति वाच्यम् । तत्तज्जीवे देहगतानन्दमयकोशे तत्तज्जीवस्वरूपानन्दगतस्य मध्यदेहत्वेन तत्प्रेरक-प्रधानवायुस्वरूपांशानन्दस्थत्वेनोपपत्तेः । न चैवं प्रधानवायुस्थानन्दमय-स्थस्य स्थानालाभ इति वाच्यम् । स्वरूपानन्दे पुच्छस्थितिसम्भवादिति प्रतिभाति अधिकं तु महान्तः प्रष्टव्याः । एतेनान्नमयादीनां चतॄणामन्नादि-विकारत्वेन भौतिकत्वात् तत्प्रायपाठादानन्दमयोऽपि भौतिक एव किन्तु तत्पुच्छमेव **ब्रह्मेति** मायावादिव्याख्यानमपास्तम् । पञ्चानामपि ब्रह्मत्वेन प्रायपाठविरोधाप्रसक्तेः । अन्यथान्नमयाद्युपासनस्य मोक्षफलकत्वाद्युक्ति-विरोधात् । कोशमन्त्रोपासनस्याफलत्वात् । ब्रह्मत्वेन तदुपासनस्य च मिथ्योपासनत्वेनानर्थफलत्वाच्च । प्रायपाठविरोधादानन्दमयस्याब्रह्मत्वं वदतः पुच्छब्रह्मत्वं व्याहतमेव, भौतिकावयवप्रायपाठविरोधादिति दिक् ।

ननु 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इत्यन्नमयादीनां देहदेहिभाव उच्यते स च परस्परापेक्षप्रवृत्तित्वाभावाच्च लोके भिन्नयोः परस्परापेक्ष-प्रवृत्तिकयोरेव देहदेहिभावदर्शनादित्यादिशङ्कां परिहरति- **अभेदोऽपीति** । यद्यप्यसावन्नमयादिरूपो हरिः परस्परं भेदरहितः परस्परापेक्षप्रवृत्तित्वादि-विशेषरहितश्च तथापि अचिन्त्यैश्वर्यात्तदधीनविशेषतश्च देहदेहिवदेवावस्थितः पञ्चधेत्यनेनान्योऽन्तर आत्मेत्यन्यशब्दोऽपि विशेषापेक्षयेत्युक्तं भवति । यथोक्तमनुव्याख्याने 'अभेदेऽपि विशेषेणैवान्य इत्युदितो हरिः' इति पञ्चसु को देहवत्कश्च देहिवदित्यत आह- **बहिष्ठ इति** । बहिष्ठोऽन्नमयादिः, अन्तस्थः प्राणमयादिः । नन्वेवं सर्वेषामपि विष्णुरूपाणां व्याप्तत्वाद्देहित्वं च स्यादतोऽस्मादादिवत् परस्परानपेक्षया प्रवृत्त्युक्तत्वादेव देहदेहिवत्वं वाच्यं तथा चाविशेषोऽपीत्युक्तमयुक्तमत आह- **अन्तर्व्याप्तीति** । अन्नमयादिरूपविशेषस्य अन्तः प्रदेशे प्राणमयादिरूपविशेषस्य व्याप्ति-

विशेषेणैव तयोर्देहदेहिवत्वं नतु बहिरन्तस्थयोः परस्परव्यतिरेकेण प्रवृत्त्यशक्तत्वादित्यर्थः । प्राणमयादिप्रकरणगतानां 'स वा एष पुरुषविध एव' इत्यादीनां तात्पर्यमाह- **सर्वेऽपीति** । पुरुषविधशब्दानां व्याख्यानं पुरुषाकारा इति तेषु उत्तरादानन्दमयादितः पूर्वस्य विज्ञानमयादेः प्रादुर्भाव इत्यनेन तस्य पुरुषविधतामिति वाक्येषु तच्छब्दोत्तरोक्त इदंशब्दः पूर्वोक्तस्य परामर्शक उद्भूत इति चाध्याहार्यमिति सूचयति- **तेनैष पूर्ण इति** । वाक्यतात्पर्यमाह- **उत्तरैरिति** । उत्तरोक्तैरानन्दमयादिभिः सर्वे पूर्वोक्ता विज्ञानमयादयः सर्वशः सर्वावयवेषु निश्छिद्रत्वेन व्याप्तिविशेषेण पूरित इत्यर्थः । यद्यपि 'तेनैष पूर्णः' इति वाक्यमेवादौ व्याख्येयं तथाप्युत्तरैः पूरिता इत्यनन्तरं सर्वेऽपीत्युक्तौ पूरितत्वेनोक्तानां चतुर्णामिवापाततः पुरुषाकारत्वं प्रतीयेतेति व्यत्यस्य व्याख्यातमिति ध्येयम् । अत्रान्नमयादिपञ्चकोशनियामकान्नमयादिपञ्चरूपाणां निश्छिद्रतया नियम्यकोशाभिव्याप्तेरावश्यकत्वेऽपि तच्छेदभेददौर्लक्षण्यप्रयुक्तच्छेदादि-दोषापत्तिः परमैश्वर्ययोगतः परिहर्तव्याः ।

यद्यपि अत्तृत्वात् सर्वलोकानामित्यादिना प्रचुरं मय इत्युक्तमित्युक्त्या च प्रचुरात्तृत्वादिकमन्नमयादिशब्दार्थ इति लभ्यते । तथापि तत्र यथा कथञ्चित्प्राचुर्यमात्रप्रतीतिनिरासाय विवक्षितार्थं विस्पष्टमाचष्टे- **अत्तृत्वमित्यादिना** । तथाच शब्दाद्यत्वं चान्नशब्दार्थः बोधः सामान्यज्ञानं विविधवेत्तृताविशेषज्ञानं- **पूर्णा इति** । मयडर्थप्राचुर्यविवरणम् । अन्नादिमया इत्यत्रान्नमादिः येषां ते अन्नप्राणादयः शब्दास्तत्पूर्वका मयशब्दा येषामिति बहुव्रीहिः । अन्नमयादिशब्दवाच्या इत्यर्थः । ननु भगवद्रूपाणामभेदेन सर्वेषामपि सर्वगुणवत्वात्तत एव सर्वनामवत्वप्राप्तेः कथमत्र नाम भेद इत्यत आह- **अत्यादिदा इति** । यद्यपि अन्नमयादयः सर्वे अत्तृत्वादिसर्वगुणाश्रयास्तत एव सर्वनामवन्तश्च तथापि प्रत्येक-

मन्नमयादिप्रत्येकरूपेणैव । स्वोपासकाधिकारिविशेषाणगतात्तृत्वादि-गुणव्यक्तीकरणपूर्वकमत्तृत्वादिगुणप्रदत्वत एव सर्वनामवतामपि पृथगव्यवहार इत्यर्थः ।

अयं भावः प्रवृत्तिनिमित्ताश्रयत्वं तत्स्वामित्वं च शब्दवाच्यत्वे हेतुः । तत्रात्तृत्वादिगुणदानादिरूपतन्नियमनमपि तत्स्वामित्वान्तर्भूतमेव तस्य चान्नमयादिरूपविशेष एवाभिव्यक्तेस्तद्विवक्षया तत्रैवान्नमयादिशब्दव्यवहारः अत्तृत्वाद्याश्रयत्वसामान्यविवक्षायां तु सर्वत्र सर्वनामव्यवहार इष्ट एवेति । असन्नेव स भवतीति श्लोकं प्रकरणविदानन्दमयमात्रपर इति प्रतीयते असन्नेव भवतीति चायुक्तं सतः कदाप्यसत्वायोगादतो यथावद्व्याचष्टे- **ब्रह्मणो पञ्चरूपमिति** । प्रकृतत्वशङ्कानिरासाय पञ्चरूपं तदित्युक्तं यद्ब्रह्म ब्रह्म विदाप्नोतीत्युपक्रान्तं सत्यत्वादिना लक्षितमन्नमयादिपञ्चरूपत्वेन प्राधान्येन प्रतिपादितं तदित्यर्थः । असदित्यस्यार्थो जीवादन्यन्न विद्यत इति न विद्यते इत्येवोक्ते आपाततः शून्यवादस्यैव ग्रहणं स्यादतः सर्वदुर्मतसङ्ग्रहाय जीवादन्यदित्युक्तम् । जीवजडव्यावृत्तपूर्वोक्तलक्षणवत्वेन ततोत्यन्तभिन्नमित्यर्थः । उक्तलक्षणं परं ब्रह्म नास्त्येव । किन्तु यथामतं जीवस्वरूपनिर्गुणमित्यादिरीत्या जानन्तीति यावत् । असन्नेव स इत्यस्यार्थस्ते असन्त इति दुःखिन इत्यर्थः । एवकारतात्पर्यं तम आलयः स्थानं येषां ते तम आलया इति नित्यदुःखिनः 'असुर्या नाम ते लोका अन्धेन तमसावृताः तां स्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जना' इति श्रुतेरिति भावः । अस्तीत्यादिकं व्याचष्ट- **जीवादिति** । पूर्ववद्व्याख्येयं तत इत्यस्यार्थ- **इतीति** । यथोक्तपरब्रह्मवेदनाद्धेतोरित्यर्थः । सन्तः सुखिनः । 'सद्भाववाचकाः शब्दाः सर्वे ते सुखवाचकाः' इत्युक्तेः एतदेव विवृणोति मोक्षेति 'तमेवं विद्वानमृत इह भवतीत्यादिश्रुतिप्रसिद्धिं हि शब्देनाह विदुरित्यस्यतात्पर्यार्थो ध्रुवं- **विज्ञेया इति** । ज्ञानिमतत्वादसंशयं

विज्ञेया इत्यर्थः । असन्नेवेत्यादिश्लोकस्यानन्दमयमात्रपरत्वे ब्रह्मेति विशेष्यानुवादास्वारस्यं ब्रह्मेत्युपक्रम्य तस्य लक्षणमुक्त्वा तद्रूपेष्वन्नमयादिषु ब्रह्मशब्दं प्रयुज्य ब्रह्मेत्यनुवादे उक्तरूपस्य ब्रह्मण एव प्रतीतेः सत्वासत्वरूपसाधारणधर्मनिर्देशाच्च । अन्यथा येन्नमित्यादिवदसाधारण-धर्मोक्तिप्रसङ्गात् । मनोमये तु ब्रह्म शब्दस्य वेदवाचकत्वादृगादिवेदगत-रूपपरत्वस्यापि सम्भवात् तत्राप्युक्तरूपब्रह्मपरत्वे बाधकाभावाच्च तत् प्रकरणोक्तरूपस्यापि विवक्षितत्वेन तद्विरोधाभावाच्च । एवं चैतच्छ्लोकस्य पुच्छं ब्रह्ममात्रपरतया परेषां व्याख्यान एवांगिप्रशंसाप्रायपाठविरोध इति ।।२.१२।।

**काशी.खं-** लक्षणवाक्योक्तमनन्तत्वं देशकालगुणै एष एव पूर्वस्य तस्य मनोमयस्य शरीर आत्मा यः पूर्वस्य प्राणमयस्य शारीरस्तस्येति वायोरपरिच्छिन्नत्वरूपमुपपत्या विवृण्वन्नानन्दमयोपास्तिमाह- **तस्मादिति** । मन्त्रब्राह्मणोक्ताद्विज्ञानमयकोशस्थवासुदेवादन्यो विशेषवानन्तरस्तदन्तःस्थ आत्मा देहिवद्विद्यमान आनन्दमयः पूर्णानन्दः आनन्दमयकोशस्थो नारायण उपास्य इति शेषः । पूर्णानन्दत्वादेव तस्यानन्तत्वमिति भावः । स एष आनन्दमयः पुरुषाकार एव तस्यानन्दमयस्य पुरुषाकारतामनुसृत्यायं विज्ञानमयः पुरुषाकारस्तत उद्भूत इति यावत् । तस्यानन्दमयस्य प्रियं परैः प्राप्यमुपकारजन्यसुखस्थमेव शिरः मोदः अप्रकृष्टविषयोत्थसुख-प्रदस्तत्स्थो दक्षिणो बाहुः प्रमोदः । प्रकृष्टविषयोत्थसुखप्रदस्तत्स्थो वामबाहुः । आनन्दः जीवस्वरूपानन्दाभिव्यक्तिप्रदस्तत्स्थो मध्यदेहः सृष्ट्यादिना जगद्बृह्मणात् ब्रह्मेति प्रधानवायुरुच्यते । जीवदेहगते सुखरूपे तस्मिन् सर्वचेष्टा शक्तिप्रदत्वेन स्थितोऽग्रभागः पादद्वयमित्यर्थः । अत्र शिरःप्रभृत्यवयवानामपि प्रत्येकं नारायणादिपञ्चरूपत्वमुक्तं सूत्रभाष्ये 'शिरो नारायणः पक्षो दक्षिणः सव्य एव च । प्रद्युम्नश्चानिरुद्धश्च संदोहो

वासुदेवकः नारायणोऽथ सन्दोहो वासुदेवः' । शिरोऽपि वा । 'पुच्छं सङ्कर्षणः प्रोक्त एक एव तु पञ्चधा अङ्गागित्वेन भगवान् क्रीडते पुरुषोत्तम' इत्यादीत्यवधेयम् । एवं प्रपञ्चितसत्यत्वादिलक्षणवत्वेन लब्धं जीवान्यत्वादिकं पञ्चरूपस्य **ब्रह्मणो** विपरीतज्ञानसम्यग्ज्ञानफलप्रतिपादकश्लोकसंमत्या द्रढयति- **तदिति** । तत् तस्मिन्पञ्चरूपस्य ब्रह्मणो जीवान्यत्वादिविषये एष वक्ष्यमाणः श्लोकोऽप्यस्ति तमुदाहरति- **असन्निति** । यो ब्रह्मपूर्वोक्तसत्यत्वादिलक्षणं जीवजडाभ्यामत्यन्तमसन्नास्तीति वेद किन्तु निर्गुणमेकमित्यादिरीत्या वेदेति यावत् । चेद्यदि तर्हि तत एव स वेदिताऽसन्नेव दुःख्येव नित्यदुःखात्मकतमः प्राप्तिमानेव भवति 'सद्भाववाचकाः शब्दाः सर्वे ते सुखवाचिनः' 'अभाववाचकाः शब्दाः सर्वे ते दुःखवाचकाः' इत्युक्तेश्च । अतो न तथा विद्यादिति यस्तु ब्रह्म पूर्वोक्तलक्षणं जीवजडाभ्यामत्यन्तभिन्नमस्तीति वेद चेतर्हि त एवैनमेवं वेदितारं सन्तं नित्यसुखात्मकमोक्षप्राप्तिमन्तं विदुर्विद्वांसः विद्वन्मतत्वान्नात्र काचिच्छङ्का कार्या । किन्तु सत्यत्वादिलक्षणवत्वेनेतरेभ्यो अत्यन्तविलक्षणं ब्रह्मविद्यादिति भावः । इति श्लोक इति पूर्वेण सम्बन्धः । आनन्दमयस्य विज्ञानमयान्तरात्मत्वं विवृण्वन्नुपसंहरति - **तस्येति** । य एष आनन्दमयः एष एव पूर्वस्य विज्ञानमयस्य शरीरो अन्तर्व्याप्तिविशेषेण शारीरवद्विद्यमान आत्मा । यः पूर्वस्य मनोमयस्य शरीरस्तस्य विज्ञानमयस्यैष आनन्दमय एव शारीर इति वा योजना इत्यानन्दमयप्रकरणम् ।।२.१२।।

**रा.खं-** देशकालगुणापरिच्छिन्नत्वरूपानन्तत्वं लक्षणवाक्यस्थानन्त-पदस्यार्थ इत्युक्तम् । तत्कुतः प्रमाणात्प्रतिपत्तव्यमित्यतः पूर्णानन्दत्व-हेतुनेति भावेनाह- **तस्माद्वा इत्यादिना** । प्राग्वद्व्याख्या । आनन्दप्राचुर्यहेतुना आनन्दमयनामकः आनन्दमयकोशस्थः नारायणस्तिष्टतीत्यर्थः। तेनैष पूर्ण इत्यादि प्राग्वत् । तदुद्भूत इत्यपि ग्राह्यम् । तस्यानन्दमयनाम्नो

नारायणस्य शिरः प्रियमेव । परैः प्राप्यत्वहेतुना प्रियनामकम् । उपकारजप्रियशब्दितसुखे स्थितम् । मोदत इति व्युत्पत्या मोदनामको दक्षिणबाहुः। विषयजमोदनामके सुखे तिष्ठतीत्यर्थः। प्रकर्षेण मोदत इति व्युत्पत्या प्रमोदनामा सव्यबाहुः । प्रकृष्टविषयजे प्रमोदनामके सुखे तिष्ठतीत्यर्थः। आततत्वहेतुना आत्मा मध्यदेहः । स्वरूपानन्देऽस्तीत्यर्थः । सृष्ट्या जगद्बृंहणहेतुना ब्रह्मनामकौ पुच्छमिव स्थितौ प्रतिष्ठा प्रतिष्ठौ पादौ । ब्रह्माख्यप्रधानवायौ तिष्ठत इत्यर्थः । आनन्दमयकोशः प्रियमोदादि-सुखविशेषा वायुश्चेत्येते सर्वे आनन्दमयस्थनारायणाधीना इति तात्पर्यम् । सूत्रभाष्ये तु आनन्दमयाख्यो नारायणः पुनः नारायणादिरूपेण पञ्चधा भिन्नः शिरः प्रभृत्यात्मना तिष्ठतीत्युक्तम् ।

ननु लक्षणवाक्योक्तसत्यत्वादिलक्षणानां अनेकरूपस्थतया एकत्रैवाभावात् कथं तेषां लक्षणत्वमिति चेत् । रूपाणां अभेदात्सर्वरूपाणां प्रत्येकं सत्यत्वादिलक्षणवत्वेऽपि भेदप्रतिनिधिविशेषबलेन अदनप्राणनादितत्तद्गुण-दातृत्वस्य व्यवस्थया प्रकाशनान्नामभेदः पञ्चरूपत्वसङ्ख्यादिकं च युक्तमिति ज्ञेयम् । स वा एष पुरुष इत्युपक्रम्य रूपपञ्चकनिरूपणेन सत्यत्वादिलक्षणानि विवृत्येदानीं पञ्चरूपमपि ब्रह्म न जीवाद्भिन्नमिति जानतां भिन्नमिति जानतां चोभयेषां फलभेदोक्त्या जीवान्यब्रह्मत्वं पञ्चानां श्लोकेन स्थापयति- **तदप्येष इति** । पञ्चरूपं ब्रह्म जीवादन्यदित्यत्रार्थेऽपि श्लोकोऽप्यस्तीत्यर्थः। ब्रह्म जीवव्यतिरेकेणासत् नास्तीति वेद चेत् । सोऽसन्नेव दुःख्येव भवतीत्यर्थः । जीवादन्यद् ब्रह्मास्तीति वेद चेत् एनं सन्तं सुखिनं मुक्तियोग्यं विदिरित्येष श्लोक इतीति शब्दस्यान्वयः । सूत्रभाष्यादौ तु आनन्दमयमात्रपरः श्लोको व्याख्यातः । तस्यैष एवेत्यादि प्राग्वत् ।।२-१२।।

**।। इत्यानन्दमयप्रकरणम् ।।**

### उपनिषत्

अथातोऽनुप्रश्नाः । उताविद्वानमुं लोकं प्रेत्य । कश्चन गच्छती३ । आहो विद्वानमुं लोकं प्रेत्य । कश्चित्समश्नुता३उ ॥२.१३॥

### भाष्यम्

इत्युक्ते ब्रह्मणा पूर्वं पप्रच्छ वरुणो विभुम् ।
अविद्वानपि यः कश्चिद् ब्रह्माऽप्नोति कथञ्चन ॥

विद्वानेवोत तत्रापि सर्वे वाऽथैव केचन ।
यदि सर्वेऽथ तत्रापि सर्वे सम्यक् समाप्नुयुः ॥

केचिदेवोत सम्यक् तदसम्यगपरे जनाः ।
ज्ञानिनोऽपीति पृष्टः सन् ब्रह्मा प्राह चतुर्मुखः ॥

अज्ञा न प्राप्नुयुर्ब्रह्म प्राप्नुयुर्ज्ञानिनोऽखिलाः ।
तत्रापि सम्यक्प्राप्तिस्तु विरिञ्चस्यैव सर्वदा ॥

अन्येषां तारतम्येन प्राप्तिः सुखविशेषतः ।
इत्यभिप्रायवान् ब्रह्मा ह्युकारेण समासतः ॥

उक्त्वा प्रश्नोत्तरं पश्चाद्विस्तरेण जगाद ह ।
कश्चिदेवोत सम्यक् तदाप्नुयादिति वाक्यतः ॥
अनन्तरं तथैवेति ब्रह्मोंकारमुवाच ह ॥

**व्यास-** अस्ति ब्रह्मेति चेद्वेदेत्यत्र जीवादन्यतया ब्रह्मवेत्ता सन् सुखी मुक्तो भवतीत्युक्तम् । तत्र वरुणेन कृतान् प्रश्नानाह- **अथात इति** । अतः प्रश्नबीजभावात् । अनुसारिणः प्रश्ना अनुप्रश्नाः । तत् व्याचष्टे- **इत्युक्त इति** । इत्युक्ते ब्रह्मवित् मुक्तो भवतीत्युक्ते । इति अतः शब्दार्थः।

आहोस्विद्विद्वानेवामुं लोकं प्रेत्य गच्छति उताविद्वानपि कश्चन प्रेत्यामुं लोकं गच्छतीत्येकः प्रश्नः । उत ज्ञानिनः सर्वेऽपि समश्नुवते अथवा कश्चित्समश्नुत इति प्रश्नद्वयं प्रतीयते । अथातोनुप्रश्नाः इति प्रश्नास्तु बहवः । अतो विरोधः । तं विरोधं विवक्षिताध्याहारेण परिहरन्व्याचष्टे- **अविद्वानित्यादिना** । तत्र उ इति समाधानम् । तदभिप्रायं व्यञ्जयन्व्याचष्टे- **इति पृष्टः सन्नित्यादिना** । ज्ञान्येव ब्रह्माप्नोतीत्येतमेवार्थं स तपोऽतप्यतेत्यादिना पश्चादविस्तरेण जगाद ह । ज्ञानिन एव मुच्यन्ते ते च सर्वेऽपि मुच्यन्ते तेषु सर्वेषु कश्चिदेव सम्यक् समश्नुत इत्ययं विशेष उकारेण कथं लभ्यत इत्यतस्तत्प्रकारं दर्शयति- **कश्चिदिति** । कश्चिदेव तत्सम्यगाप्नुयादिति प्रश्नस्य ज्ञानिन एव मुच्यन्त इत्यत्रान्तर्भावात्तद्वाक्यानन्तराभ्युपगमवाच्युकारस्य ब्रह्मोक्तत्वादुकारेणायं विशेषो लभ्यत इत्यर्थः ।।२.१३।।

**वादि-** अथ पञ्चविधरूपप्रतिपादनानन्तरम् । अतः अस्मिन्नर्थे । पञ्चविधरूपज्ञानात् मुक्तिर्भवतीत्यर्थे इति यावत् । अनु नानामतान्यनुसृत्य श्रोतुः प्रश्ना भवन्ति । इत्थमुक्तप्रकारेणाविद्वान् प्रेत्य कश्चन अमुं लोकं गच्छति । आहो आहोस्वित् प्रेत्यामुं लोकं विद्वानेव गच्छतीत्येकः प्रश्नः । उत विद्वानेक एव गच्छति आहोस्वित् सर्वे गच्छन्तीति द्वितीयः प्रश्नः । गतेषु विद्वत्सु सर्वेऽपि समश्नुवन्ति सम्यक् सुखमश्नुवन्ति उत कश्चित्समश्नुते सम्यक्सुखमश्नुत इति तृतीयः प्रश्नः । एतेषां सर्वेषामपि प्रश्नानाम् उ तथैव भवतीत्यर्थकोकारेण ब्रह्मा एकमेवोत्तरमाह ।

अत्रायं विवेकः अविद्वानपि गच्छतीति प्रथमोक्तां कोटिं त्यक्त्वा विद्वान् गच्छतीति द्वितीयकोटिस्त्वयैव गृहीता । अतस्त्वया त्यक्तकोटिः मयाऽपि त्यक्ता । त्वयाऽङ्गीकृता या कोटिः त्वयोक्ता सैव मयाऽप्यङ्गीकृतेति पुनरुकारेणैवोत्तरमाह । तृतीयप्रश्नेऽपि सम्यगश्नुवन्तीति कोटिमुपेक्ष्य

कश्चित्समश्नुत इति या कोटिस्त्वयाऽङ्गीकृता सा मयाऽङ्गीकृतेति पुनश्चोकारेणैवोत्तरमाह । तथा च त्रयस्याप्येकेनैवोकारेणोत्तरमभूदिति । एवं चैकेनोवोकारेणोत्तरं वदन् ब्रह्मा न केवलं चतुराननः किं तु महाचतुर-प्रवचनकौशल्यवानपीति युक्तमुत्पश्यामः ।।२.१३।।

**श्री.भा**- ननु अथातोऽनुप्रश्ना इत्यत्र केन कं प्रति कृताः प्रश्नाः कथ्यन्त इति न प्रतीयते । किञ्चैतेषां प्रश्नानां बीजमित्यतः प्रमाणेनैव तद्दर्शयति- **इत्युक्त इति** । पूर्वं ब्रह्मणा चतुर्मुखेन वरुणं प्रति ब्रह्मविदाप्नोति परमित्युक्ते सति वरुणो विभुं प्रश्नानां प्रतिवचनदाने समर्थं ब्रह्माणं प्रति पप्रच्छेत्यर्थः । प्रश्नबीजसद्भाववाच्यतः शब्दाभिप्राय इत्युक्त इत्यनेनोक्त इत्यवगन्तव्यम् । उताविद्वानित्यादिकं व्याचष्टे- **अविद्वानपीति** । ननु ब्रह्मवित् परमाप्नोतीति ज्ञानिनः परब्रह्मप्राप्तेरुक्तत्वेन उताविद्वानिति प्रश्ने बीजाभावात्तत्कोटिप्रसक्तिरेव नास्तीति चेत् उच्यते । ब्रह्मविदाप्नोति परमित्यत्र ब्रह्मविदेवेत्यवधारणाभावाद्ब्रह्मवेत्ता तदवेत्ताप्याप्नोतीत्यप्यर्थ-सम्भवमभिप्रेत्यायं प्रश्नः। अत एवाविद्वानपीति प्रमाणेऽपि शब्दप्रयोग इत्यवगन्तव्यम् । अविद्वानित्याद्येकवचनं बहुवचानार्थे ।

ननु उताविद्वानाहो विद्वानिति द्विकोटिकोऽयमेकः प्रश्नः । कश्चित् समश्नुत इत्यपरः प्रश्न इति प्रश्नद्वयमेव प्रतीयते । अथातोऽनुप्रश्ना इति कथं बहवः प्रश्नाः प्रतिज्ञातः । अन्त्यप्रश्ने च कोट्यन्तरं न प्रतीयते । अतोऽध्याहारेण द्वितीयं प्रश्नं तृतीयप्रश्ने कोट्यन्तरं च प्रमाणेनैव दर्शयति - **उत तत्रापीत्यादिना** । तत्रापि विद्वांस एव ब्रह्म प्राप्नुवन्तीति पक्षेऽपि । वचनव्यत्ययेन ब्रह्माप्नुवन्तीति वर्तते । यदि सर्वेऽपि विद्वांसो ब्रह्माप्नुवन्तीति पक्षः अथ तर्हि तत्रापि तस्मिन्पक्षेऽपीत्यर्थः । समाप्नुयुर्ब्रह्मेति वर्तते । तथाच मुक्तौ किं सर्वेऽपि समा इत्याशयः । अनेनोपनिषदि तृतीयप्रश्ने आद्या कोटिरभिप्रेता दर्शितेति ज्ञातव्यम् । कश्चित्समश्नुता इत्यस्यार्थमाह-

**केचिदेवेति** । मुक्तब्रह्मगणविवक्षया केचिदिति बहुवचनम् । उत केचिदेव ज्ञानिनो जनाः सम्यक् तद्ब्रह्म समाप्नुयुः अपरे ज्ञानिनोऽपि जना असम्यक् तदाप्नुयुरिति तृतीयप्रश्ने द्वितीयकोटिप्रदर्शनं कृतमित्यवगन्तव्यम् । कश्चित्समश्नुते इत्यनन्तरं अध्याहर्तव्यमाह- **इति पृष्टः सन्निति** । तत्र उ इति ब्रह्मकृतसमाधानाभिप्रायमाह- **अज्ञा इत्यादिना** । तत्राज्ञा न प्राप्नुयुर्ब्रह्मेत्यनेन द्विकोटिकप्रश्नत्रयमध्ये आद्यप्रश्ने आद्यकोटिरनभ्युपगमेनैव परास्ता । 'ज्ञानिनां मोक्षदश्च सः ज्ञानी प्रियतमोऽतो मे तं विद्वानेव' कोटिरसंमतैव । न कश्चिद्ब्रह्मवित्सृतिमनुभवति । अनियमः सर्वेषा-मविरोधादित्यादिश्रुतिसूत्रविरुद्धत्वादित्यभिप्रेत्य तत्राद्यामेव कोटिमंगीकरोति- **अखिला इति** । तृतीयप्रश्ने आद्यकोटिरसंमतैव । अक्षण्वन्तः कर्णवन्त इत्यादि प्रमाणविरोधेन सर्वेषां ज्ञानिनां मुक्तौ साम्येन सम्यग्ब्रह्मप्राप्ते-रभावादित्यभिप्रेत्य केचिदेवोत सम्यक्तदसम्यगपरे जनाः ज्ञानिनोऽपीत्युक्त-द्वितीयकोटिमेवांगीकरोति- **तत्रापीति** । ब्रह्मप्राप्तेष्वखिलेष्वपि ज्ञानिषु मध्य इत्यर्थः ।

ननु विरिञ्चस्यैव सम्यग्ब्रह्मप्राप्तिर्भवति । अन्येषां तारतम्येन ब्रह्माप्राप्तिर्भवतीत्येतत्कुतः इत्यत आह- **सुखविशेषत इति** । विशेषो वैचित्र्यं मुक्तानां तावत्सुखे वैचित्र्यमस्ति । तत्राप्यानन्दस्य विचित्रता । 'मुक्तास्तु स्यात्पराभासः सुनित्यसुखभोजनात् । तत्रापि तारतम्यं स्यात्तेषु ब्रह्माधिको मतः । विरिञ्चस्यैव यन्मुक्ता वानन्दस्य सुपूर्णता' इत्यादि-प्रमाणात् । न च तदाकस्मिकम् । यतः साधनतारतम्याधीनं ब्रह्मप्राप्ति-तारतम्यमित्यंगीकार्यम् । अन्यथा तन्न स्यादिति भावः ।

ब्रह्मप्राप्तितारतम्यं च

**'केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन' ।**
**अत्रैव च स्थितिस्तेषामन्तरिक्षे च केचन ॥**

**केचित्स्वर्गे महर्लोके जने तपसि चापरे ।**
**केचित्सत्ये महाज्ञाना गच्छन्ति क्षीरसागरम् ।।**

**तत्रापि क्रमयोगेन ज्ञानाधिक्यात्समीपगाः ।**
**सालोक्यं च सरूपत्वं सामीप्यं योग एव च ।।**

**इमामारभ्य सर्वत्र यावत्सुक्षीरसागरम् ।**
**पुरुषोऽनन्तशयनः श्रीमान्नारायणाभिध'।।**

इति प्रमाणानुसारेण ज्ञातव्यम् । समासतः सङ्कोचतः । पश्चादिति । अज्ञा न प्राप्नुयुर्ब्रह्मेत्येतद्विस्तरेण यदाह्येवैष एतस्मिन्नुदरमन्तरं कुरुत इत्यनेनोच्यते । प्राप्नुयुर्ज्ञानिनोऽखिला इत्येतद्यदा ह्येवैष एतस्मिन्नदृश्य इति वाक्येनोच्यते । तत्रापि सम्यक्प्राप्तिस्तु विरिञ्चस्यैवेत्येतत् क्षितिपमारभ्य ब्रह्मपर्यंतमानन्दतारतम्यकथनपरेण सैषानन्दस्य मीमाꣳसा भवतीत्यादि-ग्रन्थेनोच्यते । तत्राधिकारिवर्गे ब्रह्मण एव पूर्णानन्दत्वोक्त्या तस्यैव सम्यक् परब्रह्मप्राप्तिरन्येषां तारतम्येनेति स्पष्टमवगमात् । कश्चिदेव सम्यक् समश्नुत इत्यस्य ज्ञानिन एवमुच्यंन्ते इत्यत्रैवान्तर्भावात् । उत्तरत्र विस्तरात्तदनुक्तिरिति पूर्वटीकाकाराः । हेत्यनेन संक्षेपविस्तराभ्यां तु कथयन्ति मनीषिणः । बहुवारस्मृतेस्तस्य फलबाहुल्यकारणादिति प्रमाणप्रसिद्धिं दर्शयति ।

ननु अयमभिप्राय उकारेण कथं लब्ध इत्यत आह- **कश्चिदेवेति** । कश्चित्समश्नुत इत्यस्यार्थानुवादोऽयम् । तथैवेत्युकारमित्यन्वयः। कश्चिदेव सम्यक् तदाप्नुयादिति यदुक्तं तत् तथैवेत्यर्थकमुकारमित्यर्थः । तथाचाऽज्ञानिनोऽपि ब्रह्माप्नुवन्ति ज्ञानिन एव वा ज्ञानिनोऽपि सर्वे ब्रह्माप्नुवन्ति वा केचन वा यदि सर्वेऽपि तत्रापि सर्वेऽपि ज्ञानिनः सम्यक् ब्रह्माप्नुयुरुत कश्चिदेव समश्नुत इति प्रश्ने कश्चित्समश्नुत इति वाक्यानन्तरमेव तथैवेत्यर्थकस्य उकारस्य ब्रह्मणा प्रयुक्तत्वात्कश्चिदेव विरिञ्चः सम्यक् तद्ब्रह्माश्नुत इत्यभिप्राय उकारप्रयोगेण लब्ध इति भावः ।।२.१३।।

**श्री.खं-** अथशब्दः प्रकरणान्तरारम्भद्योतनार्थः । एवमन्नमयादि-पञ्चरूपनिरूपणानन्तरं प्रकरणान्तरमारभ्यते । अतः ब्रह्मविदाप्नोति परमिति वाक्येन ब्रह्मविदः परब्रह्मप्राप्तेरुक्तत्वात्तच्छ्रुतवता वा वरुणेन चतुर्मुखं प्रति कृताः अनुप्रश्नाः तत्त्वनिर्णयानुकूलाः प्रश्नाः कथ्यन्ते । तानेव विशदयति- **उतेति** । ब्रह्मविदिति निरवधारणोक्तेः । कश्चन अविद्वानुत । एकवचनं बहुवचनार्थे । अज्ञानिनोऽपि प्रेत्य मृत्वा अमुं लोकं परलोकम् । वैकुण्ठादिस्थं परब्रह्मेति यावत् । गच्छति । गच्छन्ति प्राप्नुवन्ति । अविद्वानपि अमुं लोकं प्रति प्रकर्षेण गत्वा ब्रह्म गच्छतीति वार्थः । आहोस्वित् विद्वान् ज्ञानिन एवामुं लोकं प्रेत्य गच्छन्तीत्येवं द्विकोटिक एकः प्रश्नः । ज्ञानिन एव ब्रह्मप्राप्नुवन्तीति पक्षेऽपि सर्वेऽपि ज्ञानिनो ब्रह्म प्राप्नुवन्ति अथ केचनैवेति द्विकोटिको द्वितीयः प्रश्नोऽध्याहार्यः । सर्वेऽपि ज्ञानिनो ब्रह्म प्राप्नुवन्तीति पक्षेऽपि किं सर्वेऽपि ज्ञानिनो ब्रह्म सम्यक् समाप्नुवन्ति मुक्तौ ब्रह्मप्राप्ताः सर्वेऽपि समा इति यावत् । उत कश्चिदेव ज्ञानी समश्नुता सम्यक् अश्नुत अश्नुते प्राप्नोति । दीर्घस्त्वाधिक्यार्थः । इति पृष्टः सन् ब्रह्मा प्रोवाचेति ग्राह्यम् । तत्राज्ञानिनो ब्रह्म नैवाप्नुवन्ति । तमेवं विद्वानमृत इह भवतीत्यादिवचनविरोधात् । तस्माज्ज्ञानिन एव ब्रह्म प्राप्नुवन्ति । तत्रापि अखिला अपि ज्ञानिनो न सम्यक् ब्रह्म समाप्नुयुः किन्तु सम्यक् प्राप्तिर्विरिञ्चस्यैव सर्वदा । अन्येषां तारतम्येन तत्प्राप्तिरित्य-भिप्रायेण समासेनोत्तरमाह- **उ इति** । कश्चिदेव सम्यक् तदाप्नुयादिति यदुक्तं तत् उ तथैवेत्यर्थः । कश्चित्समश्नुता इत्येतद्वाक्यानन्तर-मेवोक्तत्वादुकारउक्ताभिप्रायक इति ज्ञातव्यम् ।।२.१३।।

**वरद-** जीवादिव्यतिरिक्तत्वेन अन्नमयादिविज्ञानस्य मोक्षसाधनत्वे विहिते चोदयति अथातोऽनुप्रश्ना इत्यादिना । तच्चोद्यवाक्यं व्याचष्टे- **इत्युक्त इति** । अत्र बहुवचनबलेन त्रयः प्रश्नाः क्रियन्त इत्यङ्गीकार्यम् ।

प्रश्नानां परिहारः कथ्यते - **उ इति** । तद्व्याचष्टे - **ब्रह्मा प्राह चतुर्मुख इति** । ननु उकारः संवादमात्रवाची । तेन कथं ज्ञानिनामेव मोक्षः तेषां च सर्वेषां तेषु च केषाश्चिद् असम्यक् केषाश्चित् सम्यक् इत्येतावानर्थः सेत्स्यतीत्यत आह- **कश्चिदिति** । यद्यपि उकारः संवादमात्रवाची तथाऽप्यत्राविदुषामपि मोक्षोऽस्ति किं वा विदुषामेव विदुषामेवेति पक्षेऽपि तेषु केषाश्चिदेव किं वा असर्वेषामपि सर्वेषामपीति पक्षेऽपि सर्वेषामपि सम्यगेव अथवा केषाश्चिदेव सम्यक् दोषः न सर्वज्ञानामपीति । पूर्वपूर्वोक्तपक्षपरित्यागेनान्त्य-पक्षपरिप्रश्ने कृते तत्संवादरूपेण परिहाराभिधायित्वात् । एतावदर्थत्वं उकारस्यावगम्यत इत्यर्थः ।

ननु उकारेणोक्तः परिहारश्चेत् उत्तरत्राभिधीयत तर्हि 'सोऽकामयत बहुस्यां प्रजायेय' इत्यादिना सृष्ट्यादिकथनं किमर्थं क्रियत इत्यत आह रसऽह्येवायं लब्ध्वा नन्दीभवति इत्यादिना । विष्णुज्ञानादेव मोक्ष इति वक्तुं विष्णोः स्वतन्त्रत्वमन्यस्यास्वातन्त्र्यं च ज्ञापयितुं सोऽकामय इत्यादिना सृष्ट्यादिकथ्यत इत्यर्थः ।।२.१३।।

**काशी**- अथातोऽनुप्रश्ना इत्युक्ताः प्रश्नाः कस्य कं प्रतीति न प्रतीयन्ते । किञ्चात्र प्रश्नबीजमित्यतस्ततात्पर्यं प्रमाणेनैवाह- **इत्युक्त इति** । ब्रह्मविदाप्नोति परमित्यारभ्य सन्तमेनं ततो विदुरिति सङ्क्षेपविस्तराभ्यामुक्ते सतीति प्रश्नबीजमुक्तम् । तेनातः शब्दो विवृतः इत्युक्तत्वादेवेति । विभुं ब्रह्माणम् । अत्र प्रश्ना इति बहवः प्रश्नाः प्रतिज्ञाता । उतेत्यादिना च प्रश्नद्वयमेवोच्यत इति । न्यूनतामाशङ्क्य यत्परेणोक्तं असद्ब्रह्मेति वेद चेत् । अस्ति इति ब्रह्मेति चेद्वेति पूर्ववाक्यबलात्प्रश्नान्तरमुपक्षिप्यते तथा च ब्रह्मास्ति न वा अविद्वानपि परमात्मानं गच्छति न वा विद्वानपि तं गच्छति न वेति त्रयः प्रश्ना इति । तदसत् । सत्यं ज्ञानमनन्तं ब्रह्मेति ब्रह्मणः सत्यत्वोक्त्या असन्नेव स भवतीत्यसत्वपक्षनिन्दया च सत्वशङ्कानुदयेन

प्रथमप्रश्नाक्षेपानुपपत्तेः ब्रह्मविदाप्नोति परमिति ब्रह्मवेदनस्य तत्प्राप्ति-हेतुत्वेनोक्त ऋग्वेदविदुषस्तत्तत्प्राप्तिशङ्कानवकाशेन द्वितीयप्रश्नानुपपत्तेः । न च ब्रह्मणः सर्वान्प्रत्यविशेषेण विदुषः प्राप्तावविदिषोऽपि तत्प्रसङ्ग इति । शङ्का घटते अत एवाविदुषस्तदप्राप्तौ विदुषोऽपि न स्यादिति शंकया तृतीयप्रश्नोऽपीति वाच्यम् । अविशेषप्रयुक्तप्राप्तेरिदानीमपि सार्वत्रिकत्वेन तदप्राप्तिशङ्कानुदयात् विवक्षितप्राप्तेश्च ज्ञानसाध्यत्वोक्तिः । अत एव तृतीयोप्यनुपपन्नः ।

कश्चित्समश्नुत इत्यत्र कश्चिदित्यस्य सं शब्दस्य च वैय्यर्थ्यं ब्रह्मविदाप्नोतीति यो वेदेति च सामान्येनैवोक्तत्वादित्याशयेन प्रमाणेनैव प्रश्नत्रयं व्याचष्टे- **अविद्वानिति** । अविद्वानोऽपि सनातनं परं ब्रह्माप्नोत्युत विद्वानेवेत्येकः प्रश्नः । न च 'ब्रह्मविदाप्नोति' इति ब्रह्मवेदनस्य प्राप्तिहेतुत्वादविदुषः प्राप्तिशङ्कानुदय इति वाच्यम् । अयोग्यस्यापि श्रवणादिना ज्ञानोत्पत्तौ ब्रह्मप्राप्तिशङ्कया तद्विषयप्रश्नोपपत्तेः । केचित्तु ब्रह्मविदेवेत्यवधारणाभावादब्रह्मविदोऽपि तत्प्राप्तिशङ्कया प्रश्नोपपत्तिरित्याहुः । तत्रापि विद्वानेवाप्नोतीति पक्षेऽपि सर्वे विद्वांसो ब्रह्माप्नुवन्ति । अथ वा केचिदेवेति द्वितीयः प्रश्नः ब्रह्म विदोऽपि कर्मप्रवाहानुच्छेदेनामोक्षसम्भवादिति भावः । एतेन सर्वोऽपि विद्वानमुं लोकं गच्छत्याहोस्वित् कश्चिदेवेत्यावृत्या द्वितीयप्रश्नो व्याख्येय इत्युक्तम् । यदि सर्वेऽपि विद्वांसस्तदाप्नुवन्तीति पक्षस्तर्हि किं ते सर्वेऽपि सम्यक् साम्येनैव ब्रह्माप्नुयुः उत तत्रापि केचिदेव सम्यक् ब्रह्माप्नुयुर्ज्ञानिनोऽप्यपरे जना असम्यक् तारतम्येनाप्नुयुरिति तृतीयः प्रश्नः । ज्ञानतारतम्येन फलतारतम्यसम्भवादिति भावः ।

अनेन सर्वो विद्वानमुं लोकं समश्नुते आहो कश्चिदेवेति पुनरावृत्या तृतीयप्रश्नयोजना सूचिता । कश्चित् समश्नुत इत्यनन्तरमध्याहार्यमाह - **इति पृष्ट इति** । उकारमिति शेषः । तदभिप्रायमाह- **अज्ञा इति** ।

अभिप्रायवानित्यन्तेन विकल्पितप्रश्नकोटीनां षण्णां मध्ये कोटित्रयाङ्गीकार-मुकारेणाहेति भावः अत्र चतुर्मुख इति विशेषणान्मुखत्रयेणयुगपदुकार-त्रयमाह तेन कोटित्रयांगीकारः सिद्ध्यतीत्याहुः । तत्रापि ज्ञानिष्वपि सर्वदा नियमेन अन्येषां ज्ञानिनां प्राप्तौ सम्यक्त्वासम्यक्त्वे कुत इत्यत आह- **सुखविशेषत इति** । सुखतारतम्यादित्यर्थः । वक्ष्यमाणस्य ब्रह्मान्तानां मुक्तौ सुखतारतम्यस्य भगवत्प्राप्तितारतम्यं विना अनुपपत्तेरिति भावः । प्राप्तौ तारतम्यं च सालोक्यं च सरूपत्वं सामीप्यं योग एव चेत्यादि वचनोक्तं बोध्यम् ।

नन्वतिसङ्क्षेपेणोक्ततारतम्यादौ कथंताया अनिवृत्तेर्विस्तरेणोत्तरं वाच्यमित्यत आह- **ब्रह्मेति** । हि शब्देन 'सङ्क्षेपविस्तराभ्यां तु कथयन्ति मनीषिणः । बहुवारस्मृतेस्तस्य फलबाहुल्यकारणात्' इति प्रमाणप्रसिद्धिं सूचयति- **समासतः** सङ्क्षेपतः **पश्चादिति** । यदाह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवतीत्यादावज्ञानान्तदप्राप्तिं यदाह्येवैष एतस्मिन्नदृश्येऽनात्म्ये अनिरुक्ते अनिलयने भयं प्रतिष्ठां विन्दते । अथ सोभयं गतो भवतीत्यादौ सामान्यतः सर्वज्ञानिनां तत्प्राप्तिं सैषानन्दस्य मीमांसा भवतीत्यादावन्ते च ब्रह्मण एव मुक्तौ सम्पूर्णफलोक्त्या तस्यैव सम्यक् प्राप्तिमन्येषां तारतम्येन प्राप्तिं चार्थाद्विस्तरेणाहेत्यर्थः । नन्वेतत्कोटित्रय मेवोकारेणाङ्गीकृतमिति कुत ज्ञायत इत्यत आह- **कश्चिदिति** । विद्वानपि कश्चिदेव सम्यक् प्राप्नोति । किमिति प्रश्नवाक्योक्तनन्तरमेव । तथैवेति तत्कोट्यङ्गीकारवाचकमोंकारमुवाच ह । यस्मात्तस्मादेतत्कोटित्रयमेवाङ्गीकृतमिति ज्ञायते इत्यर्थः । ज्ञानिषु ब्रह्मण एव सम्यक् प्राप्त्युक्त इति । तदन्यज्ञानिनामसम्यक् प्राप्तेरज्ञानामप्राप्तेश्च लाभादिति भावः ।।२.१३।।

**काशी.खं-** तथाचायमर्थः अस्तिब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरित्युक्त्याऽवसरप्राप्तान्वक्तुमाह- **अथेति** । अथ ब्रह्मविदित्युपक्रम्य सङ्क्षेपविस्तराभ्यां ब्रह्मतज्ज्ञानतत्प्राप्तिनिरूपणानन्तरं अतः प्रश्नहेतुसत्वादनु अनुसारिणः पूर्वोक्तसङ्गताः ब्रह्माणं प्रति भृगोः प्रश्नाः सतीत्यर्थः । तानाह- **उतेति** । अविद्वानज्ञः अयोग्योऽपि कश्चित्प्रेत्य मृत्वा देहारम्भकर्मक्षय इति यावत् । अमुं परोक्षं लोकं प्रकाशरूपं परमात्मानं गच्छत्याप्नोति वा अयोग्यस्यापि श्रवणादिना कदाचिद्ब्रह्मास्ति त्वज्ज्ञान-सम्भवादिति भावः । आहो विद्वान्योग्य एव वेत्येकः प्रश्नः । अत्राद्ये असन्नेवेत्येवकारेण सर्वथा तदप्राप्त्युक्तिविरोधः । द्वितीये ब्रह्मास्तित्वज्ञानस्य तत्प्राप्तिहेतुत्वानुपत्तिरित्याशयः । यद्वा अविद्वानपि कश्चित्कर्मी तमाप्नोत्युतविद्वानेवेति प्रश्नः । अमृतो वाव सोमपो भवति । नान्यपन्था इति द्विविधप्रमाणदर्शनादिति भावः । विद्वानेव गच्छतीति पक्षेऽपि किं सर्वोऽपि विद्वान् प्रेत्यामुं लोकं गच्छत्याहोस्वित् कश्चिदेवेत्यावृत्या द्वितीयप्रश्नो योज्यः । यो वेद सोऽश्नुत इति सामान्योक्तेः । प्रारब्धप्रतिबन्धेन चिरविनष्टज्ञानस्य साधनत्वानुपपत्तेश्चेति भावः । सर्वोऽपि विद्वानाप्नोतीति पक्षेऽपि किं सर्वोऽपि विद्वांसमश्नुते सम्यगेवाप्नोति आहोस्वित्कश्चित्सम्यगश्नुते । इतरे तु तारतम्येनैवाप्नुवन्तीति तृतीयप्रश्नोप्यावृत्यादिना व्याख्येयः । सोऽश्नुते सर्वान्कामानिति फलसाम्यश्रुतेः । साधनतारतम्याच्चेति भावः । अत्र सङ्क्षेपविस्तराभ्यामुत्तरमाह- ब्रह्मेति पूरणीयम् । तदनुवदति । उ इति यदुक्तं कश्चित्समश्नुत इति तदङ्गीकृतमित्यर्थः । तथा च साधनाधिक्याद्ब्रह्मण एव सम्यक् प्राप्तिः इतरज्ञानिनां सर्वेषामसम्यक् प्राप्तिः । अज्ञानां साधनासम्पत्या तदप्राप्तिरेव ईश्वरस्यैव साधनानुसारिफलप्रदत्वान्नकश्चिद्दोष इति तदाशयः ।

**रा.खं-** ब्रह्मविदाप्नोति परमित्युक्तौ उत्पन्नशङ्कात्रयं मन्त्रोदाहरणपूर्वक-मन्त्रोक्तलक्षणप्रपञ्चनेन निरस्य जीवान्यत्वेन तदनन्यत्वेन च ज्ञानिनो मुक्तितमो रूपफलोक्तौ अवसरप्राप्तं प्रष्टव्यमर्थं पृष्टवान्वरुणो ब्रह्माणमित्याह - **अथातो नु प्रश्ना इति** । अथ अवसरप्राप्ताः अतः प्रश्नबीजवत्वात् गुरुभूतब्रह्मोत्त्यनुसारिप्रश्नाः वरुणेन कृता इत्यर्थः । तदाह - **उतेति** । उताविद्वान् अविद्वानपि यः कश्चन प्रेत्यामुं लोकं गच्छति । आहो विद्वान्प्रेत्यामुं लोकं गच्छतीत्यनुकर्षः। अयमेकः प्रश्नः । विद्वानित्यत्रापि किं सर्वोऽपि गच्छति कश्चिदेवेति द्वितीयः प्रश्नः । सर्वोऽपीत्यत्रापि किं सर्वोऽपि सम्यक् अश्नुते प्राप्नोति ब्रह्मेति शेषः । उत कश्चिदेव समश्नुते स सर्वोऽपीति तृतीयः प्रश्नः । इति प्रश्नत्रयं ध्येयम् । प्रश्ना इति बहुवचनानुरोधात् समाधिमाह ब्रह्मा- **उ इति** । अभ्युपगमवाच्ययमुकारः । सर्वोऽपि ज्ञानी सम्यगश्नुते कश्चिदेव वा सम्यगश्नुत इति चरमप्रश्नानन्तरं उ इत्युक्त्या कश्चिदेव ज्ञानी विरिञ्चिपदयोग्यः समश्नुत इति पक्षस्याङ्गीकारप्रतीत्या अज्ञानी नैव ब्रह्माप्नोति । ज्ञानिनोऽखिलाः प्राप्नुवन्तीत्यर्थस्य लाभात् । अन्यथा ज्ञानी कश्चिदिति समिति च विशेषणवैय्यर्थ्यापातात् ।।२.१३।।

### उपनिषत्

**सोऽकामयत । बहुस्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इद॒ँसर्वमसृजत । यदिदं किञ्च । तत् सृष्ट्वा । तदेवानुप्राविशत् । तदनु प्रविश्य । सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च । निलयनं चानिलयनं च । विज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्यमभवत् । यदिदं किञ्च । तत् सत्यमित्याचक्षते ।।२.१४।।**

भाष्यम्

अज्ञो नैव तदाप्नोति ज्ञान्येवैतदवाप्नुते ।
इति ज्ञापयितुं विष्णोः स्वातन्त्र्यज्ञापनाय तु ।।

आह सृष्टिं प्रवेशं च माहात्म्यज्ञानतो यतः ।
प्रीतिं यान्ति महान्तस्तु तद्वशा एव चेश्वराः ।।

अग्न्यादयोऽपि किमुत तदन्ये मुक्तिदस्ततः ।
स एवैकस्स विज्ञेयः पूर्णैश्वर्यादिरूपवान् ।।

इति तस्य महैश्वर्यमुच्यते स त्वकामयत् ।
सृष्ट्वा जगदिदं सर्वं नियामकतयाऽस्य तु ।।

बहुरूपो भवानीति स्याज्जगच्चेत्यचिन्तयत् ।
स्यादित्यालोचनान्नान्यत् तपो विष्णोः कदाचन ।।

अवतारेष्वनुकृतिर्बाह्यवृत्त्या तपस्विनाम् ।
सृष्टिर्नाम स्वरूपात्तु बहिर्निष्क्रमणं स्मृतम् ।।

यद्यपीदं जगत्सर्वं स्वोदरस्थं महात्मनः ।
तथाप्येष द्वितीयेन रूपेण बहिराक्षिपेत् ।।

रूपान्तरेणाविशच्च जगत्सर्वं जनार्दनः ।
त्यच्चानिरुक्तं विज्ञानं तथा निलयनं महान् ।।

सत्यं प्राणस्तथा श्रीश्च सन्निरुक्तं तथाऽनृतम् ।
अविज्ञानं चानिलयनं प्रकृतिप्राणयोः परम् ।।

तद्वद्विष्णोस्तु सम्बन्धात्स्वतस्तन्नामको हरिः ।
ततो नियामकश्चेति त्यदानन्त्यादवाच्यतः ।।

अनिरुक्तं निलयनं सर्वाधारत्वतो हरिः ।
विज्ञानं सर्वविज्ञानात् सत्यं साधुस्वरूपतः ।।

अवसादसुवाच्यत्वदौर्बल्याज्ञस्यसाधुताः ।
प्रकृतिप्राणतोऽन्यत्र कुर्वंस्तन्नामको हरिः ।।

अतः साधुस्वरूपः सन् सत्यनामाऽनृतादिकम् ।
नामानेन गतत्वादेर्यदिदं किञ्च भाषितम् ।।

सन्निरुक्तादिशब्देन तत् सर्वं साधुतैव हि ।
अवसादनादिहेतुत्वं साधुतैव हि सर्वशः ।
असाधुताऽवसादादिस्तत्कर्तृत्वं हि भाषितम् ।।

**व्यास**- सङ्गतिं सूचयन् ज्ञान्येवमुच्यत इत्ययमर्थः स तपो तप्यतेत्यादिना कथं लब्ध इत्यतस्तं प्रकारं दर्शयति- **अज्ञ इति** । रसं ह्येवायं लब्ध्वानन्दी भवतीत्यत्राज्ञस्तन्नैवाप्नोति किन्तु ज्ञान्येवेति ज्ञापयितुं विष्णोः स्वातन्त्र्यज्ञापनाय सृष्ट्यादिकमाहेत्यन्वयः । ननु ज्ञानादेव तत्प्राप्तिस्तथा च सृष्ट्युक्त्या तन्माहात्म्यकथनस्य कुत्रोपयोग इत्यतो न ज्ञानात्तत्प्राप्तिरपि तु ज्ञानजभगवत्प्रसादात् । स तु भगवन्माहात्म्यज्ञानेन भवति । अतः सृष्टिकथनोपयोग इत्याह- **माहात्म्येति** । विदुषो मन्वानस्याविदुषोऽपि तत्त्वेव ब्रह्मैव भयं भयङ्करमित्युक्त्वा तत्रैव मन्त्र उक्तः- **भीषेति** । तस्य प्रकृतोपयोगं दर्शयति- **तद्वशा इत्यादिना** । ब्रह्मज्ञानं नाम किंरूपमित्यतो जगत्स्रष्टृत्वादिज्ञानमिति सृष्टिरुक्तेति सङ्गत्यन्तरं करोति- **स विज्ञेय इति** । स्रष्टृत्वादिमहैश्वर्यम् । सत्त्वं कामयत् । सोऽकामयतेत्यादिवाक्येनोच्यते । सोऽकामयतेत्यादि व्याचष्टे- **सृष्ट्वेति** । बहुरूपभवनार्थं जगत्स्यादित्यचिन्तयत् । सृष्ट्यर्थं तपश्चकारेति प्रतीतिं वारयन्व्याचष्टे- **स्यादिति** । ननु कपिलादिरूपैः तपसः

कृतत्वात्कथं विष्णोस्तपोनामालोचनमेव न सन्तापरूपमित्युक्तिरित्यत आह- **अवतारेष्विति** । ईश्वरस्य जगदाकारेण परिणामः सृष्टिरिति केचित् अतो वास्तवमाह- **सृष्टिरिति** । स इदं सर्वमसृजतेति मूलरूपमेव जगत्ससर्जेति प्रतीतिं श्लोकेन वारयन्नाह- **तदपीति** । तत्रैवमाशङ्का । अवताररूपमेव जगत्सृष्टौ शक्तम् । न मूलरूपमिति । तां वारयन्नाह- **यद्यपीति** । यद्यपि स्वोदरस्थं जगत्स्रष्टुं महात्मनो मूलरूपस्य शक्तिरस्ति । तथाप्येष इत्यन्वयः । तत्सृष्ट्वा तदेवानुप्राविशदिति व्याचष्टे- **रूपान्तरेणेति** । तदनुप्रविश्य सच्च त्यच्चाभवदित्यादिवाक्येत्यदनिरुक्तनिलयनविज्ञानसत्यपदवाच्यं जगदभवत् । सन्निरुक्तानिलयनाविज्ञानानृतशब्दवाच्यं जगदभवद्ब्रह्मेत्युक्तम् । तत्राद्यैस्त्यदादिभिः पञ्चभिः शब्दैः किञ्जगदुक्तं सदादिभिश्च पञ्चभिः किंजगदित्यपेक्षायामाह- **त्यच्चेत्यादिना** । प्रकृतिप्राणयोर्महतश्च परं शिष्टं जगत् । द्विविधं जगत्तेषां शब्दानां मुख्यवाच्यं किमित्यतो नेत्याह- **तद्वेति** । सम्बन्धात् अस्वतन्त्राल्पप्रवृत्तिनिमित्ततो जगत्सदादिशब्दवाच्यमित्यर्थः । स्वतः स्वतन्त्रमुख्यप्रवृत्तिनिमित्ताभावात् । त्यदादिशब्दप्रवृत्तिर्भगवति केन निमित्तेनेत्यत आह- **तत इत्यादिना** । अवाच्यत्वे आनन्त्यादिति हेतुः । प्रकृतिप्राणयोर्महतश्चान्यत्र शिष्टे जगति अवसादनादिकुर्वन्यतोऽ-तस्तन्नामको हरिरिति योजना । सत्यमभवदिति द्वितीयसत्यपदार्थमाह- **साधुस्वरूप इति** । सदादिशब्दानां जगति कथं व्युत्पत्तिरित्यत-स्तामुपलक्षणत्वेन दर्शयति- **अनेनेति** । अनेन चेष्टकेन ऋतं प्राप्तं अनृतं अविज्ञानं सर्वज्ञानरहितं अनिलयनं अनाश्रयं, नितरां उक्तं निरुक्तं, सीदतीति सत्, साधुत्वात्सत्यं, विज्ञानं सर्वज्ञत्वात्, निलयनमाश्रयत्वात्, नितरामनुक्तत्वादनिरुक्तं, ततत्वान्नियामकत्वाच्चेत्यर्थः । सत्त्यदादि-शब्दवाच्यं ब्रह्मेत्ययुक्तम् । तत्र केषाञ्चिच्छब्दानां अमङ्गलार्थत्वादित्यतः प्राप्तं यदिदं किञ्चेत्यादि । तद्व्याचष्टे- **यदिदमिति** । तत्सर्वं साधुतैव हीत्युक्तं

विविच्य दर्शयति- **अवसादनादीति** । सर्वशः सर्वम् । योजना तु अवसादनादिहेतुत्वं तावत्साधुतैव हि अवसादनादिस्त्वसाधुता । तथा च सदादिशब्दभाषितं तत्कर्तृत्वं साधुतैव हीति । मूलरूपेण जगत्ससर्जेति प्रतीतिनिरासायोक्तं- **बहु स्यामिति** । तत्र श्लोकं पठति- **तदपीति** ।।२.१४।।

**वादि**- सः मूलरूपनारायणो बहुः बहुरूपवान् स्यामित्यकामयत । तदर्थं बहुरूपाणामाविष्करणाय प्रकृष्टेन रूपान्तरेण जायेयेत्यप्यकामयत । मूलरूपी नारायणः लये स्वोदरस्थमपि जगत् तेनैव रूपेण न निष्क्रामयति । किन्तु मूलरूपोदरस्थं जगत् स्वोदरस्थीकृत्य आविर्भूतपुरुषाख्यरूपान्तरेणैव निष्क्रामयति बहुरूपो भवति चेति शास्त्ररहस्यम् । 'जगृहे पौरुषं रूपं भगवान् महदादिभिः । सम्भूतं षोडशकलमादौ लोकसिसृक्षया' इति भागवतोक्तेः । महदादिभिः स्वोदरस्थसूक्ष्ममहदादितत्त्वैः सम्भूतं सहभूतं पौरुषं रूपं जगृह इति तस्यार्थः । सृष्टियोग्यमहदादिस्थूलतत्त्वानामद्याप्य-नुत्पन्नत्वेन पुरुषरूपस्याऽपाततः प्रतीतमहदाद्युत्पन्नत्वस्यासम्भवात् अतो भगवान् बहुरूपाविर्भावयोग्यं प्रकृष्टं रूपान्तरं मम भूयादित्यचिन्तयदिति भावः । अत एव एतन्नानावताराणां निदानं बीजमव्ययम् इति मूलरूपाविर्भूतपद्मनाभाख्यमूर्तिं नानावताराणां बीजमाहेति ज्ञेयम् । तदिदमाह भाष्यकारः यद्यपीदं जगत्सर्वं स्वोदरस्थं महात्मनः । तथाप्येतद्वितीयेन रूपेण बहिराक्षिपेत् इति । स द्वितीयरूपी पुरुषाख्यो नारायणः तपः आलोचनारूपं तपः अतप्यत अतपत् । अकरोदिति यावत् । मूलरूपाविर्भूतपद्मनाभाख्यमूर्तिमेन नानावताराणां बीजमाहेति ज्ञेयम् । तदिदमाह भाष्यकारः यद्यपीदं जगत्सर्वं स्वोदरस्थं महात्मनः । तथाप्येतद्वितीयेन रूपेण बहिराक्षिपेत् इति । स द्वितीयरूपी पुरुषाख्यो नारायणः तपः आलोचनारूपं तप अतप्यत अतपत् । अकरोदिति यावत् ।

मूलरूपनारायणेन अभिलषितबहुरूपधारणाय अधिष्ठानभूतासङ्ख्य-जगन्निर्माणेनावश्यं भाव्यमित्यालोचयामासेति भावः । एतादृशं तपः आलोचनं तप्त्वा कृत्वा इदं सर्वं महदादिजगदसृजत । यदिदं किञ्च किञ्चन तिष्ठति तत्सृष्ट्वा पूर्वसङ्कल्पानुसारेण बहुरूपैः स्रष्टम्... (इतः परं श्रीवादिराजीयव्याख्यानं नोपलभ्यते)।।

**श्री.भा-** ननु तर्हि सोऽकामयत इत्यादिना तत्सृष्ट्वा तदेवानुप्राविश-दित्यादिना च ग्रन्थेन सृष्टिः सृष्टपदार्थप्रवेशादिकं च किमसंगतमेवोच्यत इत्यतस्तस्य संगतिमाह- **अज्ञो नैवेत्यादिना** । इतीममर्थं यदा ह्येवैष एतस्मिन्नित्यादौ ज्ञापयितुं विष्णोः स्वातन्त्र्यज्ञापनाय स्वातन्त्र्यादिरूप-माहात्म्यज्ञापनाय सृष्टिं सृष्टपदार्थप्रवेशं चाहेत्यन्वयः ।

ननु ज्ञान्येवैतदवाप्नुत इत्युक्तायां ज्ञानिना ब्रह्मप्राप्तौ विष्णोः स्वातन्त्र्यादिरूपमाहात्म्यज्ञानस्य कथमुपयोगः । येन तज्ज्ञापनाय सृष्ट्याद्युक्तिः संगतेति चेत् । न । ब्रह्मप्राप्तिरूपो मोक्षस्तावत् प्रसादादेव भवति । 'यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेण' इत्यादिश्रुतेः । प्रसादश्च गुणोत्कर्षज्ञानसाध्यः । लोके तथा दर्शनात् । तथाच 'तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तत' इति वचनादधिकारिणः प्रति भगवत्प्रसादोत्पादनद्वारा मोक्षं साधयितुं प्रवृत्तानां वेदानां तद्गुणोत्कर्षज्ञापन एव महातात्पर्यं वक्तव्यम् । अतः स्वातन्त्र्याख्यमहैश्वर्यज्ञापनाय सृष्ट्यादिकं कथ्यत इति नासंगतिरित्याह- **माहात्म्यज्ञानत इत्यादिना** । तुशब्द एवार्थे । माहात्म्यज्ञानत एवेति सम्बध्यते । राजाहमिति वदन्तं राजानो घातयन्ति हीति दृष्टत्वात् । यतो महान्तो लोके माहात्म्यज्ञानतः प्रीतिं यान्तीति दृष्टमिति हेतोस्तस्य विष्णोर्महैश्वर्यं भक्तानां तत्प्रीत्युत्पादनाय ज्ञातव्य-तयोच्यत इत्यन्वयः । 'तत्त्वेव भयं विदुषो मन्वानस्य' 'भीषास्मात्' इत्यादेरपि प्रकृतोपयोगं दर्शयति- **तद्वशा एवेति** । ईश्वराः पचनादि-

व्यापारसमर्थाः अग्न्यादयोऽपि तद्वशाः विष्णुवशा एव किमु तदन्ये । ततो हेतोः स एवैको मुक्तिद इत्यन्वयः । किमु तदन्य इत्यनेन भीषास्माद्वात इत्यादिकमुपलक्षणमित्युक्तं भवति । मुक्तिदो विज्ञेय इत्यनेनाथ सोऽभयं गतो भवति इत्यस्य तात्पर्यमुक्तं ज्ञातव्यम् ।

सोऽकामयत इत्यादिना सृष्ट्युक्तेः संगत्यन्तरमाह । स्रष्टृत्वादि-पूर्णैश्वर्यादिरूपवान्स हरिर्विज्ञेय इति । ज्ञान्येवैतदाप्नुत इत्युक्तम् । तत्र ब्रह्मज्ञानं कीदृशं विवक्षितमित्याशंकायां जगत्स्रष्टृत्वादिना रूपेण ज्ञानमेव ब्रह्मज्ञानं विवक्षितमित्यभिप्रेत्य सृष्ट्यादिकमुच्यत इति नासंगतिरिति भावः । महैश्वर्यं जगत्स्रष्टृत्वादिरूपम् । उच्यते सोऽकामयत इत्यादिनेति शेषः । एवं सोऽकामयत इत्याद्युत्तरप्रकरणस्य संगतिमभिधायेदानीं तद्वाक्यजातं प्रमाणेनैव व्याचष्टे- **सत्त्वकामयदित्यादिना** । तत्र 'सोऽकामयत बहुःस्याम्' इति वाक्यं व्याचष्टे- **सत्त्विति** । सः प्रलयस्थो विष्णुः कामनायाः अमोघत्वरूपविशेषसूचनाय 'लयस्य त्वष्टमो भागः सृष्टिकाल उदाहृत' इति वचनोक्तकालविशेषसूचनाय वा तु शब्दः । तथोक्तं 'ईक्षाबभूव परनामनिमेषकान्ते' इति । अस्य सृष्टस्य जगतः

यद्वा इत्येवाकामयदित्येवं तुशब्द एवार्थे । ब्रह्मणो जगदाकारेण परिणामभवनकामनाव्यावृत्त्यर्थः । ननु तर्हीदं सर्वमसृजत इत्युत्तरवाक्य-मसंगतम्। नह्यन्यार्थसंकल्पमभिधायान्यक्रियाभिधानं संगच्छते । नहीश्वरो स्वतन्त्रो सत्यकामो वा इत्यत आह- **स्याज्जगच्चेति** । नियामकत्वस्य नियम्यापेक्षत्वान्नियामक बहुस्वरूपत्वार्थं नियम्यं जगत्स्यादित्यचिन्तयदित्यर्थः । अत एव 'सृष्ट्वा जगदिदं सर्वम्' इति बहुरूपभवनकामनाप्रकारो विवृतः । यथोक्तमनुव्याख्याने । तदर्थं ह्यसृजज्जगदिति । प्रजायेयेत्यस्यायमर्थ इत्यप्याहुः । स तपोऽतप्यत इत्यत्र कृच्छ्रादिरूपं सन्तापात्मकं विचारापरपर्यायालोचनात्मकं वा तपश्च कारेति प्रतीयते तदयुक्तम् ।

तथात्वेऽप्राप्तकामत्वस्याज्ञात्वस्य च प्राप्तेरतः प्रकृते विवक्षितं तपःशब्दार्थमाह- **स्यादित्यालोचनादिति** । स्यादित्यस्य नञा सम्बन्धः । आलोचनं नाम ज्ञानमेव विवक्षितं नतु विचारात्मकं सन्तापात्मकं वा । तथाचालोचनात् ज्ञानरूपात्तपसोऽन्यत्तपः सन्तापात्मकं विचारात्मकालोचनात्मकं वा विष्णोर्न स्यात् नाभिप्रेतम् । इतिशब्दः समाख्याप्रदर्शकः । 'यः सर्वज्ञः सर्ववित्' 'यस्य ज्ञनमयं तप' इति श्रुतेरित्यर्थः । तथा च स तपोऽतप्यत इत्यस्य स्वोदरसंस्थं जगद्ददर्शेत्यर्थो वर्णनीयः । उक्तं च भगवत्पादैः । 'दृष्ट्वा स चेतनगणान् जठरे शयानान्' इति । यथोक्तं कर्मनिर्णयटीकायाम् । यस्य तपो ज्ञानमयं नत्वा लोचनात्मकं वा सन्तापात्मकं वा अज्ञो ह्यालोचते । अप्राप्तकामश्च तपस्यति । तपस्तप्त्वा 'इदं सर्वमसृजत' इत्यस्य व्याख्यानमेतदिति ।

ननु कृष्णाद्यवतारेषु रुद्रादीन्प्रति सन्तापाद्यात्मकतपःकरणस्य दर्शनात्कथमेतदित्यत आह- **अवतारेष्विति** । स्यादित्यनुवर्तते । इदं मे इति शेषः । तथाचावतारेषु इदं मे स्यादित्येवं तपस्विनामनुकृतिर्बाह्यवृत्त्यैव नत्वन्तर्वृत्त्येत्यर्थः । उक्तं च तात्पर्यनिर्णये भगवत्पादैः । 'त्वामाराध्य तथा शम्भो ग्रहीष्यामि वरं सदा' इत्यादिवचनादिति ज्ञातव्यम् । उक्तं च तात्पर्यनिर्णये भगवत्पादैः । 'ययौ कैलासमद्रीशं चकारेव तपोऽत्र च । स्वीयानेव गुणान्विष्णुर्भुंजन्नित्येनशोचिषा । शार्वं तपः करोतीव मोहयामास दुर्जनान् । विमोहनायासुरसर्गिणां प्रभुः स्वयं करोतीव तपः प्रदर्शयेत् । अहं त्वां पूजयिष्यामि लोकसंमोहनोत्सुखः । कृष्णोऽप्ययोग्यजनमोहनमेव वाञ्छन् तुष्टाव रुद्रहृदिगं निजरूपमेव इति ।

इदं सर्वमसृजत इत्यत्रोक्ता सृष्टिर्नाम ब्रह्मणो जगदाकारेण परिणाम एवेति भास्करस्तदयुक्तम् । 'अविकारः सदा शुद्धो नित्य आत्मा सदा हरिः' इत्यादिप्रमाणविरोधादतोऽत्राभिप्रेतां सृष्टिं विवृणोति- **सृष्टिर्नामेति**।

'स्वदेहादिच्छया विश्वं भुक्तपूर्वं जनार्दनः' । ससर्ज मातापितृवदूर्णनाभिवदेव वा । प्रधानं परिणाम्येशो निर्विकारः स्वयं सदा इत्यनुव्याख्यानानुसारेणैतदर्थो द्रष्टव्यः । अत्र योऽखिलं जगज्जठरे निधाय लक्ष्मीभुजान्तरतः सन् नारायणः प्रलये आसीत्तस्मादेव मूलरूपाज्जगत्सृष्टिर्भवतीति प्रतीयते । तथा तत्सृष्ट्वा तदेवानुप्राविशत् इत्यत्रापि मूलरूपिण एव हरेः प्रवेश उच्यत इति प्रतीयते तां प्रतीतिं वारयन् तत्र विशेषणान्याह - **यद्यपीत्यादिना** । यद्यपीदं सर्वं जगत् महात्मनोऽपरिच्छिन्नस्य मूलरूपिणः स्वस्यैवोदरस्थम् । तथाच तस्मादेव बहिर्निष्क्रमणेनोत्पत्तुमर्हं तथापीत्यर्थः। स्वेच्छयेति शेषः । द्वितीयेन रूपेण द्वितीयादिरूपेण वासुदेवप्रद्युम्नानिरुद्धरूपेण । यथोक्तं तात्पर्यनिर्णये । व्यूढश्चतुर्धा भगवान् स एको मायां श्रियं सृष्टिविधित्सयार । रूपेण पूर्वेण स वासुदेवनाम्ना विरिञ्चं सुषुवे च सातः । ससृष्टिहेतोः प्रद्युम्नतामुपगतः कृतितां च देवी । निर्देहकान्स भगवाननिरुद्धनामा जीवान्स कर्मसहितानुदरे निवेश्य । 'चक्रेऽथ देहसहितान् क्रमशः स्वयंभूप्राणात्मशेषगरुडेशमुखान्समग्रान्' इति । रूपान्तरेण अनिरुद्धादिरूपान्तरेण । अनेन जीवेनात्मनानुप्रविष्टमिति श्रुतेः । जीव इति भगवतोऽनिरुद्धस्याख्येति श्रुतिः । स जीवनामा भगवान्प्राणधारणहेतुत इत्यादिस्मृतेः । 'नारायणानिरुद्धौ तु भोज्यवस्तुषु संस्थितौ । संकर्षणश्च प्रद्युम्नस्तत्र भोक्तृषु संस्थितौ । अवकाशप्रदो नित्यं वासुदेवो नभः स्थितः । स्थितो अनिरुद्धो हृदि चाखिलस्य' इत्यादिस्मृतेश्चेति ज्ञातव्यम् ।

अत्राह भास्करः । सच्चत्यच्चाभवत्। निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च विज्ञानं च सत्यं चानृतं च सत्यमित्यस्यां श्रुतौ ब्रह्मणः सत्त्यदादिशब्दाभिधेयमूर्तामूर्तराशिद्वयात्मकविश्वभाव एवोच्यते । अतः 'स इदं सर्वमसृजत' इत्यत्रापि सृष्टिः परिणामरूपैव व्याख्येयेतितदयुक्तम् । 'स इदं सर्वमसृजत' 'तत्सृष्ट्वा तदेवानुप्राविशत्' । तदनुप्रविश्य सच्चत्यच्चा

भवत् इति वचनेन ब्रह्मणः सदादिभवनात्पूर्वमेव मूर्तामूर्तरूपविश्वोत्पत्तेर-वगतत्वात् । तथाच नेदं सदादिभवनं विश्वोत्पादनं विश्वोत्पत्त्युत्तर-कालीनत्वात् । या क्रिया यदुत्तरकालीना नासौ यथा भुक्त्वा चरतीत्युक्तचरणम् । न पूर्वकालीनभोजनमिति प्रयोगसम्भवात् । अनुपपन्नार्थं चान्यथावाक्यमापद्यते । नहि मृत्सुवर्णादिकं घटरुचकादि सृष्ट्वा तदनुप्रविश्य तद्भवति ।

यद्वा विश्वं सत्त्यदादिशब्दार्थतया अत्र न विवक्षितम् । तद्भवनात्पूर्वकालीनोत्पत्तिकत्वात् । भोजनवदित्यादिप्रयोक्तव्यम् । ननु तर्हि कः श्रुत्यर्थः । जगद्भावं विना अवसादनकर्तृत्वादिधर्मयोगेन ब्रह्मैव सत्त्यदादिशब्दादिशब्दवाच्यं भवतीति ब्रूमः । ननु तर्हि तदनुप्रविश्येत्यस्या-न्वयो नास्ति । नहि ब्रह्मणोऽवसादनकर्तृत्वादिधर्मयोगे सदादिशब्दवाच्यत्वे वा जगत्प्रवेशस्योपयोगोऽस्ति । किञ्चैवं सति प्रसिद्धिविरोधः । सत्त्यदादिशब्दानां द्वे वाव ब्रह्मणो रूपे मूर्तं च स्थितं च यच्च सच्चत्यच्चेत्यादौ मूर्तामूर्तवाचितया प्रसिद्धत्वादिति चेन्न । यद्यप्यनन्यापेक्षयावसादन-कर्तृत्वादिधर्मयोगः सदादिशब्दवाच्यता चास्त्येव ब्रह्मणस्तथापि तत्तद्वस्तुगतरूपेणैव तत्तच्छब्दवाच्यत्वमित्यस्त्येव व्यवस्था। तथाच मूर्तामूर्तजगद्गतेन रूपेणैव ब्रह्म सदादिशब्दवाच्यमतस्तदनुप्रविश्येति सम्बध्यते । परमेश्वरसन्निधानादेव मूर्तादेरपि सदादिशब्दवाच्यता चोपपद्यत इति भावेन यदनिरुक्तनिलयनविज्ञानसत्यपदवाच्यं विश्वं तथा सन्निरुक्ता-निलयनाविज्ञानानृतशब्दवाच्यं च विश्वं दर्शयंस्तत्र तच्छब्दवाच्यतायां निमित्ततया अवस्थिते विष्णौ तान् शब्दान् निरुच्य दर्शयति - **त्यच्चानिरुक्तमित्यादिना** । त्यत् अनिरुक्तं विज्ञानं तथा निलयनं सत्यं चेति शब्दपञ्चकेन महान्महत्तत्वाभिमानी ब्रह्मा प्राणस्तथा श्रीश्च कथ्यते इति शेषः । नवा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्यामिति

वचनादविज्ञानं चानिलयनमिति नवाक्षरत्वेऽपि न दोषः । सदादिशब्दपञ्चकेन प्रकृतिप्राणयोः श्रीमुख्यप्राणयोः । उपलक्षणमेतत् । महतो ब्रह्मणश्च सकाशात् परं अन्यत् विश्वं कथ्यत इत्यर्थः । किं स्वातन्त्र्येण नेत्याह- **तद्वेति** । तुशब्दोऽवधारणे । तदन्तर्गतविष्णु-सम्बन्धादेव श्यादिकं विश्वं त्यदादिशब्दवाच्यमित्यर्थः ।

विष्णोरपि तच्छब्दवाच्यत्वं किमन्यसम्बन्धादेवेति शंकायां नेत्याह- **स्वत इति** । **स्वातन्त्र्येणेत्यर्थः** । तथाच तच्छब्दप्रवृत्तिनिमित्तानां विष्णोरेव स्वतोऽन्यानधीनतया सद्भावात् विष्णोरेव मुख्यतः तच्छब्दवाच्यत्वम् । अन्यत्र विद्यमानस्याप्यल्पस्य प्रवृत्तिनिमित्तस्य तदधीनत्वादमुख्यतोऽन्यस्य तच्छब्दवाच्यत्वमिति भावः । यथोक्तम् । 'स्वातन्त्र्यं तद्गतत्वं च शब्दवृत्तेर्हि कारणम् । स्वातन्त्र्यं तत्र मुख्यं स्यात्' इति । कानि तच्छब्दप्रवृत्तौ निमित्तानि यानि विष्णौ अनन्याधीनतया वर्तन्ते इत्यतः तानि दर्शयति - **तत इत्यादिना** । त यत इत्यनयोः क्रमेणार्थः ततोऽव्याप्तो नियामकश्चेति। अवाच्यतः अवाच्यत्वतः । तथाच निर्नितरां साकल्येनोक्तं न भवतीत्यनिरुक्तमित्यर्थः। तत्र हेतुरानन्त्यादिति । साधुस्वरूपतः साधुगुणस्वरूपत्वादित्यर्थः । सत्यं साधुगुणत्वात्स इति वचनात् । एवमव्याख्याने द्वितीयसत्यशब्देन पौनरुक्त्यप्रसंग इति ज्ञातव्यम् । सदादिशब्दप्रवृत्तौ निमित्तं दर्शयति- **अवसादेति** । षद्लृविशरणगत्यवसादनेष्विति धातुव्याख्यानादवसादनं खेदः मनः शैथिल्यं सच्छब्दप्रवृत्तिनिमित्तं निरुक्तशब्दप्रवृतिनिमित्तं सुवाच्यत्वम् । अनिलयनशब्दलब्धार्थो दौर्बल्यम् । सर्वाधारत्वाभावोपपादकत्वात् तस्येति ज्ञातव्यम् । अज्ञप्तीत्यविज्ञानशब्दप्रवृत्तिनिमित्तम् । असाधुतेत्यनृत-शब्दप्रवृत्तिनिमित्तम् । ऋतशब्दपर्यायसत्यशब्दस्य साधुस्वरूपार्थतया व्याख्यातत्वात् । प्रकृतिः श्रीदेवी। प्राणशब्देन ब्रह्मापि ग्राह्यः । अन्यत्र

प्रकृत्यादित्रितयभिन्ने जगति अवसादादीन् कुर्वन्हरिः वर्तते यतो अतस्तन्नामकः सदादिनामपञ्चकवाच्य इति योजना । सत्यमभवदित्यत्र-स्थद्वितीयसत्यशब्दार्थमाह- **साधुस्वरूप इति** । सन् निर्दुष्टो हरिः । मंगलानां च मंगलम् इति वचनात्साधुस्वरूपो मंगलस्वरूपः सन्नेव यतः सर्वत्रास्ति अतस्सत्यनामा सत्येति नामवानित्यर्थः ।

ननु सत्यादिशब्दानां जगद्वाचित्वपक्षे कथं व्युत्पत्तिः कर्तव्येत्यतः तत्प्रकारं दर्शयति- अनेन गतत्वादेर्निमित्ताज्जगति अनृतादिकं नामेति । तथाच प्रकृत्यादिभिन्नं जगत् अनचेष्टायामिति धातोरनेन चेष्टकेन ऋतं गतं प्रविष्टं यतोऽतोऽनृतम् । आदिपदेनासाधुत्वाच्चानृतम् । अविज्ञानं सर्वज्ञानरहितत्वात् । अनिलयनं सर्वाधारत्वाभावात् । निरुक्तं नितरामुक्तत्वात् । सत् अवसादनात् । खेदेन मनःशैथिल्ययुक्तत्वात् । तथा प्रकृत्यादिकं त्रयं ततत्वान्नियामकत्वाच्च त्यत् । अनिरुक्त-मवाच्यत्वात् । प्रकृतिर्निलयनम् । भगवदितरजगदाधारत्वात् । तदुभयातिरिक्तसर्वजगदाधारत्वान्महान्प्राणश्चेति ज्ञातव्यम् । विज्ञानं यथायोग्य भगवदितरसर्वविज्ञानात् । सत्यं साधुगुपस्वरूपत्वादिति ग्राह्यम् ।

नन्ववसादनसु वाच्यत्वदौर्बल्याज्ञस्यसाधुतानाममंगलत्वात् तन्निमित्तक-सदादिशब्दवाच्यत्वं कथं भगवतो युक्तमित्याशंकापरिहाराय प्राप्तं यदिदं किञ्च तत्सत्यमित्याचक्षते इति वाक्यं व्याचष्टे- **यदिदं किञ्चेति** । सत्यशब्दार्थः साधुतैवेति । स्वार्थे तल्प्रत्ययः। साध्वेव मंगलस्वरूपमेवेति तदर्थः । सन्निरुक्तादिशब्देन यदिदं किञ्च इति भाषितम्। तत्सर्वं साधुतैव साध्वेवेति हि प्रसिद्धमित्यर्थः । आचक्षत इत्यस्यार्थो हीति । एतदेव विविच्य दर्शयति- **अवसादनादिहेतुत्वमिति** । सर्वशः सर्वमवसादनादि-हेतुत्वं हि यस्माद्भगवति साधुतैव साध्वेव मंगलमेव अवसादादि-स्तदधिकरणत्वमिति यावत् । असाधुता असाध्वेवाऽमंगलमेवेत्यर्थः ।

नन्ववसादनादिहेतुत्वस्य साधुत्वेऽपि प्रकृते किमायातम् । नहि अवसादादिहेतुत्वं प्राक् प्रतिपादितं किन्त्ववसादादिकमेवेत्यतोऽवसादनादि-हेतुत्वमेव प्रतिपादितमित्याह- **तत्कर्तृत्वं हीति** । हि यस्मात् तत्कर्तृत्वं अवसादादिकर्तृत्वमेवास्माभिर्भाषितम् । अवसादसुवाच्यत्वदौर्बल्याज्ञस्य-साधुताः । प्रकृतिप्राणतोऽन्यत्र कुर्वंस्तन्नामको हरिः इत्युक्तत्वादतो न कोऽपि दोष इत्यर्थः । **यथोक्तमनुव्याख्याने** । एवं दुःख्यादिशब्दाश्च स्वातन्त्र्यापेक्षयोदिताः । नैव दोषा हरौ तद्वद्बुध्योक्ता दोषकारिणः। तस्मात्ते दोषशब्दाश्च तत्रैव गुणवाचका इति ।। २.१४ ।।

**श्री.खं-** एवं समासेनोत्तरमुक्त्वा अज्ञो नैवैतदाप्नोति ज्ञान्येवैतदाप्नुते तत्रापि कश्चिदेव सम्यक् अश्नुत इत्येतद्विस्तरेण यदा ह्येवैष इत्यादिना वक्तुं ब्रह्मावाप्तिरूपो मोक्षस्तावत्तत्प्रसादादेव भवति प्रसादश्च स्वातन्त्र्यादि-रूपमाहात्म्यज्ञानसाध्य इत्याशयेनाधिकारिणो मोक्षसाधनीभूतप्रसादोत्पादनाय ज्ञातव्यतया सृष्टिकारणत्वादिरूपमाहात्म्यमुच्यते उत्तरप्रकरणेन ।

यद्वा ज्ञान्येवैतदाप्नुते इत्युक्तम् । तत्र ब्रह्मज्ञानं नाम कीदृशं विवक्षितमिति शंकायां जगत्स्रष्टृत्ववत्प्रवेष्टृत्वसर्वदेवादिभयप्रदत्वमुक्ति-प्रदत्वादिना रूपेण ज्ञानमेव ब्रह्मज्ञानं विवक्षितमित्याशयेन ब्रह्मणः सृष्टिकारणत्वादिरूपं माहात्म्यमुच्यते उत्तरप्रकरणेन । तत्र ब्रह्मण-स्सृष्टिकारणत्वं नोपादानत्वेन किन्तु कुलालादिवन्निमित्ततयैवेत्यभिप्रेत्य सृष्ट्यपेक्षयापूर्वभाविनं व्यापारमाह- **सोऽकामयतेत्यादिना** । सः प्रलयकालगो नारायणोऽकामयत । कामनाप्रकारमेवाह- **बहुःस्यामिति** । अहमादौ प्रजायेय वासुदेवादिरूपेण प्रादुर्भवानि । नियम्यं जगच्च स्यात् तदनन्तरं त्यदादिशब्दवाच्यश्रीब्रह्मादिजगन्नियामकतयाहं बहुरूपः स्यां इत्यकामयत । एवं कामनानन्तरं सप्रलयकालगो नारायणस्तपोऽतप्यत । ज्ञानात्मकं तपश्चकार । स्वोदरस्थं जगद्ददर्शेति यावत् । स तपस्तप्त्वा

स्वोदरस्थं जगत् दृष्ट्वा वासुदेवादिरूपोऽभवदिति वक्तव्यं तदिदं सर्वमसृजत । वासुदेवादिरूपेण स्वोदरात् बहिर्निष्कास्य वियदधिकरणव्युत्पादितावान्तर-विशेषवदकरोदित्यर्थः । तत्सृष्ट्वा तन्नियामकतया स्वयमप्यनिरुद्धादि-बहुरूपो भूत्वा सृष्टं तदेव जगदनुप्राविशत्। तत्सत्त्यदादिशब्दवाच्यं जगदनुप्रविश्य । स्वयमपि सच्चत्यच्चाभवत् । स्वयमपि सत्त्यदादिशब्द-वाच्योऽभवदित्यर्थः । तत्र त्यदनिरुक्तनिलयनविज्ञानसत्यशब्दैः प्रकृति-चतुर्मुखप्राणाख्यं जगदुच्यते । तत्रस्थो हरिस्तत्वे सति नियामकत्वा-वाच्यत्वसर्वाधारत्वसर्वविज्ञानसाधुगुणस्वरूपत्वनिमित्तैः प्रकृत्यादिगतत्वादि-प्रेरकतया मुख्यतस्त्यदादिशब्दवाच्योऽभवत् । प्रकृत्यादित्रितयभिन्नं जगदवसादनात्सदित्युच्यते । सुवाच्यत्वान्निरुक्तम् । दौर्बल्येन सर्वाधारत्वाभावादनिलयनम् । असर्वज्ञत्वादविज्ञानम् । असाधुत्वादनृतम् । ऋतशब्दपर्यायस्य सत्यशब्दस्य साधुत्वार्थकत्वात् । यद्वा अनेन चेष्टकेन हरिणा ऋतत्वात् गतत्वात् प्रविष्टत्वादनृतम् । अवसादनादिकर्तृत्वा-त्तदन्तर्गतो हरिरेव मुख्यतस्तच्छब्दवाच्योऽभवदित्यर्थः । यथोक्तमनुव्याख्याने । सच्चत्यच्चाभवत् इति नास्य विश्वत्वमुच्यते । जगद्गतेन रूपेण ब्रह्मैव हि तथोच्यत इति । एवं सर्वत्र स्थितस्य हरेर्नतत्प्रयुक्तलेपोऽस्तीत्याह - **सत्यमभवदिति** । सर्वत्रास्थितोऽपि हरिः सत्यं साधुगुणस्वरूपः मंगलस्वरूप एवाभवत् । न तत्प्रयुक्तलेपवानित्यर्थः। नन्ववसादसुवाच्यत्व-दौर्बल्याज्ञत्यसाधुतानाममंगलत्वात्तन्निमित्तक सदादिशब्दवाच्यत्वं कथं युक्तमित्यत आह- **यदिदं किञ्च तत्सत्यमित्याचक्षत** इति । सन्निरुक्तादिशब्देन यदिदं किञ्च भाषितं अवसादनादिकर्तृत्वं तत्सर्वं सत्यं साधु मंगलरूपमेवेत्याचक्षते विद्वांस इत्यर्थः । अवसादाद्यधिकरणत्व-स्यैवासाधुत्वात्तस्य चास्माभिरनभिप्रेतत्वादिति भावः । यथोक्तं स्वातन्त्र्या-पेक्षया विष्णौ दोषो नामंगलोक्तित इति ।

नन्वत्र सच्चत्यच्चाभवदिति वचनात् ब्रह्मणोऽवसादनकर्तृत्वतत्त्व-नियामकत्वादिगुणजातं सादीति प्राप्नोति । तच्च प्रमाणविरुद्धं अतः कथं अभवदिति प्रयोग इति चेत् अस्त्यत्र सम्प्रदायविशेषः । ब्रह्म मूर्तामूर्तात्मकं विश्वं सृष्ट्वा तत्प्रेरकत्वेन नानारूपैस्तदेव विश्वं प्रविश्य प्राक् सृष्टेरुपदेष्टृणां उपदेश्यानां च शरीरेन्द्रियवतामभावादप्रतीतगुणकं सदथेदानीमुपदेष्टृणामुपदेश्यानां च शरीरेन्द्रियवत्त्वे सति प्रतीतगुणकं भवति । तदपेक्षयाऽभवदिति प्रयोग इति द्रष्टव्यम् । तदनेन पारमेश्वरी सृष्टिर्योग्यानां स्वगुणज्ञानार्थेत्युक्तं भवति । यथोक्तं भगवत्पादैः । 'सोऽयं विहार इह मे तनुभृत्स्वभाव सम्भूतये भवतीति' । सोऽयं मे सृष्ट्यादिरूपो विहारः क्रीडा तनुभृतां योग्यानां स्वस्य स्वतन्त्रस्य मम ये भावाः धर्माः तत्वादिगुणास्तेषां सम्भूतये ज्ञानाय भवतीति तदर्थः । यथोक्तमनुव्याख्याने । व्यक्तिरुक्तगुणानां हि पुरुषापेक्षया नृणाम् । भवेदभवदित्यस्मात्प्रयोगश्चात्र युज्यत इति ।। २.१४ ।।

**वरद-** ननु भगवज्ज्ञानादेव मोक्ष इति वक्तुं तत्स्वातन्त्र्यज्ञापनाय सृष्टिप्रवेशादिकं कथ्यत इति न घटते । ज्ञानान्मोक्ष इति पक्षे विष्णुस्वातन्त्र्यस्य अप्रयोजकत्वादित्यत आह - **माहात्म्यज्ञानत इति** । अयमर्थः । ज्ञानान्मोक्षः इति पक्षेऽपि न केवलं ज्ञानसामर्थ्यादेव मोक्षः किन्तु प्रसन्नाद्विष्णोरेव । न चैवं ज्ञानस्य वैय्यर्थ्यम् । मोक्षसाधन-प्रसादसाधनत्वात् । न च यादृशतादृशज्ञानं प्रसादसाधनं किन्तु विष्णोः स्वातन्त्र्यादिगुणविषयमेव । अतो विष्णोः स्वातन्त्र्यादिज्ञापनार्थं सृष्ट्यादिकथ्यत इति ।

अस्तु सृष्ट्यादिकथनस्य स्वातन्त्र्यादिज्ञापनार्थं तत्त्वेव भयं विदुषो मन्वानस्य इत्यादिना तस्य भयहेतुत्वं किमित्युच्यत इत्यतस्तस्य सङ्गतिं करोति तद्वशा इति । एतावदीश्वरत्वेन प्रसिद्धाः अग्न्यादिदेवताः ।

उपलक्षणमेतत् । **ब्रह्मादिईश्वरा अपि तद्वशाः तस्य विष्णोर्वशाः** यतः तदन्ये **तेभ्यः अग्न्यादिभ्यो वरा देवाः तद्वशा इति किमु वक्तव्यम्** । अतः कारणात् स एक एव **मुक्तिदो नान्य इति** ज्ञापयितुं तस्य भयहेतुत्वमुच्यत इत्यर्थः । एवं 'सोऽकामयत' इत्यारभ्य 'सैषाऽनन्दस्य मीमांसा भवति' इत्यन्तस्य प्रकरणस्य एकप्रकारेण सङ्गतिमुक्त्वा प्रकारान्तरेणापि सङ्गतिमाह- **स विज्ञेय इति** । **रसह्येवायं** लब्ध्वानन्दी भवति इति विष्णुज्ञानादेव मोक्ष इत्येतद्विस्तरेण प्रतिपाद्यते । तत्र विष्णुविज्ञानं केन प्रकारेण, किं सर्वाभिन्नमित्येवमाकरेण किं वा सर्वविलक्षणत्वेन ऐश्वर्यादिगुणयुक्तत्वेनैव तस्य ज्ञानं सम्पादनीयमिति भावेन सोऽकामयत इत्यादि सृष्टिप्रकरणेन तस्य विष्णोर्महदैश्वर्यमुच्यत इत्यर्थः । एवं विष्णुसृष्टिप्रकरणस्य गतिमुक्त्वा तद्व्याख्याति- **स त्विति** ।

ननु स्वातन्त्र्यादिगुणकस्य विष्णोः कथं सृष्ट्यर्थत्वेन तपश्चरणं युज्यत इत्यत आह- **स्यादिति** । ननु विष्णोरपि रामाद्यवतारेषु देहसन्तापरूपं तपो विद्यत इत्यत आह- **अवतारेष्विति** । परमेश्वरस्य सृष्टिर्नाम जगदाकारेण परिणाम एवेति केचिदाचक्षते । तन्निरासार्थमाह- **सृष्टिरिति** । इदं च विष्णोर्जगत्स्रष्टृत्वं वासुदेवमूर्तिमन्तरेण जगत्सर्जने शक्तो वा न वा । यदि शक्तस्तर्हि वासुदेवव्यवधानं नापेक्षितम् । अशक्तत्वे तस्यास्वातन्त्र्य-प्रसङ्ग इति । एतत्परिहरति तत्सृष्ट्वा तदेवानुप्राविशत् इति । अस्यार्थो रूपान्तरेणाविशदिति । तदनुप्रविश्य । सच्च त्यच्चाभवत् इत्यादिना हरेः सत्यादादिभावोऽभिधीयते । तत्र किमिदं सत्यादिकं नाम यद्भावो हरेरुच्यत इत्यत आह- **त्यदिति** । महानिति । महत्तत्वम् । त्यच्च अनिरुक्तं विज्ञानं निलयनं सत्यम्' इत्येतैः पञ्चभिर्महत्तत्वं प्राणः श्रीश्चेति वस्तुत्रयमधीयत इत्यर्थः । सन्निरुक्तानऋताविज्ञानानिलयनशब्दैस्तु पञ्चभिः प्रकृतिप्राणयोः श्रीप्राणयोः सकाशाद्यत्परं अन्यत्तत्वं अहंकारपञ्चभूताधिकं तदुच्यत इति ।

ननु प्राणादीनां त्यदादिशब्दप्रतिपाद्यत्वं किं परममुख्यया वृत्याभिधीयते नेत्याह- **तेष्विति** । तेषु प्राणादिषु विष्णुः त्यदादिशब्दप्रवृत्ति-निमित्तगुणवान् तिष्ठति । तस्य सम्बन्धात् प्राणादयोऽपि त्यदादिशब्देन प्रतिपाद्यन्त इत्यर्थः । परममुख्यया वृत्या त्यदादिनामको विष्णुरेवेत्यर्थः । ननु विष्णोस्त्यदादिशब्दवाच्यत्वं केन निमित्तेनेत्यत आह- **तत इति** । **साधुस्वरूपत इति** । साधुगुणस्वरूपत इत्यर्थः । इदानीं सन्निरुक्ता-निलयाविज्ञानाऽनृतशब्दानां हरौ प्रवृत्तिनिमित्तमाह- **अवसादेति** । प्रकृतिप्राणत इत्युपलक्षणम् । महत्तत्वादित्यपि ग्राह्यम् । महत्तत्व-प्रकृतितोऽन्यत्र जगति अवसादादिकतृत्वाद् हरिः सदादिनामभिरुच्यत इत्यर्थः । अत इति पदं तन्नामको हरिः इत्यनेन सम्बध्यते । द्वितीयसत्यशब्दार्थमाह- **साधुस्वरूपः सन् इति** । प्रथमसत्यशब्देन साधुगुणस्वरूपत्वमुक्तम् । अत्र तु स्वरूपस्य साधुत्वमुच्यत इति भेदः । ननु जगति त्यदादिशब्दाः केन निमित्तेन वर्तन्त इत्याकाङ्क्षायाः प्रवृत्तिनिमित्तमेकदेशोत्कीर्तनेनातिदिशति- **अनृतादिकमिति** । अनश्चेष्टको हरिरिति । न ऋतं प्राप्तम् अनृतमित्यर्थः । त्यद् शब्देनावसदादियुक्तत्वं सदादिशब्दप्रवृत्तिनिमित्तं ज्ञातव्यम् । ननु अनिलयनाद् विज्ञानादि-भावस्यामाङ्गल्यरूपत्वात् किमर्थं परमात्मनस्तद्भावोऽभिधीयत इत्यत उच्यते यदिदं किञ्च तत्सत्यमित्याचक्षते इति । तस्यार्थो यदिदं किञ्च भाषितमिति । सन्निरुक्तशब्दोक्तार्थस्य साधुत्वमुपपादयति-**अवसादनादीति** ॥२.१४॥

**काशी-** एवं सङ्क्षेपेणोक्तमुत्तरत्र विवरणीयं अन्यथा सर्वसाधारणासम्यक् कृत्वादाववान्तरवैचित्र्याद्यनवगमात् । तत्कुतः सोऽकामयतेत्यादिना सृष्ट्यादिकमुच्यत इत्यत्र यत्परेणोक्तं ब्रह्मास्ति नास्ति वेति प्रश्नस्या-स्त्येवेत्युत्तरमभिप्रेत्य स्रष्टृत्वेन तदुपपाद्यते । सत एव लोके जनकत्व-

दर्शनाद्ब्रह्मणश्च सर्वजनकत्वात्सत्वमेवेति । तदयुक्तम् । आत्मन आकाशः सम्भूत इत्यादिना प्रागेव सर्वजनकत्वस्योक्तत्वात् । तावतैव तत्सत्वसिद्धेः सोऽकामयत तदेवानुप्राविशत् सच्चत्यच्चाभवदित्यादेर्वैयर्थ्याच्च । निर्विकारैकरसापरिछिन्नस्य कामप्रवेशाद्यनुपपत्तेश्चेत्याशयेन प्रमाणेनैवोत्तरस्य सङ्गतिमभिप्रायं चाह- **अज्ञ इति** । एतद्ब्रह्म अज्ञो नैवाप्नोति ज्ञान्याप्नुत एव तत्रापि ज्ञानी विशिष्ठज्ञानवानेवावाप्नुते सम्यगाप्नोतीत्यर्थः । तज्ज्ञापयितुमुपपादयितुं तस्य विष्णोः स्वातन्त्र्यज्ञापनाय च सृष्टिं सृष्टेर्प्रवेशं चाहेत्यर्थः । ननु सृष्ट्यादिकथनेनैव कथमुक्तार्थोपपादनमित्यत आह- **माहात्म्यज्ञानत इति** । यतो महान्तः स्वगतमाहात्म्यज्ञानतस्तु तज्ज्ञानिन्येवेति यावत् । प्रीतिं यान्ति अतो विष्णुमाहात्म्यज्ञापनाय सृष्ट्यादिकमाहेति पूर्वेणान्वयः । अयं भावः न ज्ञानमात्रं मोक्षमुख्यहेतुः । किन्तु विष्णुप्रसादः 'यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेण' इति श्रुतेः । प्रसादश्च महात्म्यज्ञानादेव । लोके तथा दर्शनात् 'न तादृशीप्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशीस्यात्' इति श्रुतेश्च अतो स्रष्टृत्वादिमाहात्म्यज्ञानिन्येव तत्प्रीतिसम्भवात्तस्यैव तत्प्राप्तिः ज्ञानतारतम्याधीनप्रीतितारतम्याच्च प्राप्तितारतम्यं अज्ञस्य तदभावादप्राप्तिः न चाज्ञस्यापि श्रवणादिना ज्ञानसम्भवः नियामकत्वेन तत्तदन्तः प्रविष्टस्य विष्णोः प्रेरणमन्तरेण तदसम्भवात् तस्य स्वातन्त्र्येण योग्येष्वेव ज्ञानादिप्रेरकत्वादिति नन्वग्न्यादीनामपि दहनादिकतृत्वदर्शनात्कथं विष्णोरेव स्रष्टृत्वादिना स्वातन्त्र्यमित्यतो नाग्न्यादीनां दहनादिस्वातन्त्र्यं किन्तु विष्णुवशत्वमेवेत्याशयेन प्रवृत्तस्य तत्वेव भयं विदुष इत्यादेः प्रकृतसगतत्वादभिप्रायमाह तद्वशा इति ईश्वराश्च स्वस्वकर्मसमर्था अप्यग्न्यादयोऽपि विष्णुवशा एव किम्वन्ये तदवरा इत्यनेन भीषास्मादिति श्लोकस्य कैमुत्येन सर्वेषां विष्णुवशत्वे तात्पर्यमुक्तं भवति । एतावता

लब्धमर्थं रसह्येवायं लब्ध्वानन्दी भवतीत्यादिवाक्याभिप्रेतमाह मुक्तिद इति यत सर्वे तद्वशास्ततः स एवैकः स्वतन्त्रस्ततः स एव मुक्तिद इत्यर्थः । सोऽकामयतेत्यादिप्रकारान्तरेण प्रकृतसङ्गतिमाह- **स विज्ञेय इति** । ज्ञान्येव तं प्राप्नोतीत्युक्तं तत्कीदृशं ज्ञानं यद्भावाभावाभ्यां ज्ञान्यज्ञानिनो-स्तत्प्राप्त्यप्राप्तीत्यज्ञानादिवाक्यादज्ञस्यापि सत्यत्वादिना तत्सम्भवादित्या-शङ्कायां स विष्णुः पूर्णैश्वर्यादिरूपवान्विशेषतो ज्ञेयः पूर्णैश्वर्यादिरूत्वेन सुदृढज्ञानमेव तत्प्राप्तिहेतुरिति यावत् तादृशं च ज्ञानमज्ञानां न भवत्येव। किन्तु ज्ञानिन एवेत्येवेत्येतदभयं प्रतिष्ठां विन्दत इत्यादौ वक्तुमादौ तज्ज्ञानप्रकारप्रदर्शनायाः कथञ्चिदुत्पन्नस्याप्यदृढत्वात् । तस्य स्रष्टृत्वादि-महैश्वर्यमुच्यत इत्यर्थः ।

यद्वा ननु स्रष्टृत्वादिमाहात्म्यज्ञानाततप्रीत्या तत्प्राप्तिश्चेत् तर्हि तावदेव वक्तव्यं प्रकरणान्तरेषु गुणान्तराभिधानवैय्यर्थ्यमित्यत आह- **स विज्ञेय इति** । महाधिकारिभिः स्वयोग्यफलप्राप्त्यनुसारेण पूर्णैश्वर्यादिरूपवानेव विज्ञेयो नतु स्रष्टृत्वादिमात्रेणेत्यतस्तस्यानन्तगुमत्वेन पूर्णैश्वर्यं वेदेषूच्यत इत्यर्थः । सोऽकामयत बहुस्यामित्यादेर्बहुप्रपञ्चात्मना परिणतः स्यामिति व्याख्यानमसत् परमात्मनो निर्विकारत्वेन परिणामानुपपत्तेः यत्तुबद्धाध्यास-विषयः स्यामित्यर्थः शुक्तौ रङ्गरजतादीनामिवात्मन्याकाशादीनामध्यासा-सम्भवादिति तदपि न अध्यस्यतोन्यस्याभावेन स्वस्य च सर्वज्ञत्वेन सत्यभूताकाशाद्यन्तराभावेन चाध्यासानुपपत्तेः अधिष्ठानं च सदृशं तथ्यवस्तु द्वयं विना न भ्रान्तिरिति नियमात् इदं सर्वमसृजदित्यप्यनुपपन्नं शुक्तिरङ्गरजतादिकमसृजदिति व्यवहारादर्शनात् तदेवानुप्राविशदित्यप्ययुक्तं शुक्तेरारोपिते प्रवेशाभावादतः सत्यजगत्सृष्टिपरतया प्रमाणेनैव यथावद्व्याचष्ट- **सत्त्विति** । स पूर्वोक्तो नारायणो कामयदैच्छत् तु शब्दो नित्ये छायाव्यक्तिविशेषद्योतकः कामनाकारमाह इदं मुदरस्थं सर्वं

प्रकृत्यादिसृष्ट्वा अस्य नियामकतया परिणामादिशक्तिप्रेरकतया बहुरूपेण तत्परिणामतया महदादिकार्याणि सृष्ट्वा तत्तन्नियामकतया च बहुरूपो भवामीत्यकामयदित्यर्थः । अनेन प्रजायेत्यन्तर्णीतणिजर्थतयाप्रजयेयेति व्याख्यातं भवति स तपो तप्यतेत्यस्यार्थमाहस्यादिति स तपनाद्यात्मकं तपः कुतो नेत्यतः आह- **स्यादिति** । विष्णोराप्तकामस्य अन्यथा आप्तकाम-त्वानुपपत्तेरिति भावः यद्यप्यालोचनापरनामकचिन्ताया अज्ञानमूलकत्वेन दोषत्वस्य चिन्तासन्तापलोपोत्यादावुक्तत्वान्निर्दोषे तदनुपपत्तिः तथाप्यत्र चिन्तालोचनशब्दाभ्यां ज्ञानमेव विवक्षितं यस्य ज्ञानमयं तप इत्युक्तेः । तथा च स्वोदर.....दित्यर्थः । (...मूलकोशेषु त्रुटियोऽयं भागः)

ननु नारायणाद्यवतारेषु सन्तपनादिरूपस्यापि तपसो दर्शनात् । .... इत्यत आह- **अवतारेष्विति** । बाह्यवृत्या शारीरव्यापारेणा.....नुष्ठानं अन्तस्तु स्वानन्दानुभव एव नतु देवतान्तरोपासनमित्यर्थः उक्ता.....'ययौ कैलासमद्रीशं चकारेव तपोऽत्र च' 'स्वीयानेव गुणान्विष्णुः भुञ्जन्नित्येचिषा । शार्वं तपः करोतीवमोहयामास दुर्जनानित्यादि । ननु नित्यस्य प्रकृत्यादेरुत्पादनायोगात्कीदृशीसृष्टिरित्यत आह- **सृष्टिरिति** । स्वरूपात् मूलरूपशरीराद्बहिसृष्टिस्थाने निष्कासनं सृष्टिरित्यर्थः । तु शब्दो रूपान्तरेणेत्यादिविशेषद्योतकः इदमुपलक्षणं परिणामप्रापणमपि ग्राह्यम् । विकारो अव्यक्तजन्महीत्यादेः । ननु किं मूलरूपस्य जगत्सर्जने शक्तिर्नास्ति येन रूपान्तरेण सृष्टिरित्याशङ्कां वारयन्निदं सर्वमसृजत इत्यादिकं व्याचष्टे- **यद्यपीति** । महात्मनः पूर्णशक्तेमूलरूपस्य स्वोदरस्थमतः स्वयमेवस्रष्टुं शक्तस्तथाप्येष द्वितीयेन इच्छागृहीतवासुदेवादिचतुर्व्यूहान्तर्गत-प्रद्युन्माख्यरूपान्तरेण बहिराक्षिपेत् अनिरुद्धाख्यरूपान्तरेणाविशच्चेत्यर्थः । अनेन जीवेनात्मनानुप्रविश्येति श्रुतेः जीव इति भगवतो अनिरुद्धस्याख्येति श्रुत्यन्तराच्च । तथा च स्वेच्छयैव रूपान्तरग्रहणं नत्वशक्त्येति भावः ।

(इतः परं श्रीकाशीआचार्यव्याख्यानं नोपलभ्यते)।।

रा.खं- एवं वरुणकृतचरमप्रश्नस्य सङ्क्षेपेण उ इत्यभ्युपगमरूपेण संक्षिप्योत्तरोत्त्या प्रश्नान्तरोत्तरमपि लब्धमिहेत्यभिप्रेत्य भगवन्महिमज्ञान्येव मुच्यते । नाज्ञानी । तत्रापि हि सम्यक्कश्चिदिति सङ्क्षेपेणोक्तमर्थं 'रसं ह्येवायं लब्ध्वाऽनन्दी भवती' इत्यादौ विस्तरेण वक्तुं विष्णोः स्वातन्त्र्या-दिमहिमज्ञापनाय सृष्टिं सृष्टेषु प्रवेशं चाऽह- **सोऽकामयतेत्यादिना** । स आत्मा प्रजायेय अन्तर्णीतण्यर्थोऽयम् । जगत्प्रजनयेय जगत्सृजानि । तन्नियाकतया चाहं बहु स्यां बहुरूपः स्यां भवेयमिति अकामयत ऐच्छदित्यर्थः । यद्वा प्रजायेय प्रादुर्भवानीत्यर्थः । स तपः आलोचनम् अतप्यताकरोत् । जगत्सृष्ट्वा तन्नियामकतया बहुरूपो भवानीति व्यचिन्तयदित्यर्थः । स तपः तप्त्वा पर्यालोच्य यदिदं किञ्च जगदस्ति तत्सर्वमसृजत । स्वोदरस्थं जगत् बहिर्निर्यापयामासेत्यर्थः । स्वोदराद्बहि-र्निष्क्रामणरूपत्वात्सृष्टेः । तज्जगत्सृष्ट्वा तदेवानु तत्सृष्टमन्वेव प्राविशत् । प्रविश्य किमभवदित्यतः सत्त्वादिगुणयोगेन सदादिपदवाच्यः सन् स्वसम्बन्धेन जगतोऽपि सदादिशब्दवाच्यतासम्पादकोऽभवदित्याह- **सच्चेत्यादिना** । सीदत्यवसादयतीति सत् । सन्नामा सन् सन्नामकजगद्गतोऽभवत् । तनु विस्तारे इत्यतो ड्विच् प्रत्ययः कर्तरि । या प्रापणे इत्यतो डप्रत्ययः । कर्मधारयः । जगतो निरुक्तत्वप्रदत्वान्निरुक्तनामा सन् निरुक्तिवस्तुगतोऽ-भवत् । (अनन्तत्वाद्धेतोः) (अवाच्यत्व) निर्वक्तुमशक्यत्वहेतोर-निरुक्तनामा सन् अनिरुक्तजगद्गतोऽभवत् । सर्वाधारत्वान्निलयननामा सन् निलयनजगद्गतोऽभवत् । श्रीब्रह्मप्राणेभ्योऽन्यजगतो साधुताप्रदत्वादनिलयन-नामा सन् तन्नामकवस्तुगतोऽभवत् । सर्वाधारत्वान्निलयननामा सन् निलयनजगद्गतोऽभवत् । जगतो दौर्बल्यदातृत्वहेतुना अनृतनामा अनृताख्यवस्तुगतोऽभवदित्यर्थः। अत्र त्यच्चानिरुक्तं निलयनं विज्ञानमिति महान्ब्रह्मोच्यते । सत्यमिति श्रीप्राणरूपं जगत् । सन्निरुक्तानिलयना-

प्रकृत्यादिसृष्ट्वा अस्य नियामकतया परिणामादिशक्तिप्रेरकतया बहुरूपेण तत्परिणामतया महदादिकार्याणि सृष्ट्वा तत्तन्नियामकतया च बहुरूपो भवामीत्यकामयदित्यर्थः । अनेन प्रजायेत्यन्तर्णीतणिजर्थतयाप्रजयेयेति व्याख्यातं भवति स तपो तप्यतेत्यस्यार्थमाहस्यादिति स तपनाद्यात्मकं तपः कुतो नेत्यतः आह- **स्यादिति** । विष्णोराप्तकामस्य अन्यथा आप्तकाम-त्वानुपपत्तेरिति भावः यद्यप्यालोचनापरनामकचिन्ताया अज्ञानमूलकत्वेन दोषत्वस्य चिन्तासन्तापलोपोत्यादावुक्तत्वान्निर्दोषे तदनुपपत्तिः तथाप्यत्र चिन्तालोचनशब्दाभ्यां ज्ञानमेव विवक्षितं यस्य ज्ञानमयं तप इत्युक्तेः । तथा च स्वोदर.....दित्यर्थः । (...मूलकोशेषु त्रुटियोऽयं भागः)

ननु नारायणाद्यवतारेषु सन्तपनादिरूपस्यापि तपसो दर्शनात् । .... इत्यत आह- **अवतारेष्विति** । बाह्यवृत्या शारीरव्यापारेणा.....नुष्ठानं अन्तस्तु स्वानन्दानुभव एव नतु देवतान्तरोपासनमित्यर्थः उक्ता.....'ययौ कैलासमद्रीशं चकारेव तपोऽत्र च' 'स्वीयानेव गुणान्विष्णुः भुञ्जन्नित्येचिषा । शार्वं तपः करोतीवमोहयामास दुर्जनानित्यादि । ननु नित्यस्य प्रकृत्यादेरुत्पादनायोगात्कीदृशीसृष्टिरित्यत आह- **सृष्टिरिति** । स्वरूपात् मूलरूपशरीराद्बहिसृष्टिस्थाने निष्कासनं सृष्टिरित्यर्थः । तु शब्दो रूपान्तरेणेत्यादिविशेषद्योतकः इदमुपलक्षणं परिणामप्रापणमपि ग्राह्यम् । विकारो अव्यक्तजन्महीत्यादेः । ननु किं मूलरूपस्य जगत्सर्जने शक्तिर्नास्ति येन रूपान्तरेण सृष्टिरित्याशङ्कां वारयन्निदं सर्वमसृजत इत्यादिकं व्याचष्टे- **यद्यपीति** । महात्मनः पूर्णशक्तेमूलरूपस्य स्वोदरस्थमतः स्वयमेवस्रष्टुं शक्तस्तथाप्येष द्वितीयेन इच्छागृहीतवासुदेवादिचतुर्व्यूहान्तर्गत-प्रद्युम्नाख्यरूपान्तरेण बहिराक्षिपेत् अनिरुद्धाख्यरूपान्तरेणाविशच्चेत्यर्थः । अनेन जीवेनात्मनानुप्रविश्येति श्रुतेः जीव इति भगवतो अनिरुद्धस्याख्येति श्रुत्यन्तराच्च । तथा च स्वेच्छयैव रूपान्तरग्रहणं नत्वशक्त्येति भावः ।

(इतः परं श्रीकाशीआचार्यव्याख्यानं नोपलभ्यते)।।

**रा.खं-** एवं वरुणकृतचरमप्रश्नस्य सङ्क्षेपेण उ इत्यभ्युपगमरूपेण संक्षिप्योत्तरोक्त्या प्रश्नान्तरोत्तरमपि लब्धमिहेत्यभिप्रेत्य भगवन्महिमज्ञान्येव मुच्यते । नाज्ञानी । तत्रापि हि सम्यक्कश्चिदिति सङ्क्षेपेणोक्तमर्थं 'रसं ह्येवायं लब्ध्वाऽनन्दी भवती' इत्यादौ विस्तरेण वक्तुं विष्णोः स्वातन्त्र्यादिमहिमज्ञापनाय सृष्टिं सृष्टेषु प्रवेशं चाऽह- **सोऽकामयतेत्यादिना** । स आत्मा प्रजायेय अन्तर्णीतण्यर्थोऽयम् । जगत्प्रजनयेय जगत्सृजानि । तन्नियाकतया चाहं बहु स्यां बहुरूपः स्यां भवेयमिति अकामयत ऐच्छदित्यर्थः । यद्वा प्रजायेय प्रादुर्भवानीत्यर्थः । स तपः आलोचनम् अतप्यताकरोत् । जगत्सृष्ट्वा तन्नियामकतया बहुरूपो भवानीति व्यचिन्तयदित्यर्थः । स तपः तप्त्वा पर्यालोच्य यदिदं किञ्च जगदस्ति तत्सर्वमसृजत । स्वोदरस्थं जगत् बहिर्निर्यापयामासेत्यर्थः । स्वोदराद्बहिर्निष्क्रामणरूपत्वात्सृष्टेः । तज्जगत्सृष्ट्वा तदेवानु तत्सृष्टमन्वेव प्राविशत् । प्रविश्य किमभवदित्यतः सत्त्वादिगुणयोगेन सदादिपदवाच्यः सन् स्वसम्बन्धेन जगतोऽपि सदादिशब्दवाच्यतासम्पादकोऽभवदित्याह- **सच्चेत्यादिना** । सीदत्यवसादयतीति सत् । सन्नामा सन् सन्नामकजगद्गतोऽभवत् । तनु विस्तारे इत्यतो ड्विच् प्रत्ययः कर्तरि । या प्रापणे इत्यतो डप्रत्ययः । कर्मधारयः । जगतो निरुक्तत्वप्रदत्वान्निरुक्तनामा सन् निरुक्तिवस्तुगतोऽभवत् । (अनन्तत्वाद्धेतोः) (अवाच्यत्व) निर्वक्तुमशक्यत्वहेतोरनिरुक्तनामा सन् अनिरुक्तजगद्गतोऽभवत् । सर्वाधारत्वान्निलयननामा सन् निलयनजगद्गतोऽभवत् । श्रीब्रह्मप्राणेभ्योऽन्यजगतो साधुताप्रदत्वादनिलयननामा सन् तन्नामकवस्तुगतोऽभवत् । सर्वाधारत्वान्निलयननामा सन् निलयनजगद्गतोऽभवत् । जगतो दौर्बल्यदातृत्वहेतुना अनृतनामा अनृताख्यवस्तुगतोऽभवदित्यर्थः। अत्र त्यच्चानिरुक्तं निलयनं विज्ञानमिति महान्ब्रह्मोच्यते । सत्यमिति श्रीप्राणरूपं जगत् । सन्निरुक्तानिलयना-

विज्ञानानृतशब्दैस्तु प्रकृतिप्राणमहद्भ्योन्यजगदिति ज्ञेयम् । तत् सर्वत्रानुप्रविष्टं रूपं तद्दोषेण लिप्यते किम् । नेत्याह- **तत्सत्यमभवत्** । साधुस्वरूपं नर्दोषस्वरूपं 'सत् सत्यनामाऽभवदित्यर्थः । प्रकृत्यधिकरणानुव्याख्याने तु 'सत्वात्ततेर्वैदिकत्वात् सम्यग्वक्तुमशक्यतः । आश्रयत्वात्स्वाश्रयत्वाज्ज्ञानत्वाद् दुर्विदत्वतः । सत्ततेर्यातनाच्चैव ह्यप्राप्यत्वाच्च दुर्जनैः । नित्यसाधुगुणव्याप्तियन्तृरूपत्वतः सदा' इति प्रकारान्तरेणार्थ उक्तः । ननूक्तरीत्याऽवसादनादिदोषिता स्यादित्यत आह- **यदिदं किञ्चेति** । यदिदं किञ्च सन्निरुक्तादिशब्दार्थत्वमुक्तं तत्सर्वं सत्यं साध्वेवेत्याचक्षते वृद्धा इत्यर्थः । तदधीनत्वादिन्यायेन अन्यगतावसादनादिकं प्रति स्वातन्त्र्यहेतुना तच्छब्दवाच्यत्वोक्तौ दोषाभावादिति भावः ।।२.१४।।

## उपनिषत्

**तदप्येष श्लोको भवति । असद् वा इदमग्र आसीत् । ततो वै सदजायत । तदात्मान्ँस्वयमकुरुत । तस्मात् तत् सुकृतमुच्यत इति । यद् वै तत् सुकृतम् । रसो वै सः । रस्ँह्येवायं लब्ध्वाऽनन्दी भवति । को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवाऽनन्दयाति ।।२.१५।।**

## भाष्यम्

अनासाद्यस्त्वसन्नामा पूर्वं नारायणाभिधः ।
स आसाद्यश्च सन्नामा वासुदेवोऽभवत् प्रभुः ।।

स वासुदेवः स्वात्मानं चक्रे सङ्कर्षणादिकम् ।
तस्मात् तत् सुकृतं नाम स आनन्दो रसस्ततः ।।

आनन्दमेनं सम्प्राप्य मुक्तो मोदेन्न चान्यथा ।
आदीप्तस्त्वेष भगवान् यद्यानन्दो भवेन्न च ।।

सामान्यचेष्टा धर्म्याश्च कस्य स्युस्तमृते प्रभुम् ।
सुखं लब्ध्वा हि कुरुते लोकचेष्टां जनार्दनः ।।

अल्पात् सुखादल्पकर्मा पूर्णानन्दाद्धि सर्वकृत् ।
न ह्यार्ताः कर्म कुर्वन्ति मुग्धाश्चैव विशेषतः ।।

तस्माद् यादृक् सुखं तादृक् कर्म पूर्णसुखस्ततः ।
सर्वकृत्त्वात् परो विष्णुराह तस्मात् सनातनी ।।

सुखं लब्ध्वा करोतीति च्छन्दोगानां श्रुतिः परा ।
अलब्ध्वा तु सुखं नैव करोतीत्यपि सादरम् ।।

तत् पूर्णानन्ददेवेन कारितः प्राणिति स्फुटम् ।
सर्वलोकः स एवैकः आनन्दयति चाखिलम् ।।

**व्यास**- तद्व्याचष्टे- **अनासाद्य इत्यादिना** । आसाद्यः प्राप्तुं शक्यः मुमुक्षुणा । आसाद्यत्वमेव विशदयन्नाह- **यद्वै तदिति** । तद्व्याचष्टे- **रस इति** । तत इति श्रवणाद्यत इति ग्राह्यम् । योजना तु रस इत्यानन्दो यतः ततः तद्रूपो भगवानानन्द इति । स भगवानानन्दरूपः कुतः सिद्ध इत्यतः को ह्येवान्यादित्यादिना युक्त्या समर्थयते । तद्व्याचष्टे- **आदीप्त इति** । आदीप्तत्वात् आकाश एष भगवान् यद्यानन्दो न भवेत् तर्हि जगन्न चेष्टयेत् । यदि न चेष्टयेत्तर्हि सामान्यचेष्टा धर्माश्च तमृते कस्य स्युः । न कस्यापीत्यर्थः । यद्याकाश आनन्दो न स्यात्तर्हि जगत्कोऽन्यात्कः प्राण्यान्नैव कोऽपीति तर्कस्य विपर्ययपर्यवसानमाह- **सुखमिति** । मत्तवत्कारणान्तराभावेऽपि कर्तृत्वात्सुखं लब्ध्वा कुरुत इति सिद्धमित्यर्थः । ननु जगच्चेष्टकत्वेन सुखं स्यात् न तु पूर्णसुखं इति तत्राह- **अल्पादिति** ।

कारणस्य सुखस्याल्पत्वे कार्यं कर्माल्पम् । आनन्दस्य महत्त्वे हि तत्कार्यं कर्मापि महदित्यर्थः । विमतः सुखी कारणान्तराभावेऽपि कर्तृत्वादित्येत-व्यतिरेकप्रमाणेन समर्थयते- **न हीति** । यः सुखी न भवति असौ कारणान्तराभावेऽपि कर्ता न भवतीति व्यतिरेकव्याप्तौ आर्तानां मुग्धानां च दृष्टान्तत्वम् । तेषामत्यन्तदुःखित्वात् अत्यन्तदुःखस्य चाप्रवर्तकत्वात् । प्रवर्तकस्येषत्सुखसम्भिन्नदुःखस्य चाभावादिति द्रष्टव्यम् । अल्पात्सुखादल्पं कर्म पूर्णानन्दात्सर्वकृदित्युक्तं विवृणोति- **तस्मादिति** । तस्मादित्युक्तं हेतुमेव विवृणोति- **यादृगिति** । तस्यार्थः सुखस्य कारणस्याल्पत्वेन कार्यस्य कर्मणोऽप्यल्पत्वं तन्महत्त्वे तन्महत्त्वमिति यतो नियमः ततः सर्वकर्तृत्वात्परो विष्णुः पूर्णसुख इति । सुखप्राप्तिदुःखनिवृत्त्यादिकारणान्तराभावेऽपि प्रवृत्तिमत्त्वस्य सुखित्वेनाविनाभावः श्रौतश्चेत्याह- **तस्मादिति** । कारणान्तराभावे प्रवृत्तिमत्वस्य सुखित्वेन व्याप्तिभावात् अयं परमात्मा सुखं लब्ध्वा करोतीति च्छन्दोगानां श्रुतिराहेत्यर्थः । कारणान्तराभावेऽपि प्रवृत्तेः सुखकार्यत्वोक्त्या सुखाभावे सा न भवेदिति सिद्धमप्यर्थं स्फुटयति- **अलब्ध्वेति** । इति पाठान्तरम् । नासुखं लब्ध्वा करोति । सुखार्थं दुःखनिवृत्त्यर्थं वा न करोतीत्यवधारयन्ती तदर्थमाह- **अलब्धेति** । अनुमानार्थमुपसंहरति- **तत्पूर्णेति** । अस्य योजना यस्मात्सर्वलोको देवेन कारितः प्राणिति तत्तस्मात्स देवः स्फुटं पूर्णानन्द इति । परमसुख-कारणत्वाच्चेश्वर आनन्दरूप इति युक्त्यन्तरमाह- **एष ह्येवानन्दयतीति** । तद्व्याचष्टे- **स एवेति** ॥२.१५॥

**श्री.भा-** पूर्वं प्रलयकालगो नारायणो वासुदेवरूपेण प्रजायेयेति कामनां कृत्वा वासुदेवो भूत्वा जगत्ससर्जेत्युक्तम् । तत्र संमतितया श्लोकमुदाहरति ब्रह्मा तदपीति । तत्राग्रे प्रलये असदेव शून्यमेवासीत् । ततो सतः शून्यात् सदजायतेत्येवं शून्यस्य प्रलये सत्त्वं जगत्कारणत्वं चात्र प्रतिपाद्यत इति

प्रतीयते । तदयुक्तम् । असतः सदुत्पत्तेः काप्यदृष्टत्वात् । कुतस्तु खलु सोम्यैवं स्यात्कथमसतः सज्जायतेति श्रुतिविरोधाच्चेति भावेन प्रमाणेनैव तं श्लोकं व्याचष्टे- **अनासाद्यस्त्विति** । पूर्वं प्रलये स्थितो नारायणाभिधो हरिः केनाप्यनासाद्यो प्राप्य इति हेतोरसन्नामाऽभवदिति सम्बन्धः । ततो वै सदजायत इत्येतद्व्याचष्टे- **स आद्यस्त्विति** । स नारायणाभिधः प्रभुः वासुदेवोऽभवत् । स चासाद्यो ज्ञानिप्राप्य इति हेतोः सन्नामेत्यर्थः । वासुदेवस्य निजमुक्तिपदप्रदातृत्वेन ज्ञानिप्राप्यतायाः प्रसिद्धत्वादिति भावः । गत्यर्थात्सदेः कर्मणि क्विबन्तस्य रूपमेतत् । तदात्मानं स्वयमकुरुत इत्येतत् ब्रह्मैव स्वात्मानं जगदाकारेण कुरुत इत्यपव्याख्यानमित्यभिप्रेत्य व्याचष्टे- **स वासुदेव इति** । संकर्षणादिकं संकर्षणादिरूपोपेतम् । अनेन नारायण एव संकर्षणादिरूपाणि ससर्ज इति प्रतीतिरप्यपास्ता वेदितव्या । अत एव संकर्षणश्च स बभूव पुनः सुनित्यः । स सृष्टिहेतोः प्रद्युम्नतामुपगतः । स्थित्यै पुनः स भगवाननिरुद्धनामेति तात्पर्यनिर्णयेऽपि तच्छब्दैः वासुदेव एव ग्राह्यो न नारायण इति सम्प्रदायविदः । तस्मात्तत्सुकृतमुच्यत इति वाक्यं व्याचष्टे- **तस्मादिति**। यस्माद्वासुदेवः स्वात्मानं संकर्षणादिकं चक्रे तस्मात्कारणात्स वासुदेवः सुकृतमित्युच्यते। सु सम्यक् संकर्षणाद्यात्मना स्वस्वरूपं कृतमिति व्युत्पत्त्येत्यर्थः ।

यद्वै तत्सुकृतं रसो वै स इत्येतद्व्याचष्टे- **स आनन्द इति** । सः सुकृतनामवान्वासुदेवः आनन्दः आनन्दवान् । रसः सारो वरश्चेति शब्दा एकार्थवाचका इत्यभिधानात् रसो वरः श्रेष्ठः । आनन्दविशिष्टस्य विशेषणं भवदिदं वरत्वं विशेषणभूतमानन्दमुपसंक्रामति । तथाच रसानन्दो महानन्दः पूर्णानन्दः इत्यर्थो द्रष्टव्यः । यद्वा स इत्यनूद्य आनन्द इति शेषः पूरितः । तथाच यद्वै तत्सुकृतं सः तदीयानन्दो रसो वरः पूर्ण इत्यर्थः । रस इत्यानन्दो यतः । अतस्तद्रूपो भगवानानन्द इति योजनेति

पूर्वटीकाकाराः । मुक्तानां सुखकारणत्वाच्चायं पूर्णानन्द इति वक्तुं प्रवृत्तं रसऽह्येवायं लब्ध्वेति वाक्यं हेतुहेतुमद्भावं दर्शयन् व्याचष्टे- **तत इति** । यत इति शेषः । यतः वासुदेवः पूर्णानन्दः तत आनन्दम् । पूर्णानन्दस्वरूपमेनं वासुदेवं सम्प्राप्यैव मुक्तो मोदेत् । स्वयोग्यानन्दपूर्णो भवेदन्यथा तन्न स्यादित्यर्थः । लोकचेष्टकत्वयुक्त्याऽपि भगवतो वासुदेवस्य पूर्णानन्दत्वं समर्थयते । को हीत्यादिना । तत्राकाशस्यानन्दत्वाभावेऽननं प्राणनं च कस्यापि नस्यादित्येतावदुच्यते नतु विष्णोर्महानन्दत्वे कोऽपि हेतुरक्त इत्यतः तद्वाक्यं प्रमाणेनैव व्याचष्टे- **आदीप्त इति** । आकाशशब्दार्थोऽयम् । आसमन्तात्काशृ दीप्ताविति धातोः काशनात् दीपनात् दीप्तत्वादिति यावत् । आकाश इत्यर्थः । दीप्तेरनन्याधीनत्व-रूपविशेषसूचनाय तु शब्दः । एष भगवान्वासुदेवः । अन्यादित्यस्य तात्पर्यं सामान्येति । सामान्यचेष्टाः लौकिकचेष्टाः । प्राण्यादित्यस्य तात्पर्यं धर्म्याः इति । धर्म्याः धर्मविषयाः वैदिक्यचेष्टाः । तथाचासमन्तात् काशनादाकाशः एषः भगवान् यदिपूर्णानन्दो न स्यात् तया न कश्चित्प्रवर्तयेत् । न चेदेषः कश्चित् प्रवर्तयेत् तदा कः पुमान् प्राण्यात् अन्याच्च । न कोऽपि लौकिकीं वैदिकीं वा प्रवृत्तिं कुर्यात् । स्वातन्त्र्याभावादित्येवं विष्णोरनानन्दत्वे जगतो निश्चेष्टत्वमापादयन्त्या श्रुत्या जगच्चेष्टकत्वमानन्दपूर्णत्वे हेतुत्वेन विवक्षितमिति ज्ञायते । तथाच भगवान्सुखी भवितुमर्हति प्रवृत्तिकारणत्रयरहितत्वे सति प्रवृत्तिमत्त्वादुन्मत्त-वदित्यनुमानं सूचितं भवति । तथाहि । लोके चेतनप्रवृत्तिश्चतुर्विधा दृष्टा । दुःखोद्रेकात् रोदनादौ प्रवृत्तिः । सुखरागात्तत्प्राप्त्यर्था भोजनादौ प्रवृत्तिः । दुःखद्वेषात्तन्निवृत्त्यर्था कण्ठकोद्धारणादौ प्रवृत्तिः । सुखोद्रेकात् नृत्तगानादि-रूपोन्मत्तप्रवृत्तिः । तथाच दुःखोद्रेकनिमित्ता तन्निवृत्त्यर्था सुखावाप्त्यर्था चेत्याद्यप्रवृत्तित्रयं परमेश्वरत्वादेव तस्मिन्नोपपद्यते । अतः परिशेषात्

सुखोद्रेकादेवास्य प्रवृत्तिरिति सिध्यतीत्यभिप्रेत्योक्तप्रयोगप्रकारं सूचयति- **सुखमिति** । लोकचेष्टामित्युपलक्षणम्। वैदिकचेष्टामित्यादाविव सुखं लब्ध्वैव कुरुत इति सावधारणेन व्याख्याने नोक्तहेतुहेतुमद्भावः सूचित इति ज्ञातव्यम् । ननु जगच्चेष्टकत्वेन सुखमात्रसिद्धावपि न तस्य पूर्णत्वं सिध्यतीत्यत आह- **अल्पादिति** । अल्पसुखादेवेत्यर्थः । अल्पकर्मा अल्पप्रवृत्तिमान् । पूर्णानन्दादेवेति व्याख्येयम् । सर्वकृत् महाप्रवृत्तिमान्। तथाच कारणस्य कार्यानुगुणत्वान्महाप्रवृत्त्या माहानन्द एव सिध्यतीति भावः । उक्तानुमाने व्यतिरेकव्याप्तौ दृष्टान्तमाह- **नहीति** । आर्ताः दुःखिनः कर्म न कुर्वन्ति प्रवृत्तिमन्तो न भवन्तीत्यर्थः । तथाचोभयाभावप्रयुक्तविशिष्टाभाव-मादायोक्तहेतुव्यतिरेकस्तेष्वस्तीति भावः । आर्तानामपि किञ्चित्प्रवृत्ति-मत्त्वात् दृष्टान्तान्तरमाह- **मुग्धश्चैवेति** । मुग्धः मूर्छावन्तः। तदार्नी दुःखमात्रप्रतिस्मृत्या विशेषतः आर्तापेक्षया विशेषाकारेण कर्म नैव कुर्वन्तीति सम्बन्धः । प्रवृत्तिमात्रशून्या इत्यर्थः । तथाचोभयाभावप्रयुक्त-विशिष्टाभावमादाय हेतुव्यतिरेकस्तेष्वप्यस्तीति भावः । अल्पात्सुखादित्युक्तं विवृणोति- **तस्मादिति**। तस्मादार्तादीनां प्रवृत्त्यभावात् । यादृक् सुखं तादृक् तादृगेव तदनुसार्येव । कर्म प्रवृत्तिः दृष्टा । अतः सर्वकर्तृत्वात् महाप्रवृत्तिमत्त्वात् परो विष्णुः पूर्णसुख इत्यर्थः। निर्मूलानुमानममान-मित्याशंकापरिहाराय तन्मूलभूतां श्रुतिमाह- **आहेति** । तस्मात् प्रवृत्ति-कारणत्रयरहितत्वे सति प्रवृत्तिमत्त्वस्य सुखित्वेनाविनाभावस्य प्रसिद्धत्वादित्यर्थः । सुखं लब्ध्वा सुखं लब्ध्वैव उन्मत्तादौ दर्शनादिति भावः । अनेन यदा वै सुखं लभतेऽथ करोतीति श्रुतिमुपादत्ते । अनेनोक्तान्वयव्याप्तिः प्रमापिता भवतीति ज्ञातव्यम् । सनातनी अपौरुषेयत्वेन पुरुषदोषनिबन्धनदोषशून्या । अत एव परा स्मृत्यपेक्षयोत्तमेत्यर्थः । यद्वै तच्छ्रुतिसमाख्यारूपा परा अन्या छन्दोगानां

श्रुतिरित्यर्थः । नासुखं लब्ध्वा करोतीति श्रुतिमर्थतोऽनुवदति - **अलब्ध्वेति** । मुग्धार्तादौ दर्शनादिति भावः । अनेनोक्ताव्यतिरेकव्याप्तिरपि प्रमापिता भवतीति ज्ञातव्यम् । व्याप्तिद्वयोपदर्शनादादरोऽवगम्यत इति भावः । कोह्येवान्यादित्युपनिषदुक्ते तर्के विपर्ययपर्यवसानं दर्शयति- **तदिति** । तत्तस्मात् कारितः प्रेरितः प्राणिति वैदिकीं चेष्टां करोति । इदमुपलक्षणम् । अनितिलौकिकीं चेष्टां च करोतीत्यपि द्रष्टव्यम् । तथाच सर्वो लोकस्तावल्लौकिकीं वैदिकीं वा चेष्टां करोति अनुभवसिद्धत्वात् । तस्मात्पूर्णानन्दवता देवेन कारितः प्रेरित एव प्राणिति अनिति च । तथाच तत्कारयिता देवः पूर्णानन्द इति सिद्ध्यतीति भावः । अमुक्तानां ब्रह्माद्यखिललोकानां सुखकारणत्वाच्चायं भगवानानन्दरूप इत्युच्यते- **एष ह्येवेति** । तद्व्याचष्टे- **स एवैक इति** । अखिलं ब्रह्माद्यं मुक्तजातम् । स्वस्यैव तदभावे परस्मै तद्दानानुपपत्तेरिति भावः । रसं ह्येवेति वाक्यं तु मुक्तानां आनन्दप्रदत्वान्यथानुपपत्त्या भगवतः पूर्णानन्दत्वसाधनपरमित्य-पौनरुक्त्यम् ।। २.१५ ।।

**श्री.खं-** पूर्वं प्रलयकालगो नारायणो वासुदेवादिरूपेण प्रजायेयेति कामनां कृत्वा वासुदेवो भूत्वा जगत्ससर्जेत्युक्तम् । तत्रसंमतितया श्लोकमुदाहरति- **ब्रह्मा तदपीति** । तदपि तत्रापि नारायणस्य वासुदेवादिरूपेण भवने एषः वक्ष्यमाणः श्लोको भवति । तं श्लोकं पठति - **असद्वेति** । इदमग्रे अस्य जगतोऽग्रे प्रलय इति यावत् । असद्वा अनासाद्यत्वात् अपरिच्छिन्नत्वेन केनाप्यप्राप्यत्वादसन्नामकनारायण एव असीत् । ततो नारायणात् सत् ज्ञानिप्राप्यत्वात्सन्नामा वासुदेवोऽजायत । तद्रूपं व्यक्तमभवत् । तस्यैव वासुदेवरूपस्य सुकृतमिति नामान्तरं वक्तुं तत्र निमित्तमाह- **तदिति** । तद्वासुदेवरूपं आत्मानं स्वात्मानं स्वयं स्वेच्छयैव संकर्षणादिरूपेणाकुरुत । यस्मात्तस्मादेव हेतोस्तद्वासुदेवरूपं

सुकृतमित्युच्यते । सुसम्यक् संकर्षणाद्यात्मना स्वरूपं कृतमिति व्युत्पत्त्येत्यर्थः । रूपेणाकुरुत । यस्मात्तस्मादेव हेतोस्तद्वासुदेवरूपं सुकृतमित्युच्यते । सु सम्यक् संकर्षणाद्यात्मना स्वस्वरूपं कृतमिति व्युत्पत्त्येत्यर्थः । इति श्लोको भवतीति सम्बन्धः । यद्वै तत्सुकृतं सुकृतनामकं वासुदेवरूपं सः रसः रसानन्दः रसशब्दो हि वरत्ववाची । रसः सारो वरश्चेत्यभिधानात् । तथाच रस आनन्दो वरानन्दः । आनन्दस्य वरत्वं नाम महत्त्वं पूर्णत्वमिति यावत् । तथाच पूर्णानन्द इत्यर्थः । यद्वा यद्वैतत्सुकृतं सः तदीयः आनन्दो रसो वरः पूर्ण इत्यर्थः । ननु भगवतः पूर्णानन्दत्वे किंमानमित्याशंक्य मुक्तानां सुखकारणत्वादयं पूर्णानन्द इत्याह- **रसमिति** । हि यस्मादयं पूर्णानन्दं वासुदेवं लब्ध्वैव प्राप्यैव अयं मुक्त आनन्दी भवति स्वयोग्यानन्दपूर्णो भवति । अन्यथा तन्न स्यात् । नहि दुःखिनं प्राप्तस्यानन्दो दृश्यत इत्यर्थः । तथाचायं वासुदेवः पूर्णानन्दो न स्यात् यदि तर्हि तं प्राप्तो मुक्तोऽपि पूर्णानन्दो न स्यात् लोके दुःखिनं प्राप्तस्यानन्दादर्शनात् । भवति च मुक्तः पूर्णानन्दः । 'ज्योतिर्मयेषु देहेषु स्वेच्छया विश्वमोक्षिणः । भुञ्जते सुसुखान्येव न दुःखादीन् कदाचन' इति वचनात् । अतस्तत्प्राप्यो वासुदेवोऽपि पूर्णानन्द इति सिद्धतीति भावः । लोकचेष्टकत्वान्यथा-नुपपत्तिरूपयुक्त्यापि भगवान्वासुदेवः पूर्णानन्द इत्याह- **कोह्येवान्यादिति** । आसमन्तात्काशनाद्दीप्तत्वादाकाशनामा एषः भगवान्वासुदेवो यदि पूर्णानन्दो न स्यात्तदा प्रवृत्तौ कारणतया रोदनभोजनकण्ठकोद्धरणादौ प्रसिद्धानां दुःखोद्रेकसुखरागदुःखद्वेषरूपाणामभावात् असौ न कश्चित्प्रवर्तयेत् । नचेदेष प्रवर्तयेत् तदा कः पुमान्प्राण्यादन्याच्च न कोऽपि वैदिकीं लौकिकीं वा प्रवृत्तिं कुर्यात् । स्वातन्त्र्याभावात् । प्राणिति चानिति सर्वो लोकोऽतस्तत्प्रवर्तको भवन् एष भगवान् केवलमुन्मत्तवदानन्दोद्रेकादेवेति वक्तव्यम् । कार्यानुगुणत्वाच्च कारणस्य महाप्रवृत्त्या महानन्द एव सिद्धतीत्यर्थः ।

तथाचैष भगवान्पूर्णानन्दो भवितुमर्हति **प्रवृत्तिकारणत्रयरहितत्वे सति प्रवृत्तिमत्त्वात्** उन्मत्तवत् **व्यतिरेकेपार्तवन्मुग्धवदिति साधनानुमानं द्रष्टव्यम्** । अमुक्तानां ब्रह्माद्यखिललोकानामानन्दकारणत्वाच्चायं भगवान्पूर्णानन्द इत्याह- **एष ह्येवेति** । अखिलमिति शेषः । हि यस्मादेष एव भगवानखिलं ब्रह्माद्यमुक्तजातम् । आनन्दयाति आनन्दयति । दीर्घस्त्वाधिक्यार्थः । अतोऽयं भगवान् वासुदेवः आनन्दपूर्ण इत्यर्थः । **स्वस्यैव** तदभावे परस्मै तद्दानानुपपत्तेरिति भावः ।। २.१५।।

**वरद-** परमेश्वरस्य जगत्सर्जने पूर्वत्रानुक्तो विशेषः उच्यते तदप्येष श्लोको भवति- **असद्वा इदमग्र आसीत् इत्यादिना** । तद्व्याख्यां अनासाद्य इति । असाद्यो मुक्तैः प्राप्यः । अत्र च विशेषनाम वासुदेवरूपः सृष्ट्यनन्तरं तेन रूपेण जगत्सर्जनमिति ज्ञातव्यम् । एवं सोऽकामयत इत्यादिना विष्णोर्ज्ञानप्रकारं निरूप्य इदानीं तज्ज्ञानादेव मोक्षो भवतीत्येतत्प्रपञ्च्यते **'रसं ह्येवायं लब्ध्वानन्दी भवति'** इत्यादिना । तदर्थः आनन्दमेनमिति । रसो वै सः इत्यनेन विष्णोरानन्दरूपमुक्तम् । तदुपपाद्यते कोह्येवान्यात् इत्यादिना । तद्व्याख्याति- **आदीप्त इति** । स एवेति । पूर्णानन्दो न भवेदित्यर्थः । सामान्यचेष्टाः कण्डूयनादयः । धर्म्याः यज्ञादयः ।

अयं भावः । यदि भगवान् पूर्णानन्दो न स्यात् तर्हि जगद्विषयप्रवृत्तिं न कुर्यात् । पूर्णानन्दत्वमन्तरेण स्वजगद्विषयप्रवृत्तिकर्तृत्वायोगात् । तथा च सर्वं जगत् निश्चेष्टं प्रसज्येतेति । ननु परमेश्वरस्य पूर्णसुखत्वाभावेऽपि सुखप्राप्त्याद्यर्थत्वेन जगद्विषयप्रवृत्तिर्युज्यते । अतो न जगद्विषयप्रवृत्त्या तस्य पूर्णानन्दत्वसिद्धिरित्यत आह- **सुखमिति** । हेयोपादेयरहितत्वेन परिपूर्णस्वरूपत्वात् न सुखप्राप्त्याद्यर्थात् भगवतः प्रवृत्तिः किन्तु पूर्णसुखत्वादेवेत्यर्थः । अनेन 'विप्रतिपन्नः सुखीभवितुमर्हति प्रवृत्तिकर्तृत्वात्

मत्तादिवत् इत्यनुमानं सूचितं भवति । न च दुःखादिना प्रवर्तमानेषु व्यभिचारः । तेषामपि शब्दादिविषयानुसन्धातृत्वेन सुखविशेषस्य सुखाभिलाषस्य वा विद्यमानत्वेनाविपक्षत्वात् । प्रतिज्ञायां च येन केनापि प्रकारेण सुखविशेषवत्त्वस्य साध्यमानत्वात् ।

ननु भवतु नाम कर्तृत्वेन सुखसद्भावोऽपि विष्णोः पूर्णत्वं तु कुतः सिद्ध्येदित्यत तत्पक्षधर्मताबलात् सिद्ध्यतीत्याह- **अल्पादिति** । कर्तृत्वमात्रेण सुखसामान्यं सिद्ध्यति । विष्णोस्तु कर्तृत्वं सर्ववस्तु-विषयमिति तस्य सुखमपि सम्पूर्णमेव सिद्ध्यतीत्यर्थः । कर्तृत्वस्य सुखत्वेनान्वयव्याप्तिमुक्त्वा व्यतिरेकव्याप्तिमप्याह- **नहीति** । ये जनाः सर्वथापि सुखलेशेन तदभिलाषादिना वा रहिताः किञ्च आर्ता एव ते जनाः कर्म न कुर्वन्ति किन्नाम विशेषतः अत्यन्तं मुग्धा मूर्छिता एव ते भवन्तीत्यर्थः । भगवतः पूर्णानन्दत्वमुपसंहरति- **तस्मादिति** । तस्मात् सर्वकर्तृत्वात् परः विष्णुः पूर्णसुख इत्यन्वयः ।

ननु सर्वकर्तृत्वेन कथं पूर्णसुखसिद्धिरित्यतो यावत्कर्तृत्वं तावत् सुखविशेषवत्त्वम् । अस्य तु सर्वकर्तृत्वात् सम्पूर्णसुखित्वं सिद्ध्यतीति भावेनाह यादृक् सुखं तादृक् कर्मेति । विष्णोः कर्तृत्वात् सुखित्वं भवेदित्यत्र श्रुतिसंवादं चाह- **आहेति** । लोकचेष्टकत्वेन पूर्णानन्दत्वं हरेरुपसंहरति- **तदिति** । परमेश्वरस्यानन्तरूपत्वे युक्त्यन्तरमुच्यते "एष ह्येवानन्दयाति" इति । तस्यार्थः स एवैक इति ॥२.१५॥

**रा.खं-** बहुःस्यामित्यात्मनो बहुरूपात्मना भवनमुक्त्वा प्रद्युम्नरूपेण जगत्सृष्टिमुक्त्वा सृष्टस्य सत्ताशक्त्यादिप्रेरणाय रूपान्तरेण प्रवेशं चोक्त्वा इदानीं स्वरूपबहुभवनं श्लोकोक्त्या व्यनक्ति- **तदप्येष श्लोक इति** । स्वरूपबहुभवन- रूपेऽर्थेऽपीत्यर्थः। इदमग्रे अस्य जगतोऽग्रे पूर्वम् ।

असत् नञ् पूर्वस्य गत्यर्थस्य सीदते रूपम् । तथा चानासाद्यत्वरूपाप्राप्यत्वहेतुना असन्नामा नारायणो मूलरूपी आसीत् । वै प्रसिद्धम् । ततो नारयणात् मुमुक्षुणा आसाद्यत्वरूपप्राप्यत्वहेतुना सन्नामा वासुदेवोऽजायत प्रादुरभवत् । तद्वासुदेवाख्यं रूपमात्मानं स्वयं सङ्कर्षणप्रद्युम्नादिरूपेणाकुरुत । तस्मात्स्वात्मानं रूपान्तरात्मत्वेन अकुरुतेति हेतोः तद्वासुदेवाख्यं रूपं सुकृतमुच्यत इत्यर्थः। इति शब्दस्य इत्येष श्लोक इत्यन्वयः ।

सन्नाम्नो मुमुक्षुसाध्यत्वं हेतूक्त्या व्यनक्ति- **यद्वै तत्सुकृतं रसो वै स इति** । यदेतत्सुकृतं स वासुदेवः रसो वै आनन्दरूपो वै । हिर्हेतौ । तत एव अयं ज्ञान्येव रसमेवेति वा लब्ध्वाऽनन्दी भवति नान्यथेत्यर्थः । तावता कथमस्यानन्दरूपत्वमित्यतो जगच्चेष्टकत्वयुक्त्या साधयति- **कोहीति** । यत् यदि एष आकाशः आदीप्तत्वहेतुना आकाशनामा भगवान् आनन्दो न स्यात् सुखस्वरूपो न स्यात् । तर्हि जगन्न चेष्टयेदिति शेषः । चेष्टारूपप्रवृत्तिहेतूनां रागद्वेषदुःखोद्रेकरूपाणां चतुर्णां मध्ये 'निरनिष्टो निरवद्य' इत्यादिश्रुत्या आद्यत्रयस्याभावनिश्चयेन सुखोद्रेकस्याप्यभावे जगत्प्रवृत्तिर्निर्हेतुका नोत्पद्येत । उत्पद्यते च । अतो भवति जगत्प्रवर्तक आनन्दरूप इति । माऽस्त्वयं जगत्प्रवर्तक इत्यत आह- **कोहीति** । अयं चेन्न चेष्टयेत्तर्हि इति शेषः। कोह्येवान्यात् । अन चेष्टायां चेष्टयेत् । कः प्राण्यात् । प्रकृष्टचेष्टां यज्ञदानादिप्रेरणां कुर्यात् । न कोऽपि । अतो जगन्निश्चेष्टमापद्येतेति । कार्यानुसारात् कारणस्य महाप्रवृत्त्या महानन्दरूपोऽयमिति भावः । परेषां सुखहेतुत्वाच्चायं सुखोद्रिक्त इत्याह - **एष ह्येवाऽनन्दयातीति** । अखिलमानन्दयति हि यतोऽतश्चाऽऽनन्दरूप इति ।।२.१५।।

।। **ब्रह्मणः पूर्णानन्दोक्तिप्रकरणम्** ।।

उपनिषत्

यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति । तत् त्वेव भयं विदुषोऽमन्वानस्य । तदप्येष श्लोको भवति । भीषाऽस्माद् वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति ॥२.१६॥

भाष्यम्

तस्माददृश्ये जैवानां गुणानामप्यसङ्गतेः ।
अनात्म्येऽथ गुणानन्त्यादनिरुक्ते निराश्रयात् ॥

अनिलयनेऽभयत्वेन यदा ज्ञानेन तिष्ठति ।
तदाऽभयं हरिं गच्छेन्नैवाज्ञानी कथञ्चन ॥

यदैतस्मिन् परे विष्णावुदरं जीवगत्वतः ।
भेदं करोति तेनैव भयमस्य महत् भवेत् ॥

अ इत्युक्तः परो विष्णुरेभ्य उच्चः स एव तु ।
त उदा जीवसङ्घा स्युरुदरं तद्गतान्तरम् ॥

तदेव ब्रह्म भयकृद् विदुषोऽविदुषस्तथा ।
विदुषोऽल्पभयं कुर्याद् यावन्मुक्तिं व्रजत्यसौ ॥

अथाभयं भवेद् ब्रह्म तस्य मुक्तस्य सर्वदा ।
तस्माद् वाय्वादयो देवा विद्वांसोऽपि विशेषतः ॥

**भीताः स्वकर्म कुर्वन्ति विष्णोः प्रीत्यर्थमञ्जसा ।**
**अमन्वानस्य नुर्विष्णुः कुर्यान्नित्यं महद् भयम् ।।**
**तम आख्यमनुत्थानं...................... ।।**

**व्यास**- ज्ञान्येव मुच्यते इत्यस्योपसंहारव्याजेन तज्ज्ञानं प्रतिष्ठितमेव मोक्षसाधनं नान्यथेत्याह- **यदा ह्येवैष इत्यादिना** । तद्व्याचष्टे- **तस्मादिति** । ज्ञानं प्रतितिष्ठितमेव मोक्षसाधनं नान्यथेत्याह- **यदा ह्येवैष इति** । तद्व्याचष्टे- **यदेत्यादिना** । यदा यदि एष एतस्मिन्परे विष्णौ कृष्णरामादिरूपापेक्षया जीवगतत्वात्कारणादुदरमन्तरं भेदं करोति । कृष्णरामादेर्विष्णुप्रतियोगिकभेदं पश्यतीति यावत् । अथ तेन भेददेर्शनेनास्य महद्भयं भवतीत्यर्थः । उदरं जीवगमित्युक्तं तत्कथं शब्दादवगतमित्यत-स्तद्दर्शयति- **अ इति** । ब्रह्मज्ञानमेव मोक्षसाधनं नान्यदिति भावेन तस्य सामर्थ्यमाह- **तत्त्वेवेति** । तद्व्याचष्टे- **तदेवेति** । विदुषोऽपि भयभावे विज्ञानस्य को विशेष इत्यत आह- **विदुष इति** । अज्ञस्य भयकृद्भगवानित्यनुभवसिद्धम् । ज्ञानिनामपि भयकृदिति कुतः सिद्धमित्यतः श्लोकं पठन्नाह- **तदपीति** । भीडित्यस्य तृतीया भीषेति । भियेत्यर्थः । तद्व्याचष्टे- **तस्मादिति** । अमन्वानस्य भयकृद्ब्रह्मेत्युक्तम् । अमन्वानो द्विविधः । सम्यज्ज्ञानरहितो विपरीतश्च । तत्राद्यस्य संसारो भयम् । विपरीतस्य तु भयं किमित्यत आह- **अमन्वानस्येति** । विपरीतस्येति यावत् । ज्ञानिनां सर्वेषामपि मोक्ष इत्युकारेणोक्तस्य पश्चादविवृतत्वात्त-द्विवृणोति- **विदुषामिति** ।।२.१६।।

**श्री.भा-** रसं ह्येवायं लब्ध्वेत्यनेनानन्दरूपमेनं सम्प्राप्य मुक्तो मोदेदित्युक्तम् । तत्र तत्प्राप्तौ किंसाधनमित्याशंकायां प्रतिष्ठितं ज्ञानमेवेत्युच्यते । यदा ह्येवैष इति । तद्व्याचष्टे- **तस्मादिति** । तस्मात् उक्तरीत्या सर्वचेष्टकत्वेन मुक्तानामानन्दप्रदत्वादिना तस्यैव स्वतन्त्रत्वा-

दित्यर्थः । ज्ञानं प्रतिष्ठितमेव मोक्षसाधनं यस्मात्तस्मादिति पूर्वटीकाकाराः । **अदृश्ये** अज्ञदृष्ट्यगोचरे । आत्मनः इदमात्म्यं जीवसम्बन्धिगुणजातं अल्पज्ञानाल्पसुखादि तद्रहितोऽनात्म्यस्तस्मिन्निति अक्षरार्थमभिप्रेत्योक्तम्- **जैवानामिति** । जीवसम्बन्धिनामित्यर्थः । असंगतेः सम्बन्धाभावात् । निर्नितरामयनं आश्रयो निरयनम् । निरयनमेव निलयनम् । रोल इति स्मरणात् । न विद्यते अन्यो निलयनं आश्रयो यस्यासावनिलयनः इत्यक्षरार्थमभिप्रेत्य तल्लब्धार्थ उक्तो निराश्रयत्वादिति । स्वाश्रयत्वादित्यर्थः । अभयमिति क्रियाविशेषणमित्यभिप्रेत्योक्तं- **अभयत्वेनेति** । एतादृश- भगवद्विषये प्रतिष्ठां प्रकर्षेण स्थितिं विन्दते लभते । योग्यतया ज्ञानस्येति लाभ इत्यर्थमभिप्रेत्य तत्तात्पर्यमाह- **यदा ज्ञानेनेति** । श्रौतार्थशब्दार्थ- स्तदिति । अनेन ज्ञान्येव एतदवाप्नुत इत्युकारेणोक्तस्योपसंहारोऽप्यनेन कृतो भवतीति ज्ञातव्यम् । एवं भगवद्विषयकसम्यग्ज्ञानेनैव मोक्षमभिधाय विपरीतज्ञानिनोऽनर्थ उच्यते । यदा ह्येवैष इति । तद्व्याचष्टे - **यदेति** । अन्तरमित्यस्यार्थो भेदमिति । तस्य प्रसिद्धोदरत्वं बाधितमित्यतः उदरमित्यनूद्य भेदस्योदरशब्दवाच्यत्वे निमित्तमाह- **जीवगत्वत इति** । तथाच जीवेषु युगपदनेकस्थानत्वेन भेददर्शनात् तदृष्टान्तेन तादृशभेदं यदा यदि एतस्मिन्परे विष्णौ विश्वतैजसादिभगवद्रूपसमुदायेऽपि युगपत् दक्षिणाक्ष्यादिस्थानभेदेन करोति । धातूनामनेकार्थत्वात् जानाति अनुमिनोतीति यावत् । यद्वा जीवेषु विष्णुप्रतियोगिकभेददर्शनात्तं भेदं विश्वादिस्थानभेदेन करोति धातूनामनेकार्थत्वात् जानाति अनुमिनोतीति यावत् ।

यद्वा जीवेषु विष्णुप्रतियोगिकभेददर्शनात्तं भेदं विश्वादिरूपे एतस्मिन्परे विष्णौ करोति विष्णुप्रतियोगिकमेव भेदं विष्णौ जानातीति यावदित्यर्थ इति । बृहदारण्यकभावबोधोक्तरीत्या व्याख्येयम् । तर्हीति शेषः । अस्य

श्रुतस्यापि प्राणशब्दस्यार्थद्वयकल्पनमेवं रसशब्देन विशेषितत्वादर्थद्वयोपपत्तेरित्यर्थः । अन्नमयादयः पञ्चापि ब्रह्मेति स्वमतं अन्यस्य ते न ब्रह्मेति । तद्दूषयति- **न चेति** । अन्नमयादीनां ब्रह्मत्वे किं मानमित्यतो व्याख्यानरूपप्रमाणमेकं प्रमाणान्तरश्चाह- **येऽन्नं ब्रह्मेत्यादिना** । नचान्नप्राणचक्षुः श्रोत्रादीनां ब्रह्मशब्दाश्रवणात् अब्रह्मत्वमिति । 'अधीहि भगवो ब्रह्म' इति प्रार्थने उक्तानामन्नादीनां ब्रह्मत्वसिद्धेः । अन्यथाऽनाश्वासादित्यर्थः । अन्नमयस्याब्रह्मत्वे बाधकान्तरश्चाह- **न चेति** । न च प्रसिद्धस्यान्नस्यात्तृत्वं किन्तु तथादर्शनमेवातो न तद्बाधकमित्यत आह- **येऽन्यथेति** । अन्यथाविद्युः वस्तुवैपरीत्येन विद्युः येऽन्यथा विद्युस्तेषां भवतूक्तो दोषः। नत्वन्यथाध्यानिनामित्यतो बाधकमाह- **अविद्यमानेति** । वस्तुवैपरीत्येनासदुपासकानां दोषप्रतिपादकं किं तदित्यतः तत्पठति- **न चेति** । असदुपासकानामनर्थो भवतीत्यत्र स्पष्टं प्रमाणान्तरश्चाह- **न विद्यमानमिति** । कथं तर्हि वेदादौ योषितमग्निं ध्यायीतेति असदुपास्तिरुक्तेत्यत आह- **तस्मादिति** । तस्मादसद्ध्यायिनामानर्थोक्तेरिति यावत् । योषितमग्निं ध्यायीतेत्यादिना सर्वज्ञोऽपि वेदवाक्यानां यथाग्निः स्पृष्टोऽनर्थहेतुः तथा योषिदपि स्पृष्टेति सत्यार्थतां ब्रूयादित्यर्थः । नन्वानन्दमयो जीव एव । नच तथात्वे ब्रह्मशब्दविरोधः । तस्य ब्रह्मात्मकत्वेन तदुपपत्तेरित्यत आह- **स यश्चेति** । ननु पुरुषादित्यौपाधिविशिष्टं चैतन्यम् । तथाच तत्र शुद्धस्यापि भावात् तद्विवक्षयाधिकरणत्वेन भेदोक्तिः सांसारिकी भविष्यतीत्यतो विधूतोपाध्यवस्थायामपि भेदश्रवणान्नैव तदित्याह- **एतस्मिन्निति** । उदाहृतवाक्येषु प्रतीतो भेदो मुक्तभेद इति कुत इत्यत आह- **अथेति** । सैषानन्दस्येत्येतन्मुक्तानन्दपरतया व्याख्यातम् । तत्कुत इत्यतः साधयितुं प्रतिजानीते- **सैषेति** । प्रमाणेन तथा व्याख्यातत्वादिति भावः ।

युक्त्यन्तरश्चाह- **श्रोत्रियस्येति** । श्रोत्रियत्वाकामहतत्वविशेषणाभ्यां कथं मुक्तत्वासिद्धिरित्यत आह- **नहीति** । कथं मुक्तस्य कामहतत्वादिकं न सम्भवतीत्यतः श्रोत्रियपदार्थमाह- **यस्येति** । सम्पूर्णश्रुतिफलं प्राप्तः श्रोत्रियोऽस्तु । तथापि किं प्रकृत इत्यत आह- **स हीति** । स एव मुक्तः अकामहतश्च । मुक्तस्याकामहतत्वं कुत इत्यत आह- **स हि कामैरिति** । मुक्तः कामैः कुतो न हन्यत इत्यत आह- **यस्येति** । मुक्तस्य सत्यकामत्वात् कामाहतत्वमुक्तं तदयुक्तम् । मुक्तस्य कामस्यैवाभावादित्यतः चेतनत्वादीश्वरीवत् सकाम इति भावेन चेतनत्वहेतोः कामवत्त्वेन व्याप्तिं समर्थयते- **नहीति** । केषाञ्चित् पदस्थिताच्चक्रवर्तिनो मनुष्यगन्धर्वस्य शतगुणानन्दः चक्रवर्तिपदाकामिनो मनुष्यगन्धर्वपदे कामरहितस्योत्तरपदकामवतः श्रोत्रियस्य शतगुणानन्देत्यादिका व्याख्या तां दूषयति- **नचेति** । ननु देवपदेन्द्रपदकामरहितयोरभावात्कथं देवपदाकामस्य सकाशादिन्द्रपदाकामस्य शतगुणानन्दो न दृश्यत इत्युक्तिरित्यत आह- **नचेति** । मुक्तत्व द्योतकश्रोत्रियत्वाकामहतत्वयोरभावात्तत्कथं मुक्तक्षत्रियपरतया युवा स्यादिति व्याख्यातमित्यत आह- **चक्रवर्तिनस्त्विति** । ननु यदा सर्वे प्रमुच्यन्ते कामा इत्यत्र मुक्तानां कामाभावोक्तेर्मुक्तस्य कामसाधनानुमानं बाधितमित्यत आह- **यदेति** । हृदि स्थिता इति विशेषणादिति भावः । भवेदेवं यदि मुक्तस्य कामः प्रमितः स्यादित्यत आह- **यं यमिति** । अन्तमवसानं निर्णयं वा । मुक्तानां स्वरूपभूतकामप्रतिपादकं स्पष्टं च वचनमाह- **काम इति** । स्वरूपभूताः सन्तीति शेषः । सङ्कल्पो नाम क्रियाहेतुः कामः । न च सांसारिककामवद्दोषापादकत्वं तेषां मन्तव्यमित्याह- **ते सर्व इति** । मुक्तानां स्वरूपभूतकामभावे सूत्रं पठति - **सङ्कल्पादेवेति** । आनन्दमयस्य जीवत्वेऽपि न ब्रह्मशब्दविरोधः । तस्य तदात्मकत्वादित्यत्र सूत्रविरोधं दर्शयति- **भेदेति** । नन्वस्मादयं भिन्नः

अनयोर्भेद इति वा भेदप्रतीतिः । सा चान्योन्याश्रयादिदोषदुष्टा । तथाच सूत्रकृता श्रुत्या चाऽऽविद्यकभेदोऽनूद्यत इत्याशङ्क्यं निषेधति- **न चेति** । ननु धर्मिप्रतियोगिप्रतीतौ भेदप्रतीतिः, भेदप्रतीतौ तत्प्रतीतिः, विशेषण-प्रतीतौ भेदप्रतीतिः, विशेष्यभेदप्रतीतौ विशेषणधर्मिप्रतीतिः इत्यन्योन्याश्रय-दुष्टस्य कथं नासुकरत्वमशक्यग्रह(त्वमि)त्वादित्यत आह- **स्वरूपत्वादिति** । भेदस्य भावस्वरूपत्वाद्ग्रहणे नान्योन्याश्रयादिदोष इत्यर्थः । भेदस्य पदार्थस्वरूपत्वं कुत इत्यतस्तत्र वस्तुप्रतीतावेव प्रतीयमानत्वादिति सर्वाविगानमनुमानं प्रमाणयति- **सर्वेति** । सर्वस्य स्वरूपं सर्वव्यावृत्तं सर्वासंकीर्णं सर्वैरनुभूयत इति । अनुभूतिकलह इत्यत आह- **अन्यथेति** । दृष्टः पुरुषः अहमेवेति विपर्ययोऽपि स्यादित्यपि शब्दार्थः । भेदस्य भावास्वभावत्वेऽपि न दृष्टपदार्थविषयः संशयः । भावदर्शनानन्तरमेव भेदप्रतीतेरित्यत आह- **नचेति** । पदार्थस्वरूपमेव प्रथमं ज्ञायते पश्चाद्भेदो ज्ञायत इत्यत्र सर्वासंकीर्णं वस्तु नानुभूयते चेत् दृष्टोऽहं वा अन्यो वेति संशयः स्यादित्युक्तम् । नेदमनिष्टमित्यत आह- **नहीति** । दृष्टस्य वस्तुनः वस्त्वन्तरात् । न च वस्तु सर्वव्यावृत्तमनुभूयत इति युक्तम् । तस्य सर्वज्ञत्वापेक्षित्वात् । सर्वेषां तदभावादित्याशंक्य निषेधति- **नचेति** । कुतः सर्वज्ञत्वप्रसंगो नास्तीत्यतः सामान्यतः सर्वज्ञता तावदस्त्येवेत्याह - **सामान्यत इति** । विशेषतः सर्वज्ञता चेत्साऽनपेक्षितैव । विशेषतो भेदस्याज्ञायमानत्वादिति चोद्यं परिहारश्च द्रष्टव्यः । भेदस्य विशेषाकारेणा-ज्ञाने तदात्मकत्वात्स्वरूपमपि विशेषाकारेण न ज्ञायेतेत्यतो भेदो यतो विशेषेण न ज्ञातः स्वरूपमपि विशेषेण न ज्ञायते । यतो विशेषतो ज्ञायते भेदः ततः स्वरूपमपीत्याह- **यावदिति** । सामान्यतः सर्वमपि सर्वैर्ज्ञातमित्येतदुपपादयति- **नहीति** । ज्ञाताद्वस्तुनो ज्ञातान्यस्याव्यावृत्ति-रभेदः केनचिन्नहि शंक्यते । अतो युक्तमित्यर्थः । भेदस्य भावस्वरूपत्वे

भावज्ञाने तस्यापि ज्ञातत्वात्संशयो न स्यादिति शंकायां केनचिदाकारेण संशयो न स्यादिति वा सर्वाकारेणेति वा विकल्पौ । नाद्यः । स्थाण्वादेः प्रतियोगित्वेनाज्ञाततत्वादिति प्रथमपक्षपरिहारं हृदि निधाय सर्वाकारेण संशयो न स्यादिति द्वितीयपक्षमिष्टापादनेन दूषयति- **यदेति** । यदा तु संशीयते तदापि कुतश्चिद्व्यावृत्तमेव ज्ञायते नतु सर्वाकारेणेति । कुत इत्यत आह- **नहीति** । भेदस्य भावस्वरूपत्वे किंचिद्दोषं परिहृत्य साध्यमर्थमाह- **अत इति** । अतः भेदस्य भावस्वरूपत्वेऽपि संशयस्योपपत्तेर्व्यावृत्तिर्भावस्वरूपमेव । देवदत्तस्य वस्त्रमितिवदस्य भेद इति भेदस्य वस्तुविशेष्यत्वान्नस्वरूपं भेद इति शंकां शंकाबीजस्यानैकांतिकत्वेन परिहरति- **अस्येति** । भेदाभावेऽपि स्वरूपस्वरूपिणोरस्य स्वरूपमिति यथा स्वरूपस्य विशेष्यत्वं तथा भेदाभावेऽप्यस्य भेद इति भेदस्य वस्तुनो विशेष्यत्वमुपपद्यत इत्यर्थः । ननु भेदस्य भावस्वभावत्वात् भेदप्रतीतौ धर्मित्वप्रतीतिर्धर्मित्वप्रतीतौ भेदप्रतीतिरिति धर्मिभागे अन्योन्याश्रयाभावेऽपि प्रतियोगिप्रतीतौ भेदप्रतीतिः भेदप्रतीतौ प्रतियोगिप्रतीतिरिति प्रतियोगिभागे अन्योन्याश्रयः स्यादेवेत्यत आह- **यथेति** ।

ननु प्रतियोगिप्रतीतिसापेक्षप्रतीतिको भेदस्तन्निरपेक्षप्रतीतिकभाव-स्वभावो न भवति विरोधादिति शंकामनैकांतिकत्वेन परिहरति- **नहीति** । अस्तीति ब्रह्मेति शेषः । अस्ति शून्यं वा ब्रह्मेति पृष्टवतो अस्तीति नोत्तरं येन कालप्रतीतिसापेक्षप्रतीतिकाया वर्तमानतायाः तन्निरपेक्षवस्तु-स्वभावत्वदर्शनेन अनैकांतिकत्वमुद्भाव्येत । किं नामसदित्युत्तरमित्यत आह- **सदिति** । सदित्यपि सदित्यस्यापि शत्रन्तत्वात् शतृश्च लडर्थत्वात् लटश्च वर्तमानकालार्थत्वात् सत्त्वं कालसंबंध्येवानुभूयते । न ब्रह्म तयोश्चैक्यम् । अत उक्तानैकान्तिकत्वतादवस्थ्य- मित्यर्थः । शत्रन्तस्य कालसंबंधित्वं निदर्शनेन समर्थयते- **तिष्ठन्नितिवदिति** । एवं

हेतुमनैकान्तिकत्वेन दूषयित्वा सिद्धमर्थमाह- **एवमिति** । प्रतीयमानं भेदस्वरूपम् । ननु द्विपृथक्त्वं भेदः तस्य द्विनिष्ठत्वाद्भावस्वरूपत्वे सर्वेषामेकत्वमापद्येतेत्यत आह- **अस्मादिति** । द्विपृथक्त्वं भेद इति पक्षे भवतूक्तदोषः । नत्वेकपृथक्त्व इति भावः । भेदस्य भावस्वरूपत्वे घटो भिन्न इत्यपर्यायव्यवहारविशेषो न स्यादित्येतदप्यनैकान्तिकत्वेन परिहरति- **ज्ञानेति** । भेदस्य स्वरूपत्वे भेदभोदिनोरन्यतरावशेषः स्यादित्येतत् प्रतिबन्द्या परिहरति- **नचेति** । विदारणात्मनो भेदस्य भावस्वरूपत्वे भावो विभिद्येत । तथाच तत्राप्येवमिति न किंचनैकं वस्तु स्यादित्यत आह- **अन्येति** । येन न किंचनैकं वस्तु स्यादिति प्रसंगो भवति । भेदो भावात्मेत्युक्तम् । तत्र केचित् भावात्मकोऽपि भेदस्तन्नाशेऽपि न नश्यतीति । तन्मतं निषिध्य भेदस्य भावात्मकत्वप्रतिपादकं प्रमाणं पठति- **भेदस्त्विति** । नैजं संयोगवन्नागंतुकम् । अव्ययत्वं गुरुत्वादिवद्यावद्द्रव्यभावित्वेन किं नेत्याह- **नष्टानामपीति** । भावनाशे भेंदानाशे तस्य तदात्मकत्वं न स्यादित्यत आह- **अवस्तुन इति** । अवस्तुनो नष्टस्यापि भेदः स्वरूपं भावस्वरूपमेवं । प्राग्भेदस्य भावात्मकत्वस्य सिद्धत्वादिति भावः । भावात्मकभेदानाशे कथं भावनाशः स्यात् । भावनाशश्चास्त्येव । अतो भेदो नश्यतीत्यतः तद्घटयति- **विशेषेति** । विशेषरूपनाशेन पृथुबुध्नोदराकरत्वादिनाशेन । एवं परपक्षमनूद्य निषिध्य सिद्धान्तमाह- **तत्राहुरिति** । घटप्रतियोगिकभेदात्मकपटनाशे घटस्य पटात्मकत्वं स्यादित्यत आह- **अविनष्टस्येति** । तस्मान्नष्टात् । प्रतियोगिनो नष्टत्वात्कथं भेदोऽस्तीति चेन्न । प्रतियोगिसत्त्वस्यानुपयुक्तत्वात् तत्प्रतीतौ च तत्प्रतीतेरेवोपयुक्तत्वादिति भावः । भेदो वस्तुस्वरूपमित्युक्तं स किं भावात्मैव सर्ववस्तुस्वरूपमित्यतो नेत्याह- **एवमिति** । स्वरूपं भेद इति शेषः । उत्तरार्धं संयोज्य पश्चादेवमिति योज्यम् । एवं भावनाशे भेदो नश्यतीति सिद्धान्तं निरूप्य

परमतं विकल्पेन दूषयति- **नष्टेति** । भेदो न नश्यतीति कोऽर्थः यदा नष्टस्य वस्तुनः भेदोऽपि प्रध्वंसाभावात्मा विद्यत इति तदेष्टम् । प्रध्वंसाङ्गीकारात् । तस्य वस्तुनो भेदत्वाभावात् । यदि नष्टस्य वस्तुनो भावात्मा विद्यत इति तच्चायुक्तम् । तदात्मवस्तुविनाशत इत्यर्थः । अन्योन्याश्रयादिदोषदुष्टत्वात् भेदो न वास्तवः । यः पश्चादस्ति नवेति विचार्यत इत्यत आह- **स्वरूपत्वादिति** । भेदस्य भावस्वरूपत्वात् धर्मिभेददूषणान्योन्याश्रयादेरलग्नत्वात् । उक्तरीत्या स्वरूपभेदोक्तदूषणालग्नात् भेदे कस्यचिद्दूषणस्य शंका नेत्यर्थः । भेदस्य भावस्वरूपत्वं कुत इत्यतो भावस्य सर्वासंकीर्णतयाऽनुभूयमानत्वादित्याशयवांस्तत्र सर्वाज्ञाने कथं सर्वासंकीर्णत्वज्ञानमित्याशंकायामाह- **सर्वमिति** । एवं भावादभावस्येत्यत्राभावस्य धर्मित्वप्रतियोगित्वे स्त इत्युक्तम् । कैश्चित्तदनभ्युपगमात् तत्साधयितुं प्रतिजानीते- **प्रतियोगितेति** । अपिशब्देन धर्मित्वं गृह्यते । प्रतियोगित्वादिर्भावरूपो धर्मः स कथमभावस्य स्यादित्यत आह- **अभावतयेति** । स्फुटमस्तीति पूर्वत्र संबध्यते । प्रतियोगित्वादिरभावस्याभावरूपतयास्त्यतो नोक्तदोष इत्यर्थः । नन्वभावो निर्धर्मकोऽतः कथं तस्य धर्म इत्यत आह- **नहीति** ।। प्रमेयत्वादिधर्मानुभवादिति हिशब्दार्थः । तुकारेणाभावस्य भावधर्मित्वे विरोधमाह । नन्वभावोऽस्तीत्यभावस्य भावस्येवास्तित्वं भावधर्मः प्रतीयत इत्यत आह- **अभावस्येति** । एतदेव विशदमाह- **अभावतापि सैवेति** । अभावतापि अभावतैव सैवास्तिताभावरूपायाः तस्या अनानुभविकत्वादित्यर्थः । एवमन्योन्याश्रयादिदोषपरिहारेण भेददर्शनस्य सुकरत्वं प्रसाध्य सर्वव्यावृत्ततया अन्नमयादिपंचरूपब्रह्मज्ञानिनः उक्तं फलं विशदमाह- **अत इति** । भेदपक्षदोषाणां परिहृतत्वादिति यावत् ।।२१-२२।।

**।। इति द्वितीयवल्ली सम्पूर्णा ।। २ ।।**

**श्री.भा-** एवं विष्णोर्विदुषां नरादिब्रह्मान्तानां नियमेन मोक्षदातृत्वरूपं मोक्षे च तरतमभावापन्नस्वरूपानन्दाविर्भावदातृत्वरूपं महिमानं चोक्त्वा इदानीं उत्कृष्टापकृष्टसर्वजीवनियामकतयावस्थितरूपाभेदरूपं महिमान्तर-मुच्यते । स यश्चायं पुरुष इत्यादिना । तत्र पूर्वेण संगतिं सूचयन् पुरुषशब्दोक्तमनुष्यादित्यमात्रस्थितयोरेव रूपयोः अभेद उच्यत इति प्रतीतिनिरासायादित्यपुरुषशब्दौ उत्कृष्टापकृष्ट सर्वजीवोपलक्षकावित्य-भिप्रेत्य प्रमाणेनैव व्याचष्टे- **यत्प्रसादादित्यादिना** । ब्रह्मादीनामन्ततः लिंगदेहनाशानन्तरम् । सं सम्यक् स्वयोग्यतानुसारेण । स्वरूपाप्तिः स्वरूपानन्दावाप्तिः । यत्प्रसादाद्भवति स विष्णुरिति योज्यम् । समन्ततः सर्वकल्पेष्ववस्थितानामिति वा । स एक इत्यत्र त्यच्छब्दानुवादेन विष्णुरिति व्याख्यानात् । सर्वजीवेष्वित्यस्य विवरणं नृषु देवेषु चेति । तथाचादित्यपुरुषशब्दावुत्कृष्टापकृष्टसर्वजीवोपलक्षकावित्युक्तं भवतीति ज्ञातव्यम् । भेदाभेदव्यावृत्त्यर्थं एकएवेत्युक्तम् । करचरणादिसमग्रांग-साकल्येन युगपदनेकस्थानस्थितस्य विष्णोरेकत्वमन्यत्रादृष्टं कथं घटत इत्यत आह- **महायोगीति** । युज्यतेऽनेन योगो असावुपायः शक्तिरेव चेति शब्दनिर्णयवचनात्। अघटितघटकतया महान् योगः शक्तिः तद्वानित्यर्थः । उत्कृष्टापकृष्ट जीवस्थितयोर्विष्णुरूपयोर्यमधर्मरूपयोः विदुरयुधिष्ठिरयोरिव विशेषोऽस्ति किं नेत्याह- **अखिलैर्गुणैर्निर्विशेष इति** । सर्वजीवाव-स्थितत्वोक्त्या लब्धार्थप्रदर्शनम्- **सर्वोत्तम इति** । सम्पूर्णः अखिलैर्गुणैरिति वर्तते । सर्वरूपेष्वभेदादिरूपभगवन्माहात्म्यवेत्तुः मुक्तानन्दादितारतम्यं वेत्तुश्च फलमुच्यते स य एवंविदित्यादिना । तद्व्याचष्टे- **तमेवं वेदेति** । सर्वरूपाभिन्नत्वसृष्टिपदार्थप्रेष्ठत्वादिरूपोक्तमाहात्म्योपेतत्वेन तं विष्णुं वेदेत्यर्थः । जीवान्मनुष्योत्तमादिब्रह्मान्तान् तारतम्यस्थान् भगवत्प्रसादा-विर्भूततरतमभावोपेतानन्दादिमत इति यावत् । यो वेद सः अस्माल्लोका

च्चरमत्वेन प्रसिद्धाच्छरीरात्प्रेत्येति शेषः । पञ्चरूपिणं विष्णुं गच्छेदित्यर्थः । पञ्च च तानि रूपाणि च पञ्चरूपाणि तान्यस्य सन्तीति पञ्चरूपी तमिति कर्मधारयादिनिः। उपसंक्रामतीत्यस्यार्थो गच्छेदिति । अत्रान्नमयनामा-निरुद्धो भूम्यपुस्थितः । प्राणमयनामा प्रद्युम्नो अग्न्यादिस्थितः । मनोमयनामा संकर्षणो मन आदितत्वस्थितः। विज्ञानमयनामा वासुदेवो महत्तत्वस्थितः । आनन्दमयनामा नारायणोऽव्यक्ततत्वगत इति विशेषा द्रष्टव्यः । यथोक्तं द्वितीयस्कन्धतात्पर्ये । भूम्यब्गमन्ननामानं प्राणमग्न्यादिसंस्थितम् । मानसं मनआदिस्थं विज्ञानं महति स्थितम् । आनन्दव्यक्तगतं क्रमशो यान्ति देवता इति । अनेन य एवंवित्सोऽ-स्माल्लोकात्प्रेत्यैतच्छरीररूपमन्नमयमात्मानं शरीररूपं कोशमुपसंक्रामति। अतिसंक्रामति अतिक्रम्य परित्यज्येति यावत् । गच्छतीत्येतदपव्याख्यान-मित्युक्तं भवति । श्रुतोपशब्दत्यागस्याश्रुतातिशब्दकल्पनस्य चापत्तेः । न चाव्ययानामनेकार्थत्वादुपशब्द एवातिक्रमार्थक इति वाच्यम् । अव्ययाना-मनेकार्थत्वेऽपि अन्तरित्यस्य कदापि बहिरित्यर्थकत्वाभावात् । अन्नमय-शब्दवाच्यशरीररूपकोशपरित्यागस्य अस्माल्लोकात्प्रेत्येति पूर्ववाक्येनैवोक्तत्वेन पुनरुक्तिश्च स्यादिति द्रष्टव्यम् । यथोक्तमनुव्याख्याने । 'उपसंक्रमणं चैव द्वितीयोद्देशितं प्रति । अतिक्रमं वदन्तं तमुपशब्दो निवारयेत्' । अश्रुतस्यातिशब्दस्य स्थानं दद्यात्कथं पुनः। श्रुताश्रुतपरित्यागकल्पने विगतह्रियाम् । मृतावेव परित्यागः कृतो ह्यन्नमयस्य च इति ।। २-२१ ।।

स य एवंविद्वानेते आत्मान॑ँस्पृणुते इत्येतद्व्याचष्टे- **न पुण्यपापे चेति** । तस्य एवंवेत्तुः । स्वफलप्रदे इति शेषः । ननु प्रारब्धपुण्यपापयोः सद्भावात्कथमेतदित्यत उक्तम्- **अनिष्टेति** । यदनभीष्टमप्रारब्धं काम्यं पुण्यं तद्बन्धकत्वेनानिष्टम् । पापं त्वनिष्टं भवत्येवेति प्रसिद्धत्वात् । अप्रारब्धं काम्यं पुण्यं पापं चेत्येते पुण्यपापेन स्वफलप्रदे भवत इत्यर्थः । यथोक्तं

सूत्रकृता । अतोऽन्यदपीत्येकेषामुभयोरिति । उक्तं च भाष्ये । अनभीष्टमनारब्धं पुण्यमप्यस्य नश्यति । किमु पापं परब्रह्मज्ञानिनो नात्र संशय इति । कुतो न तस्यानिष्टे पुण्यपापे स्वफलप्रदे इत्यत आह- **प्रियाप्रियेष्विति** । प्रियेष्वप्रियेषु च नृषु । पुत्रादयस्तदितरे सुहृदश्च प्रियशब्देनात्र विवक्षिताः । ते अनिष्टपुण्यपापे पुत्रादयः प्रियाश्चापरोक्ष-ज्ञानजन्मकालीना एवेति सम्प्रदायविदः । आस्तृणोति विस्तारयति । जहातीति यावत् धातूनामनेकार्थत्वात्। यतस्ततो न तस्यानिष्टे पुण्यपापे स्वफलप्रदे इति सम्बन्धः । यथोक्तं भाष्ये तस्य पुत्रादायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामिति । तस्यापरोक्षज्ञानिनः तज्जन्मकालीनाः ये पुत्राः सुहृदः तदन्ये प्रियाश्च ते सर्वे साधुकृत्यां दायं अप्रारब्धा-निष्टकाम्यपुण्याख्यं धनं उपयन्ति प्राप्नुवन्ति । द्विषन्तस्तु पापकृत्यां दायं अप्रारब्धपापाख्यं दायमुपयन्तीति श्रुत्यर्थो द्रष्टव्यः ।

यतो वाचो निवर्तंते इत्यादिकं व्याख्याति- **अगोचरमिति** । समासांतो विधिरनित्य इति वचनात् वाङ्मनसोरिति साधु । साकल्येनेति शेषः । कुत इत्यतस्तत्र श्रुत्यभिप्रेतं हेतुमाह- **आनन्त्यादिति** । पुरुषोत्तमं ज्ञात्वेत्यनेनानन्दं ब्रह्मण इत्येतदानन्दरूपं परं ब्रह्म विद्वानिति व्याख्येयमिति सूचयति । ज्ञात्वेत्यनन्तरं अवस्थितस्येति शेषः । तेन ज्ञानरूपक्रियायां अवस्थानरूपक्रियायां च पुरुषस्यैव कर्तृत्वेन समानकर्तृत्वप्राप्त्या भुक्त्वा व्रजतीतिवज्ज्ञात्वेत्युक्त्वा प्रत्ययोपपत्तिः । समानकर्तृकयोः पूर्वकाले क्त्वेति स्मरणात् । तथाच ज्ञानरूपक्रियायां पुरुषस्य कर्तृत्वान्न भविष्यतीत्युक्त भवनरूपक्रियायां च भीरित्युक्तभयस्य कर्तृत्वेन समानकर्तृत्वाभावात्कथं क्त्वाप्रत्ययप्रयोग इति शंकानवकाश इति ज्ञातव्यम् । भीर्नैवेति । किमहं साधुनाकरवमित्यादिरूपपश्चात्तापजनिता भीर्भीतिः संसारिणां या प्रसिद्धा सा मुक्तस्य कुतश्चन कुतोऽपि नैव भविष्यतीत्यर्थः ।। २.२१ ।।

एवं समग्रब्रह्मवल्लीं स्वयोग्यं ब्रह्मविदित्यादिप्रमाणेनैव सम्यग्व्याख्याय सोऽश्नुत इत्यादेः परकृतापव्याख्यां प्रत्याख्याति- **न चेति** । ननूपनिषद्व्याख्यानमुपक्रम्य अपव्याख्याननिराकरणे असंगतिरिति चेन्न । स्वव्याख्यानदार्ढ्यार्थत्वात् यावदापातसुंदरं अपव्याख्यानं शिष्याः पश्येयुस्तावत्प्रमाणेन कृतमपि सम्यग्व्याख्यानं न तेषां हृदि दृढनिरूढं भविष्यतीति तत्प्रत्याख्यानमावश्यकमेव । तत्र स ब्रह्मवित्सहयुगपत् एककालं सर्वान् कामानश्नुते ।

ननु कथं तस्य सर्वकामभोक्तृत्वमित्याशंक्योक्तम् । ब्रह्मणेति । ब्रह्मरूपेणेत्यर्थः । तथाच मुक्तस्य ब्रह्माभिन्नत्वाद्ब्रह्मणश्च भोक्तृसर्वजीवात्मकत्वात् तद्घटत इत्येवं सोऽश्नुते सर्वान्कामान् सह ब्रह्मणेति वाक्यस्यार्थो न कल्पनीय इत्यर्थः । कुतो न कल्पनीय इत्यत आह- **अप्रामाणिकत्वादिति** । प्रमाणशून्यत्वात् स्वयोग्यं ब्रह्मविदित्यादिप्रमाणविरुद्धत्वाच्चेत्यर्थः । अनाश्वासाच्चेति । अप्रामाणिकत्वादेव त्वदुक्तेऽर्थे विश्वासाभावाच्चेत्यर्थः ।

ननु भवद्भिरपि ओषधीभ्योऽन्नमित्यत्राऽन्नशब्दः प्रसिद्धान्नपर इत्यंगीकृत्य स वा एष पुरुषोन्नरसमय इत्यत्रान्नशब्दो अत्तृत्वाद्यर्थ इत्येवं अत्तृत्वा त्सर्वलोकानामन्नमित्युच्यते हरिः । उपजीव्यश्च भूतानामित्यादिव्याख्यातम् । तदप्ययुक्तम् । एकेन शब्देन द्विरुक्तेन भेदश्रुतिं विना वस्तुद्वयोक्तिग्रहणा-योगादित्याशंक्य निषेधति- **नचेति** । उभयार्थत्वे प्रसिद्धान्नात्तृत्वादि-रूपार्थद्वयवत्त्वे अन्नशब्दस्यांगीकृते सतीति शेषः । विरोधः पूर्ववाक्ये अन्नशब्दस्य प्रसिद्धान्नपरत्वे प्रकृतत्वविरेध इत्यर्थः । कुतोन विरोध इत्यतो ज्ञापकसद्भावादित्याह- **विशेषितत्वादिति** । ओषधीभ्योऽन्न-मित्यत्रान्नशब्दः प्रसिद्धान्नपर एव सवा एष इत्यत्र चान्नशब्दो रसशब्देन विशेषितत्वादत्तृत्वाद्यर्थ इत्येवमर्थद्वयांगीकारोपपत्तेर्न विरोध इत्यर्थः । तत्र दृष्टान्तमाह- **अन्नस्यान्नमित्यादिना** । अन्नस्यान्नत्वप्रदं भगवद्रूपमित्यर्थः ।

प्राणो मुख्यप्राणो मध्यमोऽवान्तरेश्वरः । अवान्तरेश्वरत्वेन तस्येश्वरवचो भवेत् । अतो मध्यमतामाहुरिति वचनात् । प्राणो हरिः स्थूणां स्तम्भवदाश्रयः । स्थूणा तु भगवान्हरिरिति वचनात् । यथान्नस्यान्नमिति वाक्ये अन्नशब्दद्वयं भिन्नार्थकमेव । एकस्य षष्ठ्या निर्देशात् अपरस्य प्रथमया निर्देशात् । यथावाक्योऽयं मध्यमः प्राणः स्थूणेत्यत्र एकप्रकरणे श्रुतस्यापि प्राणशब्दद्वयस्य मुख्यप्राण भगवदाख्यार्थद्वयमंगीक्रियते । मध्यमत्वस्थूणात्वरूपविशेषणबलात् । एवं प्रकृतेऽपि ओषधीभ्योऽन्न-मन्नात्पुरुष इत्यत्रौषधिजातत्वेन देहोपादानत्वेन च विशेषितत्वात्तत्रान्नशब्दः प्रसिद्धान्नार्थक एव । सवा एष इत्यत्र तु रसशब्देन विशेषितत्वादन्न-शब्दोऽत्तृत्वाद्यर्थक एवेत्यर्थद्वयांगीकारो युक्त इत्यर्थः । एष भगवान् अनिरुद्धः स्वयं हरिरित्यादिना अन्नमयादयः पञ्चापि ब्रह्मैवेति प्रमाणेन स्वयं व्याख्यातम् । मायावादिनस्त्वाहुरन्नमायादयः पञ्चापि कोशा एवेति तद्दूषयति- **नचेति** । ननु तेषां ब्रह्मत्वेऽपि किं मानमिति चेत् । उदाहृतं प्रमाणवाक्यं तावदेकम् । ॐ आनन्दमयोऽभ्यासात् इति सूत्रोक्तब्रह्म-शब्दाभ्यासरूपं प्रमाणान्तरमाह- **येन्नं ब्रह्मेत्यादिना** । अन्नमयादीनां ब्रह्मत्वे भृगुवल्लीसमाख्याकथनं अधीहीत्यादि । ब्रह्मशब्देनोक्तत्वात् ब्रह्मशब्देना-न्नमयादीनां विशेषितत्वादित्यर्थः ।

नन्वन्नं प्राणमित्यादिवाक्ये ब्रह्मशब्दाश्रवणात्कथं ब्रह्मशब्देनोक्तत्वादित्युच्यते । अतोऽन्नादीनामब्रह्मत्वमेवेत्याशंकापरिहारायाधीहि भगवो ब्रह्मेति वाक्यमुदाहृतम् । 'अधीहि भगवो ब्रह्मेति' इति भृगुणा ब्रह्मोपदेशप्रार्थने कृते सति वरुणेन तं प्रत्युपदिष्टत्वान्यथानुपपत्त्यान्नादीनां ब्रह्मत्वावगमात् । यथोक्तम् । अधीहि भगवो ब्रह्मेत्युक्तोऽन्नप्राणपूर्वकम् । आह ब्रह्मकथं तन्नेति । अन्नं ब्रह्मेति व्यजानादित्यादौ तु स्पष्ट एव ब्रह्मशब्दः । अत एवेत्यादिनेत्युक्तम् । नच ब्रह्मोपदेशप्रार्थने कृतेऽपि वरुणोऽन्यदुवाचेति युक्तम् । मायावित्वप्राप्तेः ।

यथोक्तम् । तद्यत्किञ्चित्कथं ब्रूयादुपसन्नाय दिक्पतिः । नवदेत् ब्रह्म च कथं मायावी नहि वारिराडिति ।

ननु ब्रह्मवल्ल्युक्तानां अन्नमयादीनां ब्रह्मत्वेऽपि भृगुवल्ल्युक्तानां कुतो ब्रह्मत्वमिति चेन्न ब्रह्मवल्ल्युक्तार्थे समाख्यात्वेनैव भृगुवल्ल्याः प्रवृत्तत्वात् । यथोक्तम् । भृगोश्चैतद्वदिष्यतीति । ननु स्थानद्वयेऽपि नैकं वस्तूच्यते । ब्रह्मवल्ल्युक्ताः अन्नमयादयः भृगुवल्ल्युक्ताश्चान्नादय इति संज्ञाभेदादिति चेन्न । भृगुवल्ल्यामपि एतमन्नमयमात्मानमुपसंक्रम्येत्यादिना प्राप्यस्थाने मयटामुक्तत्वेन शब्दान्तरन्यायेन भृगुवल्ल्युक्तान्नादिशब्दानामपि अन्नमयादिपरत्वात् । यथोक्तं प्राप्यत्वेन मयट् प्रोक्तेर्न तत्राप्यन्यदुच्यत इति ।

ननु तथापि न स्थानद्वयोक्तमेकं वस्तु भवितुमर्हति । ब्रह्मवल्ल्युक्तानां अन्नमयादीनां पञ्चत्वात् भृगुवल्ल्युक्तानां अन्नादीनां षट्त्वादिति संख्याभेदादिति चेन्न । वाधूलशाखायामष्टमरूपस्यापि ब्रह्मण उक्तत्वेन तदनुसारादत्रापि ब्रह्मवल्ल्यां चक्षुः श्रोत्रवाचामपि ग्राह्यत्वात् । भृगुवल्ल्यामपि विज्ञानानन्दमययोर्ग्राह्यत्वेन स्थानद्वयेऽपि रूपाष्टकस्य वाच्यत्वेन संख्यासाम्यस्यैव प्राप्त्या तद्भेदाभावात् । यथोक्तम् । तच्च वाधूलशाखायामष्टरूपमुदाहृतम् । 'विज्ञानानन्दसहितं पृथक् सृष्ट्यादिलक्षणैः । आवापोद्वापतः शाखायत आहुः परम्पदम्' इति । अन्नमयप्राणमयमनोमय विज्ञानमयानन्दमया मे शुद्ध्यन्तामिति श्रुत्यन्तरोक्तानां तु शुद्धिप्रार्थनलिंगादब्रह्मत्वेऽपि न विरोध इति ज्ञातव्यम् । अतः स्थानद्वयेऽप्येकस्यैव वस्तुन उच्यमानत्वेन न युक्तं ब्रह्मवल्ल्युक्तान्नमयादीनां ब्रह्मत्वे भृगुवल्लीसमाख्याकथनमिति भावः ।

एवमन्नमयादीनां पञ्चानां ब्रह्मत्वमुपपाद्यान्नमयस्यैवाब्रह्मत्वे आन्तरानुपपत्तिं चाह- **नचेति** । अन्ननामाचान्नसंस्थ इत्युक्तरीत्यान्नशब्दस्यानिरुद्धनामक-

परब्रह्मत्वमनंगीकृत्य प्रसिद्धान्नपरत्वांगीकारे अन्नमयं प्रत्युदाहृतश्लोके 'अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत' इति अन्नशब्देनुच्यते । तदयुक्तं स्यात् । प्रसिद्धान्ने भूताद्यत्वस्य कथञ्चित्सम्भवेऽपि भूतात्तृत्वस्य कथमप्यसम्भवादिति भावः ।

ननु लौकिकान्ने अविद्यमानमप्यत्तृत्वमुपनिषदोच्यते उपासनार्थम् । सा चाविद्यमानस्यापि सम्भवति । 'योषितमग्निं ध्यायीत' इति वदतो न तद्बाधकमित्यत आह- **येऽन्यथेति** । येऽन्यथा विद्युरुपासीरन् ते अन्यराजानः अन्ये स्वाधमाः राजानो नियामका येषां ते तथा । स्वाधमनियम्या भवन्ति ते क्षय्यलोका भवन्तीति श्रुत्यर्थः । दोषः स्वावरनियम्यत्वादिरूपोऽनर्थः । नायं विशेषतोऽनर्थ इत्यत आह - **नचेति** । आत्महन इत्ययुक्तम् । तस्य नित्यत्वादित्यत उक्तम् । असदुपासनयेति । न रमंति सुखवन्तो न भवन्ति । च शब्दान्नित्यदुःखमनुभवन्तीति समुच्चिनोति । यथोक्तं श्रुतिगीतातात्पर्ये । न रमंति नित्यदुःखं चानुभवन्तीति च शब्देनोक्तमिति । येऽन्यथा विदुरिति श्रुत्युदाहरणं तु सज्जनस्यैव दुःसंगत्या कदाचिदन्यथोपास्तिप्रसक्तौ सत्यां तस्येदं फलमुच्यत इति ज्ञापयितुम् । तथाच ये सन्त एव दुःसंगात् यद्यन्यथा विद्युस्तर्हि ते क्षय्यलोका अनित्यनरकभाजो भवन्ति । तदनन्तरं भूमौ जन्म लब्ध्वाऽन्यराजानो भवन्तीति ज्ञातव्यमिति सम्प्रदायविदः । स्फुटं चात्र प्रमाणमाह- **नाविद्यमानमिति** । वैदिकावेदानुसारिणो ग्रन्थाश्च ।

ननु योषितमग्निं ध्यायीत इत्यविद्यमानोपास्त्यभिधायकवेदानां कथं व्याख्यानं कार्यमिति चेत्तत्राह- **तस्मादिति** । सत्यार्थतां अबाधितार्थवत्ताम् । तथाच 'अंगारसदृशी नारी घृतकुम्भसमः' पुमान् इति वाक्यान्तरानुसारेण यथाग्निसम्बन्धिकुम्भस्थस्य घृतस्य द्रवीभवः एवं योषित्सम्बन्धेनापि पुरुषान्तःकरणस्य द्रवीभावो भवति । अतः सा परित्याज्या इति

योषित्यग्निसादृश्यमभिप्रेत्यैव योषितमग्निं ध्यायीतेत्युच्यते । नाग्निभेदाभिप्रायेणेति भावः । एवं नाविद्यमानमित्याद्युक्तप्रकारेण । किन्तत इत्यत आह- **ज्ञानवानिति** । अन्यथोपासनयाऽधरं तमो यान्तीति ज्ञानवान् । अन्यथा अन्यथोपासको न भवेदित्यर्थः । अत्राह । जीव एवान्नमयादिशब्दार्थो न ब्रह्म । स ह्यन्नविकारशरीरावच्छिन्नत्वाद्भवत्यन्नमयः । प्राणमनो बुध्यानन्दोपाध्यवच्छिन्नश्च भवति । प्राणादिविकारो घटाकाशमिव घटविकारः । तेन प्राणमयत्वाद्युपपत्तिः । तथाच स वा एष पुरुष इति परामर्शस्तदुपाधिविषयतयाश्लिष्टतरो भवति । रसशब्दश्चान्नस्थविभागव्यावर्तको भविष्यति । इदमिति निर्देशश्च मुख्यार्थः सम्पद्यते । प्राणमयादिषु सर्वत्र शिरः प्रभृत्यवयवानां वक्तव्यत्वेन तत्प्राप्तये सिद्धस्यापि कथनोपपत्तेः । शारीरत्वमवयवित्वं प्रियादियोगो ब्रह्मपुच्छत्वं चेति एतत्सर्वं जीवपक्षे समंजसं भवति । नच वक्तव्यं शरीरादिकोशा एव कुतस्तर्हि नांगीक्रियन्ते । तथाचान्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुद्ध्यन्तामिति श्रुत्यन्तरानुगुण्यं च स्यादिति । कोशेषु ब्रह्मशब्दाद्यनुपपत्तेः । अन्यत्वमन्तरत्वं शारीरत्वं चोपाध्यपेक्षया जीवेप्युपपद्यते ।

ननु जीवपक्षेप्यनुपपत्तिरस्ति । तथाहि ब्रह्मशब्दो हि निर्बाधो न परमात्मना विनोपपद्यते । अद्यतेऽत्ति चेति सर्वाद्यत्वं सर्वात्तृत्वं प्राणं देवा इति सर्वदेवादिचेष्टकत्वं यतो वाच इति वाङ्मनसागोचरत्वं विज्ञानं देवाः सर्व इति सर्वदेवोपास्यत्वं ज्येष्ठत्वं सोऽकामयत इति संकल्पपूर्वकं स्रष्टृत्वं सर्वान्तरत्वमित्यादीनि नाल्पतरज्ञानशक्त्यादिसंपन्ने जीवे सम्भवन्ति । को ह्येवान्यात् इति चासंगतमेव स्यात् । तदेषाभ्युक्तेति मन्त्रवर्णसमाख्योक्तिश्च बाध्येत । तत्र सोऽश्नुत इत्युक्तस्य मोक्षस्य जीवज्ञानादनुपपत्तेरतो न जीवोऽन्नमयादिशब्दार्थः । किन्तु ब्रह्मैवेति चेत् मैवम् । उपनिषदर्थानवबोधात् । अत्र हि जीवब्रह्मणोरेकत्वं तत्वतो विवक्षितम् । तत्र यानि

वाक्यानि शुद्धविरोधीनि तान्युपहितसंसारिस्वरूपापेक्षाणि । ब्रह्मशब्दादीनि तु तत्स्वभावसिद्धपरमात्मस्वरूपापेक्षाणि । ऐक्ये विवक्षा चात्र वाक्यशाबल्यान्यथानुपपत्त्यैव गम्यते । नचैवं जीवब्रह्मणोरैक्यविवक्षायां जीवः कुतोऽन्नमयादिशब्दार्थः परमात्मैव किं न स्यात् । विनिगमनायां कारणाभावादिति वाच्यम् । विशुद्धिविरोधिवाक्यानां परमात्मनि सर्वथाप्यनुपपत्तेः । सत्यप्यभेदे महाकाशधर्म एवावच्छिन्नाकाशे व्यवह्रियते । 'यावान्वाऽयमाकाशस्तावानेषोन्तर्हृदय आकाश' इति । नतु परिच्छिन्नधर्मो वितस्तिमात्रत्वं महाकाशे । नच जीवपक्षे ब्रह्मपुच्छं प्रतिष्ठेत्यनुपपन्नमिति वाच्यम् । अस्य जीवस्य ब्रह्म पुच्छमायतनमधिष्ठानं निजस्वरूपमित्यर्थोपपत्तेरिति । तदेतन्निराकरोति- **स यश्चायमिति** । अधिकरणत्वेनेत्युपलक्षणम् । अधिष्ठातृत्वेनेत्यपि ग्राह्यम् । परमात् परमात्मनः । स्यादेतदेवं कथञ्चिदुक्तं समस्तम् । यद्यस्यामुपनिषदि जीवपरमात्मनोरभेद एव विवक्षितः स्यात् । न चैवम् । स यश्चायं पुरुषे यश्चासावादित्य इति पुरुषादित्यशब्दोपलक्षितापकृष्टोत्कृष्टसकलजीवानां नियम्यतयाऽधिकरणत्वेन परमात्मनश्च नियामकतयाधिष्ठातृत्वेन भेदस्यैवोक्तत्वादित्यर्थः । उक्तं चानुव्याख्याने । आदित्ये पुरुषे चायमिति भेदोपदेशतः । नास्याभेदोऽस्ति जीवेनेति ।

नन्वस्त्वेवं परमात्मना जीवानां भेदः । स च संसारे आविद्यक एवाभिप्रेतो न पारमार्थिकः । अभिहितवाक्यस्य च तादृशभेदपरत्वेनोपपत्तिरिति चेत् । मैवम् । अस्मिन्प्रकरणे निवृत्ताविद्यकस्यापि परमात्मना भेदस्यैव बहुवारमुक्तत्वादित्याह- **एतस्मिन्नित्यादिना** । विन्दत इत्यनन्तरं अथ सोऽभयं गतो भवतीति वाक्यशेषोऽपि ग्राह्यः । इत्यादिनेत्यादिपदेन 'रसं ह्येवायं लब्ध्वानन्दी भवति सुवर्णज्योतीः' इति च वाक्यं ग्राह्यम्- **भेद एवाभ्यस्यत इति** । भेदकधर्म एव बहुवारमुच्यत इत्यर्थः ।

नत्वेकप्रकारासकृदुक्तिरूपो मुख्यो ग्राह्यः । तादृशस्यात्रादर्शनादिति ज्ञातव्यम् । अत्र एतस्मिन्निति वाक्ये । प्रतिष्ठां विन्दत इति ज्ञातृज्ञातव्यत्वयोरभयं गतो भवतीति प्राप्तृप्राप्यत्वयोश्चोक्त्या भेद एवावगम्यते । परमात्मप्राप्त्युक्त्या च मुक्तपरत्वं तत्प्राप्तेरेव मुक्तित्वात् । एतमिति वाक्येऽपि उपसंक्रामतीति प्राप्तृप्राप्यभावोक्त्या भेद एवोच्यते । अस्माल्लोकात्प्रेत्येत्युक्तत्वाच्च मुक्तपरत्वम् । सोऽश्नुत इत्यत्र ब्रह्मणा सहेत्युक्त्या भेदोलब्धः । सर्वकामावाप्त्युक्त्या च मुक्तपरत्वम् । एतमिति भृगुवल्ली गतवाक्येऽप्युक्तरीत्या भेदस्तस्य मुक्तपरत्वं च । रसं ह्येवायमित्यत्र लब्धृलब्धव्यत्वयोरुक्त्या भेदः । अस्य वाक्यस्य आनन्दमेनं सम्प्राप्य मुक्तो मोदेन्नचान्यथेति प्रमाणेन मुक्तपरतया व्याख्यातत्वान्मुक्तपरत्वं चावगम्यते । सुवर्णज्योतारित्यत्रापि प्रेर्यप्रेरकभावोक्त्या भेदः । अस्माल्लोकात्प्रेत्य इत्यारभ्याधीतत्वेन मुक्तपरत्वं चेत्यवगन्तव्यम् । सैषानन्दस्येत्यादिना क्रियमाणानन्दमीमांसा संसार्यानन्दविषयिण्येव न मुक्तानन्दविषयीति व्याख्यानं विदुषां नियमेन तु । स्यादेव मोक्षस्तत्रापि ह्यानन्दस्य विचित्रतेति प्रमाणोदाहरणेनैव निरस्य युक्त्यापि निरस्यति - **अथेत्यादिना** । मुक्तानन्दो मीमांस्यत इत्यत्र हेतुरथेति । मुक्तिप्रस्तावात् मुक्त्युपक्रमादित्यर्थः । तथाच मुक्तिमुपक्रम्य तत्प्रकरणे अधीतं सैषानन्दस्येति वाक्यं मुक्तानन्दमीमांसापरमेवेति भावः । युक्त्यन्तरं चाह- **श्रोत्रियस्य चेति** । मनुष्यगन्धर्वानारभ्य सर्वत्रेत्यर्थः । चशब्दः प्रस्तावादित्युक्तयुक्तिसमुच्चायक इति द्रष्टव्यम् । तथाच श्रोत्रियत्वाकामहतत्वयोरन्यत्रामुक्तेऽसंभवा-त्तद्विशेषणयुक्तो मनुष्यगन्धर्वादिर्मुक्त एवेति तदानन्द एव मीमांस्यत इति भावः । पूर्वटीकाकारास्तु उदाहृतवाक्येषु प्रतीतो भेदो मुक्तभेद इति कुत इत्यत आह । अथेतीत्येवमथ सोऽभयं गतो भवतीति मुक्तिप्रस्तावादिति वाक्यं पूर्वग्रन्थशेषत्वेन व्याख्याय सैषेत्यादिवाक्यद्वयं तु सैषानन्दस्येत्येत-

न्मुक्तिपरतया व्याख्यातं तत्कुत इत्यतः साधयितुं प्रतिजानीते- सैषेति । प्रमाणेन तथा व्याख्यातत्वादिति भावः । युक्त्यन्तरं चाह- श्रोत्रियस्य चेतीति । व्याकुर्वते । अत्र चशब्दः पूर्वोदाहृतप्रमाणसमुच्चायक इति ज्ञातव्यम् । अत्र केचिदाहुः । न श्रोत्रियत्वादिविशेषणबलात्प्रकृतमनुष्यगन्धर्वादीनां मुक्तत्वं वाच्यम् । अमुक्तानामपि तत्संभवात् । श्रोत्रियं श्छन्दोऽधीते इति स्मरणाच्छ्रोत्रियत्वस्य छन्दोधिगतिनिमित्तकत्वात् । मनुष्यगन्धर्वादीनां च सर्वज्ञकल्पत्वाद्विषयवैराग्योपेतत्वादकामहताश्च भवन्तीति । तत्राह- **नहीत्यादिना** । अमुक्तस्येति समुदायापेक्षमेकवचनम् । अमुक्तानां मनुष्यगन्धर्वादीनामित्यर्थः ।

ननु तर्हि किं तन्मुख्यं श्रोत्रियत्वमकामहतत्वं च यदुभयममुक्तानामसम्भावितमित्यत आह- **यस्येति** । श्रुतिफलं मोक्षः । स क इत्यत आह- **स हि मुक्त इति** । सः श्रुतिफलं प्राप्तो मुख्यः श्रोत्रियो मुक्त इत्येवं हि प्रसिद्धं मुक्तेरेव श्रुतिफलत्वात् । तस्य मुक्तेनैवाप्तत्वादिति भावः । अकामहत इत्यत्रापि स मुक्त इत्यनुवर्तते । कुतो मुक्त एवाकामहत इत्यत आह- **सहीति** । स मुक्त एव कामैर्न हन्यत इत्येतत्प्रसिद्धमित्यर्थः । कुतो न हन्यत इत्यत्र निमित्तमाह- **यस्येति** । काम्यन्त इति कामाः विषयाः । सत्याः अनायासेन प्राप्ताः ।

एतदुक्तं भवति । कामेनोपद्रवो हि कामहतता । तदभावश्चाकामहतता । कामकृतोपद्रवाभावश्च अनायासेन तद्विषयप्राप्तावेव भवति नान्यथेत्यनुभवसिद्धमतः प्राप्तकामत्वाकामहतत्वयोर्निमित्तनैमित्तिकभावो युक्त एवेति । यथोक्तमनुव्याख्याने । अप्रयत्नेन कामानामवाप्तिः सा यदा भवेत् । तदैवाकामहततेति । ननु यमस्ति नियमो यदाप्तकामस्यैव कामनिमित्तोपद्रवाभावो नान्यथेति । सर्वथा कामाभावेऽपि तन्निमित्तोपद्रवाभावसंभवात् । एवं च मनुष्यगन्धर्वादिषु आप्तकामत्वाभावेऽपि अकामत्वेनैव निमित्तेन

अकामहतत्वं संभवतीति चेन्न । प्रकृतमनुष्यगन्धर्वाद्याः न सर्वथा कामरहिताः । असुप्ता मूढचेतनत्वात् देवदत्तवदित्यनुमानविरोधादित्याशयवाननुमानस्य व्याप्तिमुपपादयति- **नहीति** । कश्चित् असुप्ता मूढचेतनः अकामो नहि दृश्यत इत्यर्थः । घटादौ व्यभिचारवारणाय चेतनत्वादित्युक्तम् । सुप्तमुग्धयोस्तत्परिहाराय असुप्ता मूढेत्युक्तमिति ज्ञातव्यम् । यथोक्तमनुव्याख्याने । चेतनस्य त्वसुप्तस्य कुत्र दृष्टा ह्यकामतेति । उक्तं च सुधायाम् । अमुग्धस्येत्यपि द्रष्टव्यमिति । मायावादिनस्त्वेवमेतां श्रुतिं व्याचक्षते । श्रोत्रियस्य चाकामहतस्येति वाक्यं न प्रकृतमुक्तानां विशेषणोक्तिपरम् । किन्तु पुरुषान्तरविषयम् । तथाहि देवेभ्यः इन्द्रस्य शतगुणस्तावदानन्दः यश्च श्रोत्रियः इन्द्रपदे अकामश्च देवपदाकामनिष्ठश्रोत्रियत्वादिगुणापेक्षयाधिकश्रोत्रियत्वादिगुणवानिति यावत् । कश्चिद्विरक्तः पुमानस्ति तस्यापीन्द्रसमान एवानन्दोऽस्ति । स च देवपदाकामश्रोत्रियत्वादिगुणोपेतविरक्तपुरुषानन्दाच्छतगुणानन्द एव । एवं पूर्वत्र उत्तरत्र च कथितस्य श्रोत्रियस्येति वाक्यस्य योजना द्रष्टव्या । नच विरक्तानां सर्वत्र कामाभावात्कथमियं तारतम्योक्तिरिति । इन्द्रादिपदव्यतिरिक्तोत्तरपदेषु कामसद्भावस्य विवक्षितत्वात् । तथाच यो यो यावदायासान्मुक्तो सावसौ तावदानन्दवानित्यर्थो ह्यत्र प्रतिपिपादयिषित इति । तदेतदयुक्तम् । हतशब्दस्य प्रयोजनाभावेन हातव्यतया श्रुतहानप्रसंगात् । तस्मिन्पदे अकामस्य तदुत्तरपदे सकामस्येति च कल्पनीयत्वेनाश्रुतकल्पना प्रसंगाच्च । दोषान्तरं चाह- **नचेति** । इन्द्रपदाकामस्य तदुत्तरपदकामनावत इति ग्राह्यम् । श्रोत्रियत्वादिगुणोपेतविरक्तपुरुषस्य देवपदाकामस्य श्रोत्रियत्वाद्युपेतविरक्तपुरुषस्य तदानन्दस्येति यावत् । सकाशात् शतगुणानन्दो न च दृश्यते नानुभूयते । येन स आनन्दः इन्द्रानन्दसमानः स्यात् । तत्तत्पदाकामस्योत्तरपदकामनावतो विरक्तपुरुषस्य तत्समानानन्दोऽस्ति ।

स च पूर्वपदाकामपुरुषानन्दाच्छतगुणो नानुभूयत इति यावदित्यत्र तात्पर्यम् । कुतो न दृश्यत इति चेत् । राज्यमकामयमानस्य राजसमानसुखानुभूतेरनुभवबाधितत्वस्य स्पष्टत्वात् । यथोक्तमनुव्याख्याने । कुत्रचित्कामिनः पुंसः कामाभावात्क्वचित्क्वचित् । इन्द्रादिसुखभोगोऽ-स्तीत्यनुभूतिर्हि कुप्यतीति । वैराग्यप्रशंसातो न तत्वं मार्गणीयमिति चेन्न । निरवधिक स्वरूपानन्दोऽयमात्माकामाद्युपद्रवावरणात्तु तथा न भासते । अतो यावद्यावत्कामक्षयस्तावत्तावदानन्दोत्कर्षो दृश्यत इत्यस्यार्थस्य प्रदर्शनार्थमस्य प्रकरणस्यावतारितत्वात् । आनन्दोत्कर्षविशेष एवात्र तात्पर्यं शतगुणत्वे तु न निर्भरः कार्य इति चेन्न । देवपदाकामस्य सकाशादिन्द्रपदाकामस्यानन्दोत्कर्षविशेषादर्शनादिति भावः । किञ्चोत्तर-पदकामे तस्यांगीकृते सति अकामहतत्वरूपं विशेषणमसम्भवि स्यादित्याशयेनाह- **सति चेति** । उत्तरपदकामे सतीति यावत् । किञ्च तत्तत्पदाकामास्तत्तत्समानानन्दवन्तः तदुत्तरपदकामवन्तश्च विरक्ताः पुरुषा एवाप्रामाणिका इत्याह- **नचेति** । तदिच्छवः उत्तरोत्तरपदेच्छवः । तथाच यदा मनुष्यास्तदिच्छवो न भवन्ति तदा अयोग्यपदाकांक्षया अनर्थज्ञाः महान्तो ऋष्यादयस्तदिच्छवो न भवन्तीति किमु वाच्यमिति भावः ।

ननु तदुपर्यपि बादरायणः सम्भवादिति सूत्रे मनुष्याणामेव देवतापदप्राप्तेरुक्तत्वात्कथं मनुष्यास्तदिच्छवो न भवन्तीत्युच्यत इत्यत उक्तं प्राय इति । तत्तत्पदयोग्यमनुष्यव्यावृत्त्यर्थमेव प्राय इत्युक्तम् । नतु तत्पदायोग्यमनुष्याणां मध्य एव केचित्तदिच्छवः सन्ति केचिन्नेति द्योतयितुमिति भावः । ननु मनुष्यगन्धर्वाद्यानन्द निर्देशमुक्तत्वज्ञापक श्रोत्रियत्वादिविशेषणवच्चक्रवर्त्यानन्दनिर्देशे मुक्तत्वज्ञापकविशेषणा भावात्कथमेतन्मुक्तविषयमित्याशंकायामाह- **चक्रवर्तिनस्त्विति** । स एव विष्णुना युक्तो गच्छतीति युवा स्मृत इति प्रमाणेन भगवत्सामीप्यलक्षण-

मुक्तिं प्राप्तौ युवेत्युच्यत इति पूर्वं व्याख्यातत्वेन युवशब्द एव चक्रवर्तिनो मुक्तत्वज्ञापक इति भावः । एवं सैषानन्दस्य मीमांसा भवतीति मुक्तानन्दो मीमांस्यत इति प्रतिज्ञा तमर्थं प्रस्तावादिति युक्त्यापव्याख्याननिराकरणेन चोपपाद्योपसंहरति- **तस्मादिति** । अपव्याख्यानस्यायुक्तत्वात्प्रस्तावादिति युक्तिबलाच्च इयं सैषानन्दस्येत्यादिना क्रियमाणा मीमांसा मुक्तविषया मुक्तानन्दविषयिणीत्यर्थः । इति सिद्धमिति शेषः । पूर्वमकामहतत्वं कामकृतोपद्रवाभावः । सचाप्तकामत्वेनैवोपपद्यते न सर्वथा कामाभावेन । तथाच मुक्तस्यैवाप्तकामत्वात्तस्यैवाकामहतत्वं मुख्यमिति । सहि मुक्तोऽकामहत इत्यादिनोक्तं तदयुक्तम् । आप्तकामत्वाभावेऽपि सर्वथा अकामत्वेनैवाकामहतत्वोपपत्तेः । नचासुप्ता मूढचेतनत्वेन सर्वथा कामाभावो नास्तीति । नह्यकामः क्वचिदृष्ट इत्यादिनोक्तमिति वाच्यम् । मुक्तानां कामराहित्याभावसाधनस्य श्रुतिबाधितत्वात् । यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्यो मृतो भवत्यत्र ब्रह्म समश्नुत इति श्रुतौ मुक्तानां सर्वथा कामाभावोक्तेरित्यत आह - **यदा सर्व इति** । अन्तःकरणस्थानामेव कामानां मोक्षो मोक्षणं परित्याग उक्तो नतु सर्वथापीत्येवार्थः ।

एतदुक्तं भवति । यदा सर्व इति श्रुतिः सर्वथा कामाभावपरेत्यंगीकारे हृदि स्थिता इति कामानां विशेषणं व्यर्थमेव स्यात् । कामानां हृदयगतत्वाव्यभिचारेण व्यावर्त्याभावात् । अतो हृदि स्थिता इति कामानां विशेषणं प्रयुंजाना श्रुतिरन्तःकरणपरिणतानां कामानामेव मुक्तावभावः । अन्तःकरणस्यैवाभावात् । नतु सर्वेषामभावः स्वरूपभूतानां कामानं अवस्थानादित्येवमर्थं गमयतीति । ननु मुक्तानां स्वरूपभूतकामसद्भावे किं प्रमाणमित्यत आह- **यं यमिति** । अन्तं स यदि पितृलोककामो भवतीत्यादिश्रुत्युक्तपितृलोकादिस्थानविशेषम् । यथोक्तं बृहद्भाष्ये ।

स्वप्रान्तमुच्चावचमीयमान इत्यत्र । अन्तःस्थानं स्थलं वासः प्रदेश इति चोच्यत इति । अंतमवसानं निर्णयं वेति पूर्वटीकाकाराः । मुक्तानामपि षोडशकलात्मकलिंगशरीरान्मुक्तानामपि प्राकृतान्तःकरणरहितानामपीति यावत् । कामः प्रतीयते । अतः सस्वरूपभूत एव नत्वन्तःकरण-परिणतिरूप इति । मुक्तानां स्वरूपभूतकामप्रतिपादकं स्पष्टं प्रमाणमाह- **काम इति** । संकल्पो नाम इदं करिष्यइत्येवं क्रियारम्भे हेतुभूत इच्छविशेषः । कामः संकल्पः आनन्द इत्येते मुक्तानां मुक्तोभ्यो भेदतोऽभिन्नतया नैव सन्ति । किन्तु ते सर्वे मुक्तानां स्वरूपभूता एव । यतो निर्दोषज्ञानानंदादिगुणाः स्वरूपभूता इत्यर्थः । मुक्तानां स्वरूपभूतकामसद्भावे सूत्रं च पठति- **संकल्पादेव चेति** । न मुक्तानां भोगादिषु प्रयत्नापेक्ष । स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्तीत्यादिश्रुतेः संकल्पमात्रादेव तद्भोगसिद्धिरिति सूत्रार्थः ।

यदुक्तं परेण जीव एवान्नमयादिशब्दार्थो न ब्रह्म । नच जीवपक्षे ब्रह्मशब्दानुपपत्तिरिति वाच्यम् । जीवब्रह्मणोरभेदाभिप्रायेण तदुपपत्तेरिति । तत्र सूत्रविरोधमाह- **भेदव्यपदेशादिति** । ईशो ब्रह्म तस्यैव मायाशबलितस्य तन्मते ईशव्यवहारभात्त्वादिति ज्ञातव्यम् । तथाप्युत्तरग्रथोपक्षेपायात्रोक्त-मित्यवगन्तव्यम् । ननु भेदः कोऽपि न प्रामाणिकः । नच प्रत्यक्षत एव घटादिभेदः सिद्ध इति वाच्यम् । अन्योन्याश्रयादिदोषदुष्टत्वेन भेददर्शनस्या-सुकरत्वात् । तथाहि भेदः किं द्विष्ठो वा उत एकनिष्ठोऽपरनिरूप्यः । आद्ये भेदो हि प्रतीयमानो घटपटौ भिन्नाविति घटपटविशेषणतया वा घटपटयोर्भेद इति घटपटविशेष्यतया वा प्रत्येतव्यः । भेद इत्येवाप्रतीतेः । द्वितीये तु घटात्पटो भिन्न इति वा घटात्पटस्य भेद इति वा घटप्रतियोगिकतया पटधर्मिकतया भेदग्रहणमेष्टव्यम् । तत्रोभयत्राप्यन्योन्या-श्रयत्वं । विशेष्ययोर्घटपटयोर्ज्ञाने सति हि तद्विशेषणतया भेदो ज्ञातव्यः ।

मुक्तिं प्राप्तौ युवेत्युच्यत इति पूर्वं व्याख्याततत्वेन युवशब्द एव चक्रवर्तिनो मुक्तत्वज्ञापक इति भावः । एवं सैषानन्दस्य मीमांसा भवतीति मुक्तानन्दो मीमांस्यत इति प्रतिज्ञा तमर्थं प्रस्तावादिति युक्त्यापव्याख्याननिराकरणेन चोपपाद्योपसंहरति- **तस्मादिति** । अपव्याख्यानस्यायुक्तत्वात्प्रस्तावादिति युक्तिबलाच्च इयं सैषानन्दस्येत्यादिना क्रियमाणा मीमांसा मुक्तविषया मुक्तानन्दविषयिणीत्यर्थः । इति सिद्धमिति शेषः । पूर्वमकामहतत्वं कामकृतोपद्रवाभावः । सचाप्तकामत्वेनैवोपपद्यते न सर्वथा कामाभावेन । तथाच मुक्तस्यैवाप्तकामत्वात्तस्यैवाकामहतत्वं मुख्यमिति । सहि मुक्तोऽकामहत इत्यादिनोक्तं तदयुक्तम् । आप्तकामत्वाभावेऽपि सर्वथा अकामत्वेनैवाकामहतत्वोपपत्तेः । नचासुप्ता मूढचेतनत्वेन सर्वथा कामाभावो नास्तीति । नह्यकामः क्वचिदृष्ट इत्यादिनोक्तमिति वाच्यम् । मुक्तानां कामराहित्याभावसाधनस्य श्रुतिबाधितत्वात् । यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्यो मृतो भवत्यत्र ब्रह्म समश्नुत इति श्रुतौ मुक्तानां सर्वथा कामाभावोक्तेरित्यत आह - **यदा सर्व इति** । अन्तःकरणस्थानामेव कामानां मोक्षो मोक्षणं परित्याग उक्तो नतु सर्वथापीत्येवार्थः ।

एतदुक्तं भवति । यदा सर्व इति श्रुतिः सर्वथा कामाभावपरेत्यंगीकारे हृदि स्थिता इति कामानां विशेषणं व्यर्थमेव स्यात् । कामानां हृदयगतत्वाव्यभिचारेण व्यावर्त्याभावात् । अतो हृदि स्थिता इति कामानां विशेषणं प्रयुंजाना श्रुतिरन्तःकरणपरिणतानां कामानामेव मुक्तावभावः । अन्तःकरणस्यैवाभावात् । नतु सर्वेषामभावः स्वरूपभूतानां कामानं अवस्थानादित्येवमर्थं गमयतीति । ननु मुक्तानां स्वरूपभूतकामसद्भावे किं प्रमाणमित्यत आह- **यं यमिति** । अन्तं स यदि पितृलोककामो भवतीत्यादिश्रुत्युक्तपितृलोकादिस्थानविशेषम् । यथोक्तं बृहद्भाष्ये ।

स्वप्रान्तमुच्चावचमीयमान इत्यत्र । अन्तःस्थानं स्थलं वासः प्रदेश इति चोच्यत इति । अंतमवसानं निर्णयं वेति पूर्वटीकाकाराः । मुक्तानामपि षोडशकलात्मकलिंगशरीरान्मुक्तानामपि प्राकृतान्तःकरणरहितानामपीति यावत् । कामः प्रतीयते । अतः सस्वरूपभूत एव नत्वन्तःकरण-परिणतिरूप इति । मुक्तानां स्वरूपभूतकामप्रतिपादकं स्पष्टं प्रमाणमाह- **काम इति** । संकल्पो नाम इदं करिष्यइत्येवं क्रियारम्भे हेतुभूत इच्छविशेषः । कामः संकल्पः आनन्द इत्येते मुक्तानां मुक्तोभ्यो भेदतोऽभिन्नतया नैव सन्ति । किन्तु ते सर्वे मुक्तानां स्वरूपभूता एव । यतो निर्दोषज्ञानानंदादिगुणाः स्वरूपभूता इत्यर्थः । मुक्तानां स्वरूपभूतकामसद्भावे सूत्रं च पठति- **संकल्पादेव चेति** । न मुक्तानां भोगादिषु प्रयत्नापेक्ष । स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्तीत्यादिश्रुतेः संकल्पमात्राद्देव तद्भोगसिद्धिरिति सूत्रार्थः ।

यदुक्तं परेण जीव एवान्नमयादिशब्दार्थो न ब्रह्म । नच जीवपक्षे ब्रह्मशब्दानुपपत्तिरिति वाच्यम् । जीवब्रह्मणोरभेदाभिप्रायेण तदुपपत्तेरिति । तत्र सूत्रविरोधमाह- **भेदव्यपदेशादिति** । ईशो ब्रह्म तस्यैव मायाशबलितस्य तन्मते ईशव्यवहारभाक्त्वादिति ज्ञातव्यम् । तथाप्युत्तरग्रथोपक्षेपायात्रोक्त-मित्यवगन्तव्यम् । ननु भेदः कोऽपि न प्रामाणिकः । नच प्रत्यक्षत एव घटादिभेदः सिद्ध इति वाच्यम् । अन्योन्याश्रयादिदोषदुष्टत्वेन भेददर्शनस्या-सुकरत्वात् । तथाहि भेदः किं द्विष्ठो वा उत एकनिष्ठोऽपरनिरूप्यः । आद्ये भेदो हि प्रतीयमानो घटपटौ भिन्नाविति घटपटविशेषणतया वा घटपटयोर्भेद इति घटपटविशेष्यतया वा प्रत्येतव्यः । भेद इत्येवाप्रतीतेः । द्वितीये तु घटात्पटो भिन्न इति वा घटात्पटस्य भेद इति वा घटप्रतियोगिकतया पटधर्मिकतया भेदग्रहणमेष्टव्यम् । तत्रोभयत्राप्यन्योन्या-श्रयत्वं । विशेष्ययोर्घटपटयोर्ज्ञाने सति हि तद्विशेषणतया भेदो ज्ञातव्यः ।

नहि देवदत्तादर्शने दंडस्य तद्विशेषणतया दर्शनं युज्यते । विशेष्यज्ञानं च भेदज्ञानापेक्षम् । नहि भेदाप्रतीतौ घटपटाविति द्वित्वविशिष्टार्थप्रतीतिः सम्भवति । एवं भेदरूपविशेष्यज्ञाने तद्विशेषणतया द्वित्वावच्छिन्नघटपट-ज्ञानम् । द्वित्वप्रतीतेर्भेदज्ञानकार्यत्वात् । द्वित्वावच्छिन्नघटपटज्ञाने च भेदज्ञानं ससम्बन्धिकपदार्थप्रतीतेः सम्बन्धितावच्छेदकप्रकारकसम्बन्धि-ज्ञानकार्यत्वादित्यन्योन्याश्रयत्वम् । तथा धर्मिप्रतियोगिज्ञाने सति भेदज्ञानम् । तस्य तज्जन्यत्वात् । भेदज्ञाने सत्येव धर्मि प्रतियोगिनोर्ज्ञानम् । नहि भेदाग्रहे धर्मिप्रतियोगिभावोऽवगन्तुं शक्यते । तथात्वे घटाद्घटस्य भेद इत्यपि प्रतीतिः स्यात् । नच परस्पराश्रयाणि कार्याणि सम्भवन्ति । किञ्च प्रत्यक्षं भेदमेव गोचरयेदुत वस्त्वपि । नाद्यः । भेद इत्येवाप्रतीतेः । द्वितीयेऽपि किं भेदपूर्वं वस्तुगोचरयेदुत वस्तुपूर्वं भेदम् । युगपदुभयं वा । नाद्यः । भेद इत्येवाप्रतीतेरिति दत्तोत्तरत्वात् । बुद्धेर्विरम्यव्यापारायोगाच्च । अत एव न द्वितीयः । नापि तृतीयः । वस्तुप्रतीतेर्भेदप्रतीतिकारणत्वेन यौगपद्यायोगात् । किञ्च पटो भिन्न इति विशेषणविशेष्यभावप्रतीतेः तस्याश्च भेदप्रतीत्यधीनत्वस्य दंडिनि चैत्रादौ दर्शनेन भेदप्रतीतिपरम्परयानवस्था स्यात् । किञ्च किमयं भेदो भिन्नमेव धर्मिणं परिरभते उताभिन्नं । नाद्यः । अनन्तभेदाभ्युपगमप्रसंगात् । अन्यथात्माश्रयाद्यापातात् । सन्त्वनन्तभेदाः किं न श्छिन्नमिति चेन्न । ते अनन्ता अपि भेदाः किं क्रमेण धर्मिणं परिरम्भते उत युगपत् । नाद्यः । क्रमेण परिरम्भमाणानन्तभेदसम्बन्धाय धर्मिणोऽनादिनित्यतापातात् । न च भेदानन्त्यं प्रामाणिकम् । येन तदंगीकारः स्यात् । न द्वितीयः । भिन्ने भेदस्थितिरिति पक्षक्षतेः । भेदसम्बन्धं विना भिन्नत्ववाचो युक्तेरयुक्तत्वात् । तत्सम्बन्धेनैव भिन्नत्वे त्वेकैकेन भेदेन विशिष्टे एकस्य भेदस्य स्थितौ नियामकाभावेन तेषां कलहाग्नौ कोऽपि भेदो विशिष्येत् । न द्वितीयः । विरोधादेव । किञ्च

भेदः किंस्वरूपं धर्मो वा । नाद्यः । 'सापेक्षत्वात्सावधेश्च तत्त्वेऽद्वैतप्रसंगतः । एकाभावादसंदेहान्न रूपं वस्तुनो भिदा' । किञ्च भेदस्य घटस्वरूपत्वे घटभेदशब्दयोः पर्यायत्वमन्यतरपरिशेषश्च स्यात् । न द्वितीयः । किञ्च पटो भिन्न इत्युक्तरीत्या अनवस्थापातात् । तस्माद्भेदस्वरूपस्य विचारासहत्वेन तद्दर्शनस्यासुकरत्वात् । अविचारितरमणीया विद्याविलसित एवायं भेद इति । तदेतत्प्रतिषेधति- **नचेति** ।

अयं भावः । किं भेदस्य दर्शनमेव निराक्रियते । उत तस्य कारणजन्यत्वम् । अथ निर्दोषकरणजन्यत्वम् । नाद्यः । यदि भेदो दृश्येत तदा अन्योन्याश्रयत्वादिकं स्यादित्यापादने भेददर्शनस्योभयसंमतत्वेन विपर्ययापर्यवसानात् । भेदभ्रमनिरासाय वेदान्तश्रवणाद्ययोगाच्च । न द्वितीयः । तत्किमजन्यतया स्यात् उतातत्कारणजन्यतया वा । नाद्यः । भेदप्रतीतेर्नित्यत्वापत्त्या स्वप्रातिकूल्य चरणापातात् । न द्वितीयः । तदुत्पादकस्यैव तत्कारणत्वेन व्याघातात् । तृतीयेऽपि किं तर्केण सदोषत्वाध्यवसायः अथ स्फुटतरबाधकवशात् । नाद्यः । वेदान्त वाक्यजन्यज्ञानविषयस्यैक्यस्याप्यविश्वसनीयतापातात् । त्वदुक्ततर्काणां वक्ष्यमाणरीत्या ऐक्येऽपि प्रसरात् । कश्चात्र भेदप्रत्यक्षे दोषः । अविद्येति चेत् तर्हि सैव वेदान्तानामपि मूलमिति किं निबन्धनः प्रत्यक्षे प्रद्वेषः । न द्वितीयः । निरवकाशस्य तस्यानुपलम्भात् । तत्त्वमसीत्यादेस्तत्र तत्र सम्यग्व्याख्यातत्वात् । किञ्च कल्प्यमानमपि बाधकं किं भेदमेव गोचरयेदुताभेदम् ।

यद्वा यत्किञ्चित् निरालम्बनबाधायोगात् । नाद्यः । साधकत्वात् । द्वितीयेऽपि तदभावस्तद्विरोधी तदन्यो वा नञर्थो वाच्यः । पक्षत्रयेऽपि दुष्परिहरो भेदः । भेदाभावादिग्राहिणाऽपि बाधकेन प्रतियोगिविलक्षणतयैव स्वविषयस्य ग्राह्यत्वेन भेदस्य दुष्परिहरत्वात् । नापि तृतीयः । अविरोधेन बाधकत्वायोगात् । किंच नायं भेद इति वा नास्त्यत्र भेद इति वा

अन्यदेव भेदात्मना प्रत्यभादिति वा बाधकज्ञानेन भवितव्यम् । नेदं रजतमित्यादिवत् । तदेतत्सर्वथा भेदावगाहीति कथं तद्बाधकमिति । तदेतत्सर्वं भेददर्शनमनुकरं न किन्तु सुकरमेवेत्यनेन सूचितम् । तेन परपक्षे बाधकानां सूचितत्वात् ।

ननु तथापि अन्योन्याश्रयत्वादिदोषपरिहारोपायः क इत्यतो भेददर्शनस्यासुकरत्वाभावे हेतुमाह- **स्वरूपत्वादिति** । धर्मिस्वरूपत्वादित्यर्थः । भेदो धर्मिस्वरूपमेव । तेन धर्मिप्रतीतिरेव भेदप्रतीतिरिति प्रतीतिद्वया-भावान्नान्योन्याश्रयत्वमिति भावः । प्रतियोगिप्रतीत्यपेक्षयान्योन्याश्रयत्वं तु स्वयमेवाचार्यः परिहरिष्यति । यदुक्तं प्रत्यक्षं किं भेदमेव गोचरयेत्यादि । तत्र युगदुभयं गोचरयतीति ब्रूमः । नच वस्तुप्रतीतेर्भेदप्रतीतिकारणत्वेन यौगपद्यायोगः । भेदस्य वस्तुस्वरूपत्वेन वस्तुप्रतीतिरेव भेदप्रतीतिरित्यं-गीकारात् । अन्यथा बिम्बप्रतिबिम्बयोरभेदग्राहि प्रत्यक्षं जीवब्रह्मणोरभेदग्राहि श्रुत्यादिकं च किमभेदमेव गोचरयेत् उत वस्त्वपीत्याद्यापातः । यदप्युक्तं किञ्च पटो भिन्न इत्यादि तदयुक्तम् । भेदस्य धर्मिस्वरूपत्वेनानवस्थाभावात् । नच तथात्वे विशेषणविशेष्यभावानुपपत्तिः । स विशेषाभेदांगीकारेणोपपत्तेः । अन्यथा जीवाभिन्नं ब्रह्म इत्यादावपि विशेषणविशेष्यभावानुपपत्तिः । यच्चोक्तं किमयं भेद इत्यादि तदपि तुच्छम् । भेदस्य धर्मिस्वरूपत्वेन धर्मिणं परिरभ्यैव भेदो जात इत्यंगीकारात् ।

ननु धर्मिणा सहैव धर्मोत्पत्त्यंगीकारे गुणिना सहैव गुणोत्पत्तिरप्यंगीकार्या स्यात् । तथाचोत्पन्नं द्रव्यं क्षणमगुणमक्रियाकं च तिष्ठतीति कल्पना वैयर्थ्यम् । गुणेष्वपि धर्मन्यायस्यैव कल्पनीयत्वादिति चेन्न । नैय्यायिकं प्रत्येवास्य आपाद्यत्वेनास्मान्प्रत्यसम्भवात् । गुणवदुपादानमेव गुणवदुपादेयात्मना परिणमत इत्यंगीकारात् । ननु भेदस्य वस्तुस्वरूपत्वमेव कुत इति चेन्न । यो हि भेदमेव नांगीकुर्यात्किं तस्यार्द्रकवणिजोव हि त्र

चिन्तया । भेदस्वरूपे तु प्रमाणं प्रत्यक्षमेव । यस्तु भेदमंगीकृत्यापि तस्य वस्तुस्वरूपत्वं नाभ्युपैति तं प्रत्याह- **सर्वव्यावृत्तमिति** । हिशब्देनानुभवस्य सर्वथा अविगानमाह- **सर्वव्यावृत्तमिति सावधारणम्** । सर्वस्य घटादेः स्वरूपं यदा अनुभूयते तदेदं न सर्वात्मकं किन्तु स्वयमेवेति सर्वव्यावृत्तमेवानुभूयते । नतु सर्वात्मकत्वेनेति सर्वानुभवसिद्धम् । व्यावृत्तिरेव च भेदः । तेन सर्वभेदो घटादिस्वरूपमिति ज्ञायते ।

अयमत्र प्रयोगः । विमतो भेदो घटस्वरूपम् । घटप्रतीतौ नियमेन प्रतीयमानत्वादिति । घटपटाविति समूहालम्बनज्ञानविषयभूते पटे व्यभिचारवारणाय नियमग्रहणम् । ननु कथमत्र व्याप्तिः । नच यज्ज्ञाने यन्नियमेनोपलभ्यते तत्तत्स्वरूपमिति वाच्यम् । दण्डिज्ञानादाववश्यं भासमानदण्डादौ दंड्यादिस्वरूपत्वाभावेन व्यभिचारादिति चेन्न । यत्र घटप्रतीतावेव नियमेन प्रतीयमानत्वं तत्र घटस्वरूपत्वम् । यथा घटस्वरूपमिति विशेषव्याप्तेराश्रयात् ।

यद्वा घटभेदावन्योन्याभिन्नौ नियमेनान्यतरप्रतीतावन्यतरस्य प्रतीयमानत्वात् । ययोर्मध्ये अन्यतरस्य स्फुरणे सत्यन्यतरस्फुरण नियमस्तावभिन्नौ । यथासम्प्रतिपन्नौ रूपघटाविति प्रयोगः । दण्डिप्रतीतौ दंडस्य स्फुरणनियमेऽपि दण्डप्रतीतौ दण्डिनः स्फुरणनियमाभावान्न व्यभिचारः । ननु भेदो न धर्मिस्वरूपं तत्प्रतीतावपि कदाचिदप्रतीयमानत्वात् । यो यत्प्रतीतावपि न प्रतीयते नासौ तत्स्वरूपम् । यथा घटप्रतीतावप्रतीयमानः पटो न घटस्वरूपमिति सत्प्रतिपक्ष इति चेत्तत्राह- **सर्वैरिति** । तथाच स्वरूपासिद्धो हेतुरिति भावः । स्यादेवं यदि सर्वस्य स्वरूपं सर्वव्यावृत्तमेवानुभूयत इति स्यात्तदेव कुत इत्यतस्तदनंगीकारे बाधकमाह- **अन्यथेति**। अन्यो वेत्यस्य घटो वेत्यर्थः । यदि न सर्वस्य स्वरूपं सर्वव्यावृत्तमेवानुभूयते तदा सर्वपदार्थान्तर्गतात्मस्वरूपमपि प्रतीयमानं

घटादिसर्वव्यावृत्तत्वेन न प्रतीयेत । तथाचाहमिति दृष्टः किमहं वा घटो वेति संशयस्स्यात् । अपि शब्देन इदं सर्वं भवति नवेति संशयं समुच्चिनोति । संशयोऽपीति वाऽपिशब्दसम्बन्धः । तेन घट एवेत्यादि-विपर्ययः स्यादित्यस्य समुच्चयः । समानधर्मदर्शनादेः संशयकारणस्य सत्त्वात् । प्रतिबन्धकीभूतव्यावृत्तिज्ञानस्याभावात् । तस्मादुक्तसंशयकारणस्य सत्त्वेऽपि व्यावृत्तिज्ञानरूपप्रतिबन्धकस्य सत्त्वान्न तथा संशयादिकमिति वक्तव्यम् । तथाच सिद्धं वस्तु प्रतीतावेव व्यावृत्तिरस्तीति ।

ननु तथापि न भेदो वस्तुप्रतीतावेव प्रतीयते । नचैवमुक्तसंशयाद्यापत्तिः । पूर्वं वस्तुप्रतीतिः पश्चाद्भेदप्रतीतिरित्यंगीकारात् । युक्तं च तथा । निर्विकल्पके हि प्रत्यये वस्तुमात्रमवभासते । भेदस्तु वस्तुदर्शनोत्तरकालं प्रतियोगिस्मरणे सत्यवभासते । यथा गवि गवयसादृश्यं भूतले घटाभावश्च । तथाच पाश्चात्यं भेददर्शनं प्रसक्तमपि संशयादिकं निरोत्स्यति । ततश्च भवदीयहेतोरेवासिद्धिर्नास्मदीयस्येत्यत आह- **नचेति** । पश्चात् वस्तुप्रतीतेरिति शेषः । स्यादेतदेवं यदि पूर्वं वस्तुप्रतीतिः पश्चाद्भेदप्रतीतिरित्यत्र प्रमाणं स्यान्न चैवमस्ति । परेण निर्विकल्पकांगीकाराभिप्रायेण ह्येतदुक्तम् । नचैतद्युक्तम् । तस्याप्रामाणिकत्वादिति भावः । तथाहि । नतावत्प्रत्यक्षं तस्यातीन्द्रियत्वाभ्युपगमात् । नापि हानादिव्यवहाररूपकार्येण तदनुमानं हानादिव्यवहारस्य सविकल्पकसाध्यत्वात् । नापि प्राथमिकं गौरिति प्रत्यक्षं जन्यविशेषणज्ञानजन्यं जन्यविशिष्टज्ञानत्वादनुमितिवदित्यनुमानं मानं दृष्टान्तस्य साध्यविकलत्वात् । नचानुमितौ साध्यप्रसिद्धेर्हेतुत्वेन तत्र विशेषणज्ञानजन्यत्वं सिद्धमेवेति वाच्यं व्याप्त्यादिज्ञानसत्त्वे साध्यप्रसिद्धि-विलम्बेनानुमितिविलम्बाभावेन तत्र तस्या अहेतुत्वात् । नच साध्यप्रसिध्यभावे व्याप्तिग्रह एव न सम्भवतीति वाच्यम् । तर्हि तस्याः साध्यप्रसिद्धेरनुमितिजनकीभूतव्याप्तिग्रहजनकत्वेनान्यथासिद्धतया

अनुमितावजनकत्वापातात् । नापि ज्ञानत्वं निष्प्रकारकत्वसमानाधिकरणं सकलज्ञानवृत्तित्वात् व्यतिरेकेणेच्छात्ववत् । अप्रमात्वे व्यभिचारवारणाय सकलपदमित्यनुमानम् । अप्रयोजकत्वात् इच्छात्वव्यवहारत्वानुमिति-त्वादिकं पक्षीकृत्यापि प्रयोगसम्भवेन निष्प्रकारकेच्छादिसिद्धिप्रसंगाच्च । नापि चक्षुश्चाक्षुषसविकल्पकातिरिक्तज्ञानकरणं ज्ञानकरणत्वात् घ्राणवदित्य-नुमानम् । अप्रयोजकत्वात् । अनेन निर्विकल्पकसिद्धौ तदतिरिक्तेति विशेषणदानेन सविकल्पक निर्विकल्पकातिरिक्तज्ञानसिद्धिः स्यात् । एवं तदतिरिक्तज्ञानसिद्धिरपि स्यादित्यतिप्रसंगाच्च । नापि जागराद्यसंकल्पक-प्रत्यक्षं जन्यविशेषणज्ञानजन्यं जन्यविशिष्टज्ञानत्वात् दण्डीति प्रत्यक्षवदित्यनुमानं मानम् । दृष्टान्तस्य साध्यवैकल्यात् । दण्डपुरुषयोर्युगपदिन्द्रियसन्निकर्षेऽसंसर्गाग्रहे च सति विनैव पूर्वदण्डज्ञानं दण्डीति ज्ञानोत्पत्तिसम्भवेन विशिष्टज्ञाने विशेषणज्ञानस्य कारणत्वासम्मतेः । तस्मान्नानुमानं मानम् । आगमस्तु तत्र नेष्टो दृष्टो वा । तदेतदाह- **किञ्चिदिति** । किञ्च यदि भेदो वस्तु प्रतीतौ न प्रतीयेत तदास्यामुना भेद इति सविकल्पकज्ञानमपि न जायेत । तथाच तथाव्यवहारोऽपि न स्यात् । अस्यामुनेति धर्मिप्रतियोगितया वस्तुद्वयमुद्दिश्य भेदो ज्ञायते । नचागृहीतभेदं तथोद्देष्टुं शक्यते । एकस्मिन्नपि तत्प्रसंगात् । भेदसत्तामात्रेण तदुपपत्तिरिति चेन्न । दूरस्थवनस्पत्योरभेद-प्रत्ययाभावप्रसंगात् । दोषात्तत्र तथेति चेन्न । भेदस्य स्वरूपसत्तयैवोपयोगे दोषस्योत्करत्वात् । अतो धर्मिप्रतीतौ भेदो न प्रतीयते चेन्न प्रतीयेतैव कदापीति संशयादिप्रसंगो दुर्वार एव । एतेन निर्विकल्पकायां संविदि भेदस्य भेदिनोश्च युगपदंगुलित्रयवदवभासान्नसंशयाद्यवकाश इत्यपि परास्तम् । निर्विकल्पकस्यैवाप्रामाणिकत्वात् । भेदस्य तदीयतानवगतौ तद्विषयक-संशयादिप्रतिबन्धानुपपत्तेश्च । अन्यथा सर्वत्र संशयाद्यनुदयप्रसंगादिति । यदुक्तं सर्वव्यावृत्तं सर्वस्य स्वरूपं नानुभूयते चेदृष्टः किमहमन्यो वेत्यादिसंशयः

स्यादिति तदयुक्तम् । इष्टापत्तेरिति चेन्न । अप्रामाणिकांगीकारस्य अनुचितत्वादित्याह- **नहीति** । तस्येति स्वस्येत्यर्थः । विभक्तिव्यत्ययेन वा वस्त्वन्तरादित्यस्य विशेषणं तस्मादिति । तथैव क्वचित्पाठः । वस्त्वन्तरात् दृष्टवस्त्वन्तरात् । घटादिरूपवस्तुदर्शने तद्द्रष्टृत्वेन स्वस्य प्रत्यक्षत एवसिद्धत्वेन तस्माद्घटादेः स्वस्य भेदनिश्चय एव भवतीति तादृशसंशयासम्भवः प्रसिद्ध इत्यर्थः । यदुक्तं सर्वव्यावृत्तं सर्वस्य स्वरूपं सर्वैरनुभूयत इति तन्न । प्रतियोगिज्ञानस्य व्यावृत्तिज्ञाने कारणत्वेन सर्वव्यावृत्त्यनुभवे सर्वेषां सर्वज्ञानप्रसंगात् । नहि सर्वेषां सर्वज्ञानमस्ती-त्याशंक्य निषेधति- **नचेति** । कुतो न दोष इत्यत आह- **सामान्यत इति** । सामान्यतः सर्वव्यावृत्त्यनुभवे हि प्रतियोगिभूतस्य सर्वस्यापि सामान्यत एव ज्ञानमपेक्षितं न विशेषतः । सामान्यतः सर्वज्ञानं च प्राणभृन्मात्रसिद्धम् । अन्यथा सर्वोपसंहारवती व्याप्तिर्न सिध्येत् । सर्वशब्दप्रयोगश्च न स्यात् । सर्वज्ञानं नास्तीति निषेधोऽपि न स्यात् । सर्वं खल्विदं ब्रह्मेत्यादिवाक्यार्थधीश्च न स्यादिति भावः ।

ननु तथापि विशेषतः सर्वज्ञतापेक्षितेति चेन्न । पदार्थस्वरूपानुभावेऽपि प्रतियोगिभूतस्य सर्वपदार्थस्य विशेषतो ज्ञानाभावादेव विशेषाकारेण सर्वव्यावृत्त्यनुभवाभावेन विशेषतः सर्वज्ञताया अनपेक्षितत्वात् । नन्वेवं व्यावृत्त्यपरपर्यायस्य भेदस्य विशेषाकारेणाज्ञाने तदात्मकत्वात्पदार्थस्वरूप-मपि विशेषाकारेण न ज्ञायेतेत्यत आह- **यावदिति** । सर्वतो भेदः सर्वव्यावृत्तिर्यावत्पर्यंतं विशेषतो **विशेषाकारेण** न ज्ञायते तावत्पर्यंतं पदार्थस्वरूपमपि विशेषतो न ज्ञातमेवेत्यंगीक्रियत इत्यर्थः । तुशब्दात् यदाच भेदो विशेषतो ज्ञायते तदा तदभिन्नं पदार्थस्वरूपमपि विशेषतो ज्ञातमेवेत्यपि ग्राह्यम् । तथाचेष्टापत्तिरिति भावः ।

नन्वस्तु सर्वपदार्थज्ञानं सर्वेषां तथापि सामान्यतो ज्ञातात्समस्ताद्वस्तुनः पुरोवर्तिपदार्थस्य व्यावृत्तिज्ञानं सर्वेषामस्तीति कुतोंगीकरणीयमिति चेन्न । तदनंगीकारे सामान्यतो ज्ञातात्सर्वस्माद्वस्तुनः पुरोवर्तिपदार्थस्याव्यावृत्तिरभेदः केनचिच्छंक्येतेदं सर्वं भवति नवेति । समानधर्मदर्शनादिकारणसद्भावात् । व्यावृत्तिज्ञानरूपप्रतिबन्धकाभावाच्च । नच तथाऽस्तीत्याह- **नहीति** । वस्तुन इति पञ्चम्यन्तं षष्ठ्यन्तं च । यदुक्तं भेदो वस्तुस्वरूपं वस्तुप्रतीतावेव प्रतीयमानत्वादिति तदयुक्तम् । तथासति सन्देहाभावप्रसंगात् । धर्मिज्ञानस्य संशयादिहेतुत्वात् तज्ज्ञानेनैव तदभिन्नस्य भेदस्यापि ग्रहणात् भेदज्ञानस्य संशयादिविरोधित्वादिति हेतोरसिद्धिरिति चेत्तत्राह- **यदात्विति** । कुतश्चिदेवेति सम्बन्धः । कुतश्चिदेव व्यावृत्तं ज्ञायते नतु सर्वस्मात् । तथाच संशयोपपत्तिरिति भावः ।

अयं भावः । एक एव खल्वेकस्य भेदः । अनेकत्वे प्रमाणाभावात् । न च निरूपकभेदेन निरूप्यभेदस्याप्यनेकत्वमेवेति वाच्यम् । अनेकविषयनिरूप्यस्यापीश्वरज्ञानस्यैकत्वदर्शनात् । स च भेदो वस्तुप्रतीतौ प्रतीयत एव । तत्र च भेदे घटप्रतियोगिकत्वं पटप्रतियोगिकत्वमित्यादयोऽनन्ताः धर्माः सन्ति । तत्र भेदनिष्ठो यत्प्रतियोगिकत्वादिरूपो धर्मः सादृश्यादिवशान्न प्रतीयते तत्र संशयादिकमुत्पद्यते इति न तत्रापि भेदस्याप्रतीतिः । अतः संशयादेरन्यथोपपत्तेर्न तदर्थं धर्मिप्रतीतौ भेदाप्रतीतिरंगीकार्या यया भेदस्यास्वरूपत्वं भवेदिति ।

ननु संशयादिस्थलेऽपि पदार्थस्वरूपं कुतश्चित्व्यावृत्तमेव प्रतीयत इति कुतोंऽगीकार्यमिति चेन्न । तदनंगीकारे इदं सर्वं भवति नवेत्येव संशयः स्यान्नतु स्थाणुर्वापुरुषो वेति । समानधर्मदर्शनादिरूपसामग्रीसद्भावात् । व्यावृत्तिज्ञानरूपप्रतिबन्धकाभावाच्च । नचैवं संशयोऽस्तीत्युक्तमित्याशयेनाह- **नहीति** । विवेकिनस्तादृशसंशयाभावेऽपि अविवेकिनः स्यादेवेत्यत उक्तं

कस्यचित् इति । अविवेकिनोऽपीत्यर्थः । एवं हेतोः स्वरूपासिद्धिं परिहृत्य साध्यं निगमयति- **अत इति** । अतो व्यावृत्तिर्भेदो वस्तुस्वरूपमेवेति सम्बन्धः । ननु तथापि भेदस्य वस्तुस्वरूपत्वं न युज्यते । अस्य भेद इति विशेष्यत्वेन प्रतीयमानत्वात् । यो यद्विशेष्यतया प्रतीयमानो नासौ तत्स्वरूपं यथा कम्बलो ब्राह्मणस्येत्यत आह- **अस्य भेद इतीति** । विशेष्यत्वं विशेष्यत्वप्रतीतिर्विशेष्यत्वव्यपदेशो वेत्यर्थः । इतिवदुपपद्यत इति शेषः । यथास्य स्वरूपमिति पदार्थविशेष्यत्वेन प्रतीयमानमपि स्वरूपं न ततोऽन्यत् तथा भेदोऽपीत्यनैकांतिकत्वमनेनोक्तं भवतीति ज्ञातव्यम् । यदि तत्र भेदातिरिक्तं किमपि विशेष्यप्रतीतिनिमित्तमुच्यते तर्ह्यत्रापि विशेषोऽस्तीत्यन्यथासिद्धिः । यदि वा तत्र व्यपदेशमात्रं न प्रतीतिरित्यभिधीयते तदाऽत्रापि तत्सममिति स्वरूपासिद्धिः । अनयैव दिशा पटो भिन्न इति विशेषणतया प्रतीतिरपि न भेदस्य वस्तुस्वरूपत्वाभावसाधिका विशेषेणान्यथासिद्धत्वात् । अत एव सर्वव्यावृत्तमित्यादिप्रयोगोऽपि युज्यत इति द्रष्टव्यम् ।

ननु भेदस्य धर्मिस्वरूपत्वेन धर्मिज्ञानापेक्षयाऽन्योन्याश्रयाभावेऽपि प्रतियोगिज्ञानापेक्षया अन्योन्याश्रयस्तु स्यादेव । तथाहि प्रतियोगिभूतसर्वस्य ज्ञानेऽहि पुरोवर्तिवस्तुनिष्ठव्यावृत्तिज्ञानं प्रतियोगिज्ञानस्य तत्र कारणत्वात् । सर्वस्य प्रतियोगित्वज्ञानं च भेदज्ञाने सति धर्मिणः सकाशाद्भेदेन प्रतीतस्यैव सर्वस्य प्रतियोगित्वात् । अप्रतीतभेदस्यैव प्रतियोगित्वे तु स्वस्यापि तत्प्रसंगात् । नच धर्मिस्वरूपत्वमिव प्रतियोगिस्वरूपत्वमपि भेदस्यांगीक्रियते । तथासत्यद्वैतप्रसंगादित्यत आह- **यथेति** । अन्यस्मात् प्रतियोगिभूतात्सर्वस्मादित्यर्थः । अन्यत्प्रतियोगिभूतं सर्वम् । अपि शब्दो दृष्टान्तेन सह समुच्चयार्थः । वस्तुना सहैव स्यादेवमन्योन्याश्रयः यद्यादौ प्रतियोगिभूतसर्वपदार्थज्ञानं अनन्तरं भेदज्ञानमिति स्यात् । नचैवं किंनाम

यदावस्त्वन्यस्माद्व्यावृत्तमित्यनुभूयते तदा प्रतियोगिभूतमन्यदपि वस्तुना सहैवानुभूयते । एवं च प्रतियोगिना सहैव व्यावृत्तिप्रतीतेः । प्रतीति द्वयाभावान्नान्योन्याश्रय इत्यर्थः ।

ननु घटादिप्रतीतिश्चक्षुरादिजन्या प्रतियोगिभूतसर्वपदार्थज्ञानं च साक्षिरूपमिति वक्ष्यति । तथा च कथं साक्षिसिद्धेन सर्वपदार्थेन सह घटादिप्रतीतिरित्यत उक्तम्- **यथेति** । अनुभूयते साक्षिणेति शेषः । वस्तुना सहैव साक्षिसिद्धेन कालेन सहैव । वस्त्वनुभूयत इति यावत् । कालस्य साक्षिसिद्धत्वं त्वन्यत्रोपपादितमनुसन्धेयम् । यथोक्तम् । तदेतदिति सर्वं च दृश्यं वा स्मृतिगोचरम् । साक्षिसिद्धेन कालेन खचितं ह्येव वर्तते इति । नन्वेवं सामान्येन भेदप्रतीतावन्योन्याश्रयाभावेऽपि विशेषतो भेदप्रतीतावन्योन्याश्रयः स्यादेव । साहि घटात्पटो भिन्न इत्युत्पद्यते । तथाच पटाद्घटस्य भेदप्रतीतौ घटात्पटस्य भेदप्रतीतिरिति । धर्मिणः सकाशाद्भेदेन प्रतीतस्यैव प्रतियोगित्वात् । अप्रतीतभेदस्यैव प्रतियोगित्वे तु स्वस्यापि तत्प्रसंग इति चेत् । उच्यते । प्रत्येतव्यभेदाधिकरणभूत-पटप्रतियोगिकभेदवत्त्वेन ज्ञातस्य न प्रतियोगित्वं येनोक्तरीत्यान्योन्याश्रयः स्यात् । किन्तु यथागोर्गवयसादृश्यज्ञानाभावेऽपि वस्तुतो गवयसादृश्यवतो गोत्वादिना प्रतीतिमात्रेण गवयविसदृशत्वेनाप्रतीतिमात्रेण वा गवयगतसादृश्यप्रतियोगित्वं एवमिहापि वस्तुतः प्रत्येतव्यभेदाधिकरण प्रतियोगिकभेदवतो घटादेर्धटत्वादिना प्रतीतिमात्रेण प्रतियोगित्वोपपत्तेः ।

ननु घटत्वादिना प्रतीतिमात्रेण प्रतियोगित्वे पटाभिन्नतया ज्ञातस्यापि घटादेः पटधर्मिकभेदप्रतियोगित्वं स्यात् इति चेन्न । तदा घटत्वादिना ज्ञानाभावात् । कैश्चित्पटैक्येन प्रतीतस्य घटादेः घटत्वादिना ज्ञानमात्रेण प्रतियोगित्वमुपपद्यत इति वाच्यमानत्वाददोषः । अन्यथा जीवस्य ब्रह्मणाऽभेदे ज्ञाते ब्रह्मण जीवाभेदधीरिति तवाप्यन्योन्याश्रयः स्यात् ।

विस्तरस्तु सुधायां द्रष्टव्यः । ननु तथापि न रूपं वस्तुनो भिदा भेदस्य धर्मिप्रतियोगिसापेक्षत्वात् । भेदो हि प्रतीयमानो घटात्पटो भिन्न इति वा घटात्पटस्य भेद इति वा धर्मिप्रतियोगिप्रतीत्यपेक्षयैव प्रतीयते न जातुचिद्भेद इत्येव । धर्मिस्वरूपं तु परप्रतीतिनिरपेक्षमेव प्रतीयते । नह्यस्मादयं पट इति वाऽस्मादस्य पट इति वा कस्यचित्प्रतीतिरस्ति किंनाम पट इत्येव । तथाच सापेक्षत्वनिरपेक्षत्वलक्षणविरुद्धधर्माधिकरण-योर्भेदधर्मिस्वरूपयोः कथमैक्यं स्यादित्यत आह- **नहीति** । ब्रह्म किमस्ति नवेति केनचित्पृष्टे न तावन्नास्तीति वक्तुं युक्तं शून्यवादापातात् । ततोऽस्ति ब्रह्मेत्येवोत्तरं वाच्यम् । तथाच ब्रह्मविद्यमानताऽस्तीति वर्तमानकालापेक्षया अनुभूयते ब्रह्म तु नेति सापेक्षत्वनिरपेक्षत्वलक्षण-विरुद्धधर्माधिकरणत्वेऽपि विद्यमानता ब्रह्मरूपवस्तुनः सकाशादन्या नहि भवति । अन्यत्वे सत्त्वे अद्वैतभंगप्रसंगात् । मिथ्यात्वे अस्ति ब्रह्मेति चेद्वेदेत्यादिश्रुतीनामतत्वावेदकत्वप्रसंगात् । नच विद्यमानता न सापेक्षा इति वाच्यम् । विद्यमानता हि वर्तमानकालसम्बन्धः । सम्बन्धस्य च सम्बन्धिसापेक्षत्वमनुभवसिद्धम् । तदिदमुक्तं अनुभूयत इति । अथास्ति ब्रह्मेत्यत्र तत्प्रतीत्योरेव सापेक्षत्वनिरपेक्षत्वलक्षणविरुद्धधर्माधिकरणत्वेन भेदोऽस्तु न तद्विषयस्य । एकस्यैवाग्नेर्व्याप्त्यादिज्ञानसापेक्षतन्निरपेक्षानुमिति प्रत्यक्षविषयत्वदर्शनेन विरोधाभावादिति चेत् । समं प्रकृतेऽपि । किञ्च भेदधर्मिस्वरूपयोरभेदे सत्यपि सापेक्षत्वादिकं युज्यत एव । सविशेष-भेदांगीकारात् । यथोक्तं टीकाकारैः । अधिकश्चात्र सविशेषाभेदांगीकारेण परिहार इति । स्यादेवं ब्रह्म किमस्ति नवेति प्रश्नेऽस्तीत्येवोत्तरं स्यात् । नचैवं किं नाम सदित्येव । तथाच नोक्तदोष इत्यत आह- **सदित्यपीति** । सदित्यपि सदित्यत्रापि । सच्छब्दस्य शत्रन्तत्वाच्छतुश्च लडर्थत्वाल्लटश्च वर्तमानकालार्थत्वात्सत्त्वं वर्तमानकालसम्बन्धयेवानुभूयते । न केवलं न च

तत्सत्त्वं ब्रह्मणोऽन्यत् । सत्यत्वमिथ्यात्वाभ्यां प्रागुक्तदोषप्रसंगादित्यर्थः । सच्छब्दस्य शत्रन्तत्वात् तदर्थभूतं सत्त्वं कालसम्बन्ध्येवानुभूयत इत्येतन्निदर्शनेन समर्थयत- **तिष्ठन्नितिवदिति** ।

तिष्ठन्नित्यस्य शत्रन्तत्वात्तदर्थभूतगतिनिवृत्तिर्यथा वर्तमानकालसम्बन्धि-न्येवानुभूयते तथेत्यर्थः । नन्वस्तु विद्यमानता सत्त्वं वा कालापेक्षया प्रतीयमानमपि ब्रह्मणो नान्यत् । किं तत इत्यत आह - **एवमिति** । यथा कालापेक्षया प्रतीयमानमपि सत्त्वं न तन्निरपेक्षप्रतीतिकब्रह्मणोऽन्यत् एवमन्यस्मात् व्यावृत्तमित्यन्येन प्रतियोगिना सह प्रतीयमानमपि भेदस्वरूपं न प्रतियोगिज्ञाननिरपेक्षधर्मिस्वरूपादन्यत् । तथाचानैकान्ति-कत्वान्न सापेक्षत्वनिरपेक्षत्वलक्षणविरुद्धधर्माधिकरणत्वस्य हेतोर्न भिदायाः वस्तुस्वरूपत्वाभावसाधकत्वमिति भावः ।

ननु तथापि न भेदस्य धर्मिस्वरूपत्वं युक्तं । तथाहि । एक एव हि भेदो अनेकाश्रितः । न च तत्र प्रमाणाभावः । भिन्नाविमौ भिन्ना इमे इत्यादिप्रतीतेः । इमौ संयुक्तावितिवदत्रैकस्यैव भेदस्योभयाश्रितत्वप्रतिभासात् । स्पष्टं चानयोर्भेदः । अमीषां भेद इति प्रतीतौ एकस्यैव भेदस्यानेकाश्रितत्वमुपलभ्यते अनयोः संयोग इतिवत् । तथाच भेदस्य धर्मिस्वरूपत्वे घटपटयोरपि भेदं प्रति धर्मित्वात् घटाभिन्नभेदाभिन्नत्वेन पटस्यापि घटाभिन्नत्वप्राप्त्या घटपटयोरप्येकस्वरूपत्वं स्यादित्यत आह- **अस्मादिति** । अंगीकारात् नैकस्वरूपता उक्तरीत्या घटपटयोरिति शेषः । नैक एव भेद अनेकाश्रितः । येनोक्तदोषः स्यात् । इमौ भिन्नावित्यत्र स्तम्भात्कुम्भस्य भेदः कुम्भात्स्तम्भस्य भेद इति भेदद्वयमेव प्रतीयते शुक्लाविमावित्यादिवत् । अनयोर्भेद इत्यत्रापि घटपटधर्मिकं भेदद्वयमेव प्रतीयते घटपटयोरूपमितिवत् । इमौ संयुक्तावनयोः संयोग इत्यत्राप्येवमेव । व्यवहारे एकवचनं च विप्राणां भोजनमितिवत् समुदायापेक्षयोपपन्नम् । किं

च भेदो ह्यन्योन्याभावः । स चानेकाश्रित इति न कस्यापि सम्मतम् । ननु तथापि पृथक्त्वरूपो भेदो भवत्येवानेकाश्रित इति चेन्न । घटात्पटः पृथगिति प्रतीतस्यैव पृथक्त्वस्य परेणापि द्विष्ठत्वानंगीकारात् । न च घटपटौ पृथगिति प्रतीतस्यानेक पृथक्त्वस्य द्विष्ठत्वमंगीक्रियत इति वाच्यम् । तस्या अपि प्रतीतेरन्योन्याभावविषयकत्वेनैवोपपत्तौ तदतिरिक्तपृथक्त्वांगीकारे मानाभावात् । अन्यथा रूपरसौ पृथगित्यादौ का गतिः । नहि रूपादौ पृथक्त्वरूपो गुणोंगीक्रियते । तस्मान्नानेकाश्रितो भेदः किंत्वेकैकाश्रित एव । नचानेकसम्बन्धित्वप्रतिभासानुपपत्तिः । अस्मात् घटात् व्यावृत्तिरन्यस्य पटस्य स्वरूपं अन्यस्मात् पटात् व्यावृत्तिरस्य घटस्य स्वरूपमित्यंगीकारेण अनेकसम्बन्धित्वप्रतिभासोपपत्तेः । न चात्र प्रमाणाभावः । घटनिष्ठो भेदो न पटधर्मः पटप्रतियोगिकतया प्रतीयमानत्वात् । यो यत् प्रतियोगिकतया प्रतीयते नासौ तद्धर्मः यथास्थविरप्रतियोगिकमपरत्वं न स्थविरधर्म इत्यनुमानस्य सत्त्वात् । एतत्प्रमाणज्ञापनायैव व्यावृत्तिरेकैकस्वरूपमिति वक्तव्ये अस्मादिति विविच्योक्तम् । एतेन प्रतियोगिनिरूप्यभेदस्य वस्तुस्वरूपत्वे प्रतियोगिनोऽपि वस्तुस्वरूपत्वं स्यात् । निरूपितस्य यद्भवति तन्निरूपकस्यापि भवतीति न्यायादिति निरस्तम् । प्रतियोगिन् उपलक्षणमात्रत्वेन धर्मिण्यन्तर्भावाभावात् । अन्यथाऽज्ञाननिवृत्तेः पुरुषार्थत्वेनाज्ञानस्यापि तदापत्तेः । क्वेदमुपलब्धं भगवता निरूपितस्य यद्भवति तन्निरूपकस्यापि भवतीति । लम्बकर्णमानय इत्यादिवदिति चेत् चित्रगुमानय इत्यादौ किं तदभावोऽपि न दृष्टः । नहि व्याप्तिग्रहणेऽनुसृतो लौकिकदृष्टान्तो व्यभिचारे नानुसरणीय इत्यस्ति ।

ननु तथापि न भेदस्य धर्मिस्वरूपत्वं युक्तम् । तथासति घटभेदशब्दयोः पर्यायत्वापत्त्या घटो भिन्न इत्यादिसहप्रयोगाभावप्रसंगात् इत्यत आह- **ज्ञानेति** । यथा ज्ञानानन्दैक्यानां ब्रह्मस्वरूपत्वेऽपि ब्रह्मज्ञानानन्दाद्वितीयशब्दानां

अपर्यायत्वेन विज्ञानमानन्दं ब्रह्म एकमेवाद्वितीयमित्यादिव्यवहारविशेष-स्तद्वद्भेदस्य घटस्वरूपत्वेऽपि घटभेदशब्दयोरपर्यायत्वे न व्यवहारविशेषो भवति उपपद्यत इत्यर्थः ।

वस्तुतस्तु अस्मन्मते सविशेषाभेदांगीकारेण घटभेदशब्दयोरपर्यायत्वं युज्यते । नचैवं त्वयांगीकर्तुं शक्यते । विशेषानंगीकारात् । ननु विज्ञानानन्द-शब्दयोर्वाच्यार्थभेदोऽस्त्येव ज्ञानत्वादिविशिष्टस्य वाच्यत्वात् तस्य च भिन्नत्वात् । अतो न पर्यायत्वम् । नचैवं विज्ञानादिपदानां भिन्नार्थ-प्रतिपादकत्वेन निर्भेदार्थनिष्ठत्वरूपाखण्डार्थत्वहानिविशिष्टस्य मिथ्यात्वा-द्वेदान्तानामतत्वावेदकत्वं च स्यात् इति वाच्यम् । लक्षणया ब्रह्मस्वरूपपरत्वांगीकारेण विज्ञानानन्दादयोस्तात्पर्यार्थैक्यसद्भावात्किं विशेषांगीकारेणेति चेन्न । अत्र प्रष्टव्यं किं विज्ञानशब्देन लक्षितं ब्रह्मैवानन्दशब्देन लक्ष्यते तदतिरिक्तं वा । नाद्यः । आनन्दशब्दवैयर्थ्यात् । न द्वितीयः । आनन्दशब्दस्याखण्डार्थत्वहानेः । नहि धर्मधर्मिभेदासह-मखण्डत्वं धर्मिभेदसहम् । ननु विज्ञानशब्देन लक्षितस्यैवानन्दशब्देन लक्षितत्वेऽपि अज्ञानानानन्दादिव्यावृत्तिरूप भिन्नभिन्नप्रयोजनसद्भावा-न्नपदान्तरवैयर्थ्यमिति चेन्न । विज्ञानानन्दादिशब्देन लक्ष्यार्थे ब्रह्मणि ज्ञानत्वादिधर्मानवबोधनेऽज्ञानादिव्यावृत्तिबोधनस्यापि कर्तुमशक्यत्वात् । तस्मादेकधैवानुद्रष्टव्यम् इत्यादि श्रुतिविरोधपरिहाराय विज्ञानानन्दैक्यानां यथाब्रह्मणात्यन्ताभेदोंऽगीक्रियते एवं विज्ञानादिशब्दानां पुनरुक्तेर्वैयर्थ्यस्य वा परिहाराय विशेषोऽप्यंगीकार्य एवेति ।

ननु तथापि भेदस्य घटस्वरूपत्वे घट एवास्ति न भेदः भेद एवास्ति न घट इति वा प्राप्त्या एकतरपरिशेषः स्यादित्याशंक्य निषेधति- **नचेति** । भेदस्य धर्मिस्वरूपत्वेन धर्मिणो भेदस्य वाऽभावो भवति आपद्यत इति च नेत्यर्थः । कुतो नेति चेत् परेण ज्ञानानदैक्यानां परस्परं ब्रह्मणा

च भेदो ह्यन्योन्याभावः । स चानेकाश्रित इति न कस्यापि सम्मतम् । ननु तथापि पृथक्त्वरूपो भेदो भवत्येवानेकाश्रित इति चेन्न । घटात्पटः पृथगिति प्रतीतस्यैव पृथक्त्वस्य परेणापि द्विष्ठत्वानंगीकारात् । न च घटपटौ पृथगिति प्रतीतस्यानेक पृथक्त्वस्य द्विष्ठत्वमंगीक्रियत इति वाच्यम् । तस्या अपि प्रतीतेरन्योन्याभावविषयकत्वेनैवोपपत्तौ तदतिरिक्तपृथक्त्वांगीकारे मानाभावात् । अन्यथा रूपरसौ पृथगित्यादौ का गतिः । नहि रूपादौ पृथक्त्वरूपो गुणोंगीक्रियते । तस्मान्नानेकाश्रितो भेदः किंत्वेकैकाश्रित एव । नचानेकसम्बन्धित्वप्रतिभासानुपपत्तिः । अस्मात् घटात् व्यावृत्तिरन्यस्य पटस्य स्वरूपं अन्यस्मात् पटात् व्यावृत्तिरस्य घटस्य स्वरूपमित्यंगीकारेण अनेकसम्बन्धित्वप्रतिभासोपपत्तेः । न चात्र प्रमाणाभावः । घटनिष्ठो भेदो न पटधर्मः पटप्रतियोगिकतया प्रतीयमानत्वात् । यो यत् प्रतियोगिकतया प्रतीयते नासौ तद्धर्मः यथास्थविरप्रतियोगिकमपरत्वं न स्थविरधर्म इत्यनुमानस्य सत्त्वात् । एतत्प्रमाणज्ञापनायैव व्यावृत्तिरेकैकस्वरूपमिति वक्तव्ये अस्मादिति विविच्योक्तम् । एतेन प्रतियोगिनिरूप्यभेदस्य वस्तुस्वरूपत्वे प्रतियोगिनोऽपि वस्तुस्वरूपत्वं स्यात् । निरूपितस्य यद्भवति तन्निरूपकस्यापि भवतीति न्यायादिति निरस्तम् । प्रतियोगिन उपलक्षणमात्रत्वेन धर्मिण्यन्तर्भावाभावात् । अन्यथाऽज्ञाननिवृत्तेः पुरुषार्थत्वेनाज्ञानस्यापि तदापत्तेः । क्वेदमुपलब्धं भगवता निरूपितस्य यद्भवति तन्निरूपकस्यापि भवतीति । लम्बकर्णमानय इत्यादिवदिति चेत् चित्रगुमानय इत्यादौ किं तदभावोऽपि न दृष्टः । नहि व्याप्तिग्रहणेऽनुसृतो लौकिकदृष्टान्तो व्यभिचारे नानुसरणीय इत्यस्ति ।

ननु तथापि न भेदस्य धर्मिस्वरूपत्वं युक्तम् । तथासति घटभेदशब्दयोः पर्यायत्वापत्त्या घटो भिन्न इत्यादिसहप्रयोगाभावप्रसंगात् इत्यत आह- ज्ञानेति । यथा ज्ञानानन्दैक्यानां ब्रह्मस्वरूपत्वेऽपि ब्रह्मज्ञानानन्दाद्वितीयशब्दानां

अपर्यायत्वेन विज्ञानमानन्दं ब्रह्म एकमेवाद्वितीयमित्यादिव्यवहारविशेष-स्तद्वद्भेदस्य घटस्वरूपत्वेऽपि घटभेदशब्दयोरपर्यायत्वे न व्यवहारविशेषो भवति उपपद्यत इत्यर्थः ।

वस्तुतस्तु अस्मन्मते सविशेषाभेदांगीकारेण घटभेदशब्दयोरपर्यायत्वं युज्यते । नचैवं त्वयांगीकर्तुं शक्यते । विशेषानंगीकारात् । ननु विज्ञानानन्द-शब्दयोर्वाच्यार्थभेदोऽस्त्येव ज्ञानत्वादिविशिष्टस्य वाच्यत्वात् तस्य च भिन्नत्वात् । अतो न पर्यायत्वम् । नचैवं विज्ञानादिपदानां भिन्नार्थ-प्रतिपादकत्वेन निर्भेदार्थनिष्ठत्वरूपाखण्डार्थत्वहानिविशिष्टस्य मिथ्यात्वा-द्वेदान्तानामतत्वावेदकत्वं च स्यात् इति वाच्यम् । लक्षणया ब्रह्मस्वरूपपरत्वांगीकारेण विज्ञानानन्दादयोस्तात्पर्यार्थैक्यसद्भावात्किं विशेषांगीकारेणेति चेन्न । अत्र प्रष्टव्यं किं विज्ञानशब्देन लक्षितं ब्रह्मैवानन्दशब्देन लक्ष्यते तदतिरिक्तं वा । नाद्यः । आनन्दशब्दवैयर्थ्यात् । न द्वितीयः । आनन्दशब्दस्याखण्डार्थत्वहानेः । नहि धर्मधर्मिभेदासह-मखण्डत्वं धर्मिभेदसहम् । ननु विज्ञानशब्देन लक्षितस्यैवानन्दशब्देन लक्षितत्वेऽपि अज्ञानानानन्दादिव्यावृत्तिरूप भिन्नभिन्नप्रयोजनसद्भावा-न्नपदान्तरवैयर्थ्यमिति चेन्न । विज्ञानानन्दादिशब्देन लक्ष्यार्थे ब्रह्मणि ज्ञानत्वादिधर्मानवबोधनेऽज्ञानादिव्यावृत्तिबोधनस्यापि कर्तुमशक्यत्वात् । तस्मादेकधैवानुद्रष्टव्यम् इत्यादि श्रुतिविरोधपरिहाराय विज्ञानानन्दैक्यानां यथाब्रह्मणात्यन्ताभेदोंऽगीक्रियते एवं विज्ञानादिशब्दानां पुनरुक्तेर्वैयर्थ्यस्य वा परिहाराय विशेषोऽप्यंगीकार्य एवेति ।

ननु तथापि भेदस्य घटस्वरूपत्वे घट एवास्ति न भेदः भेद एवास्ति न घट इति वा प्राप्त्या एकतरपरिशेषः स्यादित्याशंक्य निषेधति- **नचेति** । भेदस्य धर्मिस्वरूपत्वेन धर्मिणो भेदस्य वाऽभावो भवति आपद्यत इति च नेत्यर्थः । कुतो नेति चेत् परेण ज्ञानानंदैक्यानां परस्परं ब्रह्मणा

चाभेदांगीकारेण ब्रह्म वा स्यात् ज्ञानं वा स्यादित्यन्यतरपरिशेषापादनस्य तत्रापि साम्यादित्याह- **ज्ञानेति** । एवकारेण दृष्टान्तदौर्बल्यं व्यावर्तयति । ननु ज्ञानानन्दादेः परस्परं ब्रह्मणा चाभिन्नत्वे एकतरपरिशेषः स्यादिति कोऽर्थः । किं वस्तुभेदो न स्यात्किन्तु एकमेव स्यादिति किं वा ज्ञानमिति वा ब्रह्मेति वा व्यवहारः स्यात् न तूभयथेति । यद्वा एतयोर्मध्ये एकस्यैवार्थक्रियास्यान्नोभयार्थक्रियेति अथवा द्विवचनप्रयोगो न स्यादिति । नाद्यः । इष्टापत्तेः । न द्वितीयः । प्रवृत्तिनिमित्तभेदेन तदुपपत्तेः । न तृतीयः । एकत्रैव दीपे शुक्लभास्वररूपोष्णस्पर्शावच्छेदेन प्रकाशदाहरूपार्थ-क्रियावदेकत्रैव ज्ञानत्वानन्दत्वावच्छेदेन तदुपपत्तेः । न चतुर्थः । अर्थप्रकाशात्मकत्वनिरुपाधिकेष्टत्वरूपयोर्ज्ञानत्वानन्दत्वरूपयोर्विशेषणयोरनेकत्वेन विज्ञानानन्दावित्यादिद्विवचनप्रयोगोपपत्तिरिति चेत्समं प्रकृतेऽपि ।

ननु विदारणात्मनो भेदस्य घटस्वरूपत्वे घटस्यापि विदारणं स्यात् । तथावयवानामपि भेदः स्वभाव इति तत्रापि विदारणं भवेदित्यनेन क्रमेण परमाणोरपि भेदः स्वभाव इति तत्रापि विदारणापत्त्या सर्वशून्यतापत्तिरित्यत आह- **अन्येति** । स्वस्मादपि भेद इति शेषः । विदारणात्मा हि भेदो यस्य यतस्तं ततो विदारयेन्न तु यं कमपि यतः कुतश्चित् । नच घटस्वरूपस्य भेदस्य घट एव प्रतियोगी येन स्वस्मिन्नपि विदारणं स्यात् । किन्तु घटादन्य एव । ततो विदारणं तु नानिष्टं तस्य शून्यतानापादकत्वादिति भावः । अपि च विदारकमपि लवित्रादिस्वयं यत्सम्बन्धि तदेव विदारयति । नतु स्वात्मानम् । ततो धर्मभेदवादे कथं चिदेवं वक्तव्यं नतु स्वरूपाभेदवादे । करणसाधनत्वमंगीकृत्यैवायं परिहार उक्तः ।

वस्तुतस्तु न भेदो विदारकः किंतु विदारणम् । भेदशब्दस्य भावसाधनत्व अङ्गीकारात् । भिदिर्विदारण इति धातुव्याख्यानात् । तथाच घटोऽपि विदारणं स्यात् । नतु घटस्य विदारणम् । नहि विदारणस्य विदारणं युक्तम् ।

स्ववृत्तिविरोधात् । एवं विदारणं विभाग इत्यंगीकृत्यैवेदं दूषणमुक्तम् । वस्तुतस्तु न विभागरूपविदारणात्मा भेदः किंत्वन्योन्याभावः । क्रियावाचित्वमाख्यातुमेकैकोऽर्थः प्रदर्शितः । 'प्रयोगतोऽनुगन्तव्या अनेकार्था हि धातव' इति वचनाद्भिदिर्विभागवचनोऽन्यत्ववचनश्च । भिन्नो घट इत्युक्ते स्फुटित इति प्रतीतेः । भिन्नं गगनं घटादित्युक्तेऽन्यदिति विज्ञायते । प्रकृते चान्यत्वमेव प्रकृतम् । न विभाग इत्यन्यतालक्षणभेदस्य वस्तुस्वरूपत्वेऽस्माभिः कथिते विदारणप्रसंगेन शून्यतापादनमसंगतमेव । छलत्वादिति ।

ननु विभागस्यान्यत्वस्य च को विशेषो येनैवमुच्यत इति चेन्न । 'विदारणार्थो धातुश्च विभागगुणवाचक' इत्यनुव्याख्याने गुणग्रहणेनैव विशेषस्य सूचितत्वात् । विभागोऽहि गुणतया वैशेषिकादिभिरुपात्तोऽन्यता चान्योन्याभाव इति स्फुटस्तयोर्भेदः । यस्तु मायावादी गुणादिप्रक्रियां नानुमन्यते । सतु 'अविदारणेऽपि ह्यास्यस्य भिन्नावोष्ठौ तु तस्य च' इत्यनुव्याख्यानोक्तरीत्या बोधनीयः । तथाहि । यदा मायावादी अस्माभिः पराजितः सन् निरुत्तरतया तूष्णीमास्ते तदा तदीययोरोष्ठयोः संयुक्तत्वेन विदारणलक्षण-विभागाभावेऽपि अन्योन्याभावलक्षणभेदवत्त्वेनैव ओष्ठौ भिन्नाविति प्रयोगोऽस्त्येव । एवञ्च यदभावे यदस्ति तत्ततोऽन्यदिति सुप्रसिद्धत्वा-द्विभागादन्योन्याभावलक्षणो भेदो अर्थांतरमेव इति । एतेनानेकत्वैकार्थ-समवायिनो भेदस्य घटस्वरूपत्वे घटस्याप्यनेकत्वं स्यात् । कोऽर्थः अनेकत्वाधारत्वं स्यान्नत्वेकत्वाधारत्वम् । तथा तदवयवानामपि भेदः स्वरूपमेवेति सर्वत्राप्यनेकत्वस्यैवापत्त्या तद्विरुद्धमेकत्वं क्वापि न स्यात् । एकत्वाभावे चानेकत्वमपि न भवेत् । तत्समाहाररूपत्वात्तत्कार्यत्वाद्वा तस्य । तथाच संख्यारहितस्य द्रव्यस्य शून्यतापत्तिरिति निरस्तम् । एवं तर्हि घटोप्येकः स्यान्नत्वनेकः । तथाहि । भेदघटयोरभिन्नत्वेन भेदस्य या

गतिः सैव घटस्यापि वाच्या । तथाच भेदो यथानेकनिष्ठ धर्मः तथा तदभिन्नो घटोऽप्यनेकत्वं स्यात् अनेककपालादिनिष्ठधर्म एव स्यान्नत्वनेकः । अनेकत्वाधिकरणीभूतो धर्मीति यावत् । तथा च घटस्यापि धर्मत्वप्राप्त्या घटस्याप्यनेकत्वं स्यादित्यनेकत्वरूपधर्मत्वापादानमयुक्तम् । अस्तु वा घटस्यानेकत्वाधारत्वम् । तथापि कुतो नैकत्वम् । नह्येकत्वानेकत्वे स्वरूपेण विरुद्धे । एकस्यैव घटस्य स्वापेक्षया एकत्वस्यान्यापेक्षया-नेकत्वस्य च दर्शनात् । किन्तु यदपेक्षया अनेकस्तदपेक्षयैक इत्येव विरुद्धम् । तत्र घटस्यान्यस्मात्प्रतियोगिन एव भेद इति तदपेक्षयैवानेकत्वं स्वापेक्षयात्वेकत्वमेवेति को विरोधः । अपि च अनेकत्वबलेनैकत्वाभावमुक्त्वा पुनस्तद्बलेनानेकत्वाभावं वदतः कथं न पूर्वोत्तरविरोधः । किञ्चैकत्वानेकत्वयोः अभावेऽपि तस्य वस्तु नः कुतः शून्यत्वम् । वैशेषिकादीनां गुणादिवत् मायावादिनां ब्रह्मवदगुणस्यापि सत्त्वोपपत्तेरिति न कश्चिद्दोषः । एवं भेदस्य धर्मिस्वरूपत्वं युक्त्योपपाद्य तत्र बाधकानि परिहृतानि । इदानीमागम-संमत्यापि तद्द्रढयति- **भेदस्त्विति** ।

यद्वा ननु तथापि न भेदस्य धर्मिस्वरूपत्वं युक्तम् । अन्योन्याभाव-रूपस्य तस्य नित्यत्वात् घटादेश्च धर्मिणो विनाशित्वादित्याशंकां परिहर्तुं तत्र ये घटादिधर्मिस्वरूपभूतोऽपि भेदो घटादिनाशेऽपि न नश्यतीत्याहुस्तन्मतं तावत्प्रमाणेनानुवदति- **भेदस्त्विति** । पूर्वं प्रकृतपदार्थापेक्षया भेदे वक्ष्यमाणनित्यत्वरूपविशेषद्योतनाय तु शब्दः । अवधारणार्थो वा । स्वरूपमित्यनेन सम्बन्ध्यते । तेनात्यन्ताभेदव्यवच्छेदः । नैजं संयोगादिवन्नागन्तुकमित्यनेन भेदाभेदव्यवच्छेदः । ननु यदि धर्मिणोऽव्ययत्वं स्यात्तदा तत्स्वरूपभूतभेदस्याप्यव्ययत्वं स्यात् । यदि घटादिरूपो धर्म्येव विनाशी स्यात् कथं तर्हि तत्स्वरूपभूतो भेदो नित्यः स्यादित्यत आह - **नष्टानामपीति** । अवस्तुनोऽपीत्यत्र इत्यपिशब्दो यद्यपि तथापीत्यर्थे ।

तथाच यद्यपि भेदो वस्तुनो नाशप्रतियोगिवस्तुनो घटादेः स्वरूपं रूपमेव न चान्यथा तथापि न केवलमनष्टानां किन्तु नष्टानामपि वस्तूनां भेदः धर्मिधर्मभावः षष्ठ्यर्थः । स धर्मिधर्मभावो नैव विनश्यतीति योजना ।

अयमाशयः । भेदो नाम अन्योन्याभावः । स चान्योन्यतादात्म्यापत्त्यैव निवर्तनीयः । प्रतियोग्यापत्तेरेवाऽभावविपत्तित्वस्य प्रागभावे दृष्टत्वात् । नच पदार्थानां कदाप्यन्योन्यतादात्म्यमस्तीत्यनित्यानामपि भेदो नित्य एव इति । वस्तुनाशेऽपि तत्स्वरूपेणावसायिता अवसानं पर्यवसानम् । अवशेष एव नाश इत्युच्यते सद्भिर्हि यस्मात्तस्माद्वस्तुविनाशेऽपि भेदो न नश्यतीति केचिदाहुरित्यर्थः । उपादानं कारकव्यापारात्प्रागकार्यात्मकं सत् कार्यरूपतामापद्यते यत्सा जनिः । ततः परिदृश्यमानविशेषरूपापगमेन कार्यस्योपादानरूपेण पर्यवसानमेव विनाश इति सदसत्कार्यवादो हि सतां सिद्धान्तः । तत्र विशेषरूपनाश एव विनाशशब्दार्थश्चेत्तर्हि तस्य कारणात्मत्वपर्यवसानंस्यानुक्त्याऽसत्कार्यवादापत्तिः स्यादतो भेदमात्रावसायिता इति भेदमात्रावसानमपि नाशशब्दार्थ इत्युक्तम् । घटस्वरूपभूतभेदावसानं च घटस्याप्यवसानं विना न युक्तमिति घटस्यापि कारणात्मनावसानमप्यनेन गम्यते ।

इदमुक्तं भवति । अत्यन्तासत्कार्यवादो वात्यन्तसत्कार्यवादो वा न सद्भिरादृतः । किन्तु सदसत्कार्यवाद एव । उपादानं प्राक् कारकव्यापारा-दकार्यात्मकं सत्कार्यरूपतामापद्यते यत्सा जनिरित्यंगीकारात् । ततः परिदृश्यमान विशेषरूपापगमे न कार्यस्योपादानरूपेण पर्यवसानमेव विनाश इत्युच्यते । एवं च घटनाशेऽपि घटस्वरूपभेदः उपादानरूपेण तिष्ठतीति न घटनाशेऽपि तन्नाश इति । अत्र केचिदिति ज्ञानिन एव विवक्षिताः । न ह्यज्ञानिनः केऽपि भेदस्य धर्मिस्वरूपत्वमंगीकृत्य नित्यत्वमंगीचक्रुः । येनायं तन्मतानुवादः स्यात् । अत एव सुधायां प्रकृत्यधिकरणे

टीकाकारास्तु मन्यन्त इत्यादिना अयं पक्षः टीकाकारमततयोक्तः । उक्तं च सन्न्यायरत्नावल्याम् । विनाशिनोऽपि घटादेः धर्मरूपभेदः परवाद्यभ्युपगत-घटत्वादिजातिवन्नित्योवगन्तव्यः । वस्त्वन्तरतापत्त्यभावात्कालत्रयेऽपीति । अज्ञानादिति स्थूलां दृष्टिमाश्रित्येत्यर्थः । अत एव सूक्ष्मदर्शिन इति वक्ष्यति । एतन्मताभिप्रायेणैव सुधायां प्रकृतिरूपमूलकारणस्वरूपभेदस्य नित्यतोक्तेति ज्ञातव्यम् । सूक्ष्मदर्शनमाश्रित्याह- **तत्रेति** । भेदविषय इत्यर्थः । किमाहुरित्यत आह- **सत्यमिति** । तस्माद्भेदस्य वस्तुस्वरूपत्वादित्यर्थः । येन रूपेण कार्यस्योपादानात्मनावस्थानं तद्रूपस्य भेदस्योपादानरूपेण सत्वेऽपि येन रूपेणापगमद्रूपस्तस्य भेदस्य न कुत्राप्यवस्थानमिति भावेन कुत्रचिदित्युक्तम् । अत्रानित्यस्वरूपभेदस्यानित्यत्वोक्तिस्तु उपादानरूपेण सतोऽपि भेदस्य व्यवहारानुपयोगित्वमभिप्रेत्यैव । अतो न पूर्वमतविरोधः । अत एतन्मताभिप्रायेणैव सुधायामनित्यप्रपञ्चस्वरूपभेदस्यानित्यतांगीकृतेति मन्तव्यम् । नन्वेवं पञ्चभेदा इमे नित्या इत्यादिप्रमाणविरोधः । जीवेश्वरयोः परस्परं जीवानां च भेदस्य नित्यत्वेऽपि जडधर्मिकाणां जीवेश्वरजडप्रतियोगिकानां अनित्यत्वादिति चेन्न । नित्ये जडे प्रकृत्यादौ धर्मिणि जीवेश्वरभेदस्य जडान्तरभेदस्य च नित्यत्वोपपत्तेः । उक्तं च सुधायां नित्ये च त्रयाणां सिद्धिरिति ।

ननु यदि घटनाशे घटनिष्ठो भेदो नश्यति तर्हि घटस्य पटतादात्म्यं स्यात् । तादात्म्यस्यान्योन्याभावप्रतियोगित्वात् । प्रतियोगिन एव अभावध्वंस-रूपत्वस्य प्रागभावे दृष्टत्वादित्यत आह- **अविनष्टस्येति** । तस्मात् नष्टात् । घटादिनाशेन तदात्मकस्य भेदस्य विनाशेऽपि न नष्टघटस्य पटतादात्म्य-मापद्यते । अविनष्टस्य पटस्य तस्माद्विनष्टात् घटाद्भेदस्य सत्वात् । तदपि कुतः । भेदस्य स्वरूपतो धर्मिस्वरूपत्वतः । धर्मिणश्च पटस्या-विनष्टत्वादित्यर्थः ।

अयं भावः । घटधर्मिकपटप्रतियोगिकभेदवत्पटधर्मिकघटप्रतियोगिक-भेदस्यापि घटपटतादात्म्यविरोधित्वात्तस्य च घटनाशेऽपि सत्वान्नोक्त-विरोध इति । नच प्रतियोगिनाशे कथं भेदनाश इति वाच्यम् । प्रतियोगिनः उपलक्षणमात्रत्वेन तन्नाशेऽपि धर्मिस्वरूपभूतभेदानाशोपपत्तेः । नन्वेवं तर्हि घटपटयोरुभयोरपि विनाशे तदात्मकभेदद्वयस्यापि विनाशात् घटपटतादात्म्यं स्यादिति चेत् । अत्र केचित् । यथाहि घटवत् घटध्वंसस्यापि घटप्रागभाव विरोधित्वं एवं भेदवत् भेदध्वंसस्यापि तादात्म्यविरोधित्वात् । अन्यथा प्रागभावध्वंसरूपघटविनाशे प्रागभावो-न्मज्जनापत्तिरित्याहुः ।

वस्तुतस्तु यत्र घटपटौ उभावपि नष्टौ । तत्र तत्स्वरूपभूतभेदनाशेन तत्तादात्म्यमापादयितुमशक्यम् । धर्मिण एवाभावात् । अन्यथा घटपटोभयनाशेन तत्संयोगनाशे तद्विभागापत्तेः । न चेष्टापत्तिरिति वाच्यम् । धर्मिणोरभावेन कयोर्विभागः स्यादिति । नन्वथापि भेदो न धर्मिस्वरूपम् । घटादिप्रतियोगिकान्योन्याभावस्य शशशृंगादावपि वक्तव्यत्वात् । न च तस्य धर्मिस्वरूपत्वं युक्तम् । धर्मिण एवाभावात् । नच धर्मिभिन्न एव स इति वाच्यम् । पूर्वोक्तिविरोधापत्तेरित्यत आह- **एवमिति** । भवतीति भावः सन् । न भवतीत्यभावोऽसन् । न भेदोऽस्तीति वर्तते । यथा घटादिनाशे तद्धर्मिको भेदो नास्ति एवं भावात्सतो घटादेः सकाशादभावस्यासतः शशशृंगादेर्भेदो नास्ति । कुतः । यतो भेदो भावरूपवान् सत्स्वरूप इत्यर्थः । अत एव भेदस्तु सर्ववस्तूनां स्वरूपमिति भेदस्य वस्तुस्वरूपत्व-मेवोक्तमिति न पूर्वोक्तिविरोध इति भावः ।

नन्वेवं शशशृंगादौ घटादिप्रतियोगिकभेदाभावे शशशृंगादेर्घटादितादात्म्यं स्यात्तदन्योन्याभावाभावे तत्तादात्म्यस्य ध्रौव्यादित्यत आह- **अभावादिति** । अत्रापि भावाभावशब्दौ सदसत्परौ भेदोऽस्तीति वर्तते घटादिप्रतियोगिक-

भेदस्य शशशृंगादावभावेऽपि न शशशृंगादेर्घटादितादात्म्यमापद्यते । कुतः । यतो अभावादसतः शशशृंगादेः सकाशात् भावरूपस्य सद्रूपस्य घटादेर्भेदोऽस्ति । तदपि कुतः । यतो भावरूपस्य घटादेः स्वरूपं भावः सन् इष्यते प्रामाणिकैः । भेदश्च तत्स्वरूपः ।

इदमुक्तं भवति । सत्प्रतियोगिकभेदस्याऽसत्यभावेऽपि असत्प्रतियोगिक-भेदस्य सति सत्त्वान्न तयोस्तादात्म्यमिति । नन्वेवं तर्हि शशशृंगान्नृशृंगस्य भेदोऽस्ति न वा । नेति ब्रूमः । यथा घटपटयोर्विनष्टयोः सतोः तद्भेदोऽपि नास्ति तथा शशशृंगनृशृंगयोरपि भेदो नास्तीत्यंगीकारौचित्यात् । नन्वेवं शशशृंगनृशृंगयोस्तादात्म्यापत्तिरिति चेन्न । सति धर्मिणि भेदाभावस्ता-दात्म्यापत्तौ प्रयोजकः । प्रकृते च धर्मिणोः शशशृंगनृशृंगयोरेवाभावात् न अन्योन्यतादात्म्यापत्तिः । अत एव सति असत्प्रतियोगिको भेदः समर्थितः । अन्यथा धर्मिणः सत्त्वात्तत्रासत्प्रतियोगिकभेदाभावे सतोऽसत्तादात्म्यापत्ते-र्दुर्वारत्वात् । किञ्च शशशृंगनृशृंगयोर्भेदाभावे तादात्म्यापत्तिरिति कुतः । ''परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वात्''इति चेत् । एवं तर्हि वन्ध्यासुतस्य श्यामत्वाद्यभावे गौररूपत्वस्यापत्तेः । यदि च रूपादीनां धर्मिसत्तासापेक्षत्वात्तत्र च धर्मिण एवभावान्न गौररूपापत्तिः । परस्परविरुद्धयोरिति न्यायस्तु यत्र धर्मी सन् तत्रैवेत्युच्यते । तर्हि तादात्म्येऽपि समम् । एवं च शशशृंगनृशृंगेनेति प्रतीतिरपि नानुपपन्ना । भेदाभावेऽपि तादात्म्याभावेनैवोपपत्तेरिति । एवं धर्मिनाशे तत्स्वरूपभूतो भेदो नश्यतीत्युक्तम् । इदानीं नष्टानामपि वस्तूनां भेदो नैव विनश्यतीति यदुक्तं तन्मतं पूर्वोक्तमभिप्रायमुद्धाट्यांगीकरोति- **नष्टभेदोऽपीति** । नष्टस्य घटादेर्भेदो नष्टभेदः । अभावात्मा असदात्मा । च शब्द एवार्थे । नष्टस्य भेदोऽप्यसद्वस्त्वात्मा उपादानरूपेण विद्यत एव । वस्तुनो सत्वं कुत इत्यत उक्तं विनाशत इति ।

इदमुक्तं भवति । सदसत्कार्यवादिनामस्माकं मते विनाशो नाम परिदृश्यमानविशेषरूपापगमेनोपादानमात्रत्वापादनम् । एवं च यथाघटस्य विनाशतो निमित्तात् घटः अभावात्मा नष्टकार्याकारः सन् उपादानरूपिण विद्यत एव एवं नष्टस्य घटादेर्भेदोऽप्यभावात्मा प्रध्वस्तघटस्वरूपभूतः उपादानरूपेण विद्यत एवेति यद्यभिप्रायस्तर्हि विद्यत एव । तदस्माभिरंगीक्रियत एवेति यावत् । अस्माभिरपि विशेषाकारापगमे सति विशेषाकारस्वरूपभूतभेदविनाशस्यैवोक्तत्वात् उपादानरूपेण घटवत् भेदस्यापि सत्त्वांगीकारादिति । उक्तं चानुव्याख्याने वैशेषिकपरीक्षायाम् । 'तस्मात्प्रध्वस्त भेदादिसदित्येवावगम्यत'इति । व्याख्यातं चैतत्सुधायाम् । प्रध्वस्तस्य घटादेर्भेदः प्रध्वस्तभेदः नष्टानामपि वस्तूनां भेदो नैव विनश्यतीति यत्प्रध्वस्तभेदस्य सत्त्वमवगम्यते तत्तस्मात्कार्यस्य कारणाभेदात्प्रागुत्पत्ते-र्विनाशोत्तरं च सत्त्वादेव युज्यते । नह्यत्यन्तासत्त्वमापन्नस्य स्वरूपभूतो भेदः सन्निति युज्यत इति ।

ननु उक्तरीत्या अन्योन्याश्रयादिदोषदुष्टो भेद एव नांगं धत्ते यः पश्चादस्ति न वेति विचार्यत इत्यत आह- **स्वरूपत्वादिति** । तुशब्दश्च शब्दार्थः । न भेदविषये कस्यचिद्दूषणस्य शंका भेदस्य धर्मिस्वरूपत्वविषये परोक्तदोषाणामाभासत्वाच्चेत्यर्थः । ननु भेदस्य धर्मिस्वरूपत्वं कुत इति चेन्न । सर्वस्य सर्वस्मात् व्यावृत्ततायाः सर्वैरनुभूयमानत्वात् । न च तदेव कुत इति वाच्यम् । तदनंगीकारे इदं सर्वं भवति नवेति पुरोवर्तिपदार्थस्य सर्वस्माद्भेदे कस्यचिच्छंका स्यात् । नच साऽस्तीत्याह- **भेदे शंका न कस्यचिदिति** । ननु सर्वस्य सर्वस्मात् व्यावृत्तता सर्वैरनुभूयत इत्युक्तम् । सर्वव्यावृत्तिज्ञानस्य सर्वज्ञानसापेक्षत्वात् । नच सर्वेषां सर्वज्ञानमस्तीत्यत आह- **सर्वमिति** । सर्वं वाक्यं सावधारणमिति न्यायेन सामान्यत एवेति योज्यम् । यदि सर्वैरपि सर्वमनुभूयते तर्हि सर्वांतर्गताशेषविशेषाणामपि

ज्ञातत्वेन अयं घटो न वेत्यादिसंशयादिकं न स्यादित्यत उक्तं- **सामान्यत इति** । साक्षिणेति शेषः । **सर्वैरपि सर्वं** सामान्याकारेणैव साक्षिणाऽनुभूयते । नतु विशेषाकारेण । अतः संशयाद्युपपत्तिरित्यर्थः । सामान्यतः सर्वज्ञता चेष्टैवेति भावः । सामान्याकारेण सर्वविषयकं ज्ञानं साक्षिरूपमेव । न परमत इव सामान्यलक्षणप्रत्यासत्तिजन्यम् । यथोक्तमनुव्याख्याने । 'अतः सर्वे पदार्थाश्च सामान्यात्साक्षिगोचरा' इति । उक्तं च तत्वनिर्णयटीकायाम् । सर्वमिति सामान्यतो यत्सर्वविषयकं ज्ञानं तत्साक्षिरूपमेवेति । उक्तं च जयतीर्थीयवादावल्याम् । सामान्यतः सर्वस्य साक्षिसिद्धत्वांगीकारादिति ।

ननु कथमस्य ज्ञानस्य साक्षिरूपत्वमिति चेत् उच्यते । नतावदिदं ज्ञानं बाह्यप्रत्यक्षेण जायते । सर्वस्येन्द्रियासन्निकृष्टत्वात् । नापि मनसा तस्य बहिरस्वातन्त्र्यात् । नाप्यनुमानेन व्याप्त्याद्यनुसन्धानविधुराणामपि सर्वमिति ज्ञानस्यानुभूयमानत्वात् । नाप्यागमेन जातिबधिराणामपि तत्प्रत्ययोपलब्धेः । तस्मात्साक्षिरूपमेवेदं ज्ञानमित्यंगीकरणीयम् ।

अयमत्र प्रयोगः । विप्रतिपन्नं सर्वं बाह्यप्रत्यक्षानुमानाद्यतिरिक्तप्रमाणगम्यम् । तेनानुपपद्यमानग्रहणत्वे सति गृह्यमाणत्वात् । यद्येनानुपपद्यमानग्रहणत्वे सति गृह्यमाणं तत्तदन्येन ग्राह्यम् । यथा चक्षुषाऽनुपपद्यमानग्रहणो रसः तदन्येन ग्राह्य इति । ननु तथापि न भेदो वक्तुं युक्तः । भावादभावस्या-भावात् भावस्य च भेदो वक्तव्यः । तत्र यद्यपि भावस्य धर्मित्वप्रतियोगि-त्वादयो धर्माः सन्ति । तस्य सधर्मकत्वात् । नत्वभावस्य । तस्य निषेधरूपत्वेन निर्धर्मकत्वादित्यत आह- **प्रतियोगितात्त्विति** । यद्वा सर्वस्मात् व्यावृत्ततया वस्त्वनुभूत इत्युक्तम् । तथात्वे सर्वपदार्थान्तर्गता-भावस्यापि प्रतियोगित्वापत्तेः । नच तस्य प्रतियोगित्वं युक्तम् । अभावस्यानिर्धर्मकत्वादित्यत आह- **प्रतियोगितात्त्विति** । तु शब्दोऽप्यर्थः । तेन धर्मित्वसमुच्चयः । न केवलं भावस्य किन्त्वभावस्यापि । ननु

तत्प्रतियोगितादि किमभावाद्भिन्नं नेत्याह- **अभावतयेति** । अभावाभिन्नत्वेने-त्यर्थः । स्फुटमस्तीत्युक्त्या तत्र प्रत्यक्षमेव प्रमाणमिति सूचयति । ननूक्तमत्राभावो निर्धर्मकस्तस्य निषेधरूपत्वादित्यत आह- **नहीति** । अभावोऽपि वस्तुनिषेधरूपोऽपीत्यर्थः । न विद्यन्ते धर्माः यस्यासावधर्मा । अत्र प्रमेयत्वादेरनुभवादिति हिशब्देनाह । एवं तर्ह्यभावस्यानिर्धर्मकत्वोक्तेः का गतिरित्यत आह- **नत्विति** । अत्र भावशब्देन अभावभिन्नत्वमुच्यते । तथाचाभावः स्वापेक्षया भिन्नधर्मयुक् नैव स्यात् । अतः क्वचिन्निर्धर्मकत्व-व्यपदेश इति भावः । यथाश्रुतं तु न युक्तम् । उक्तप्रतियोगित्व-प्रमेयत्वादेर्वक्ष्यमाणास्तित्वादेश्चाभावनिष्ठधर्माणां भावरूपत्वात् । नचाभाव-निष्ठोक्तधर्मजातस्याप्यभावस्वरूपत्वेन भावरूपत्वे विवाद इति वाच्यम् । विधिप्रत्ययविषयत्वात् । प्रतियोग्यनिरूप्यत्वाच्च । नचाभावा-भिन्नत्वादभावरूपत्वमिति वाच्यम् । अभावाभिन्नस्यापि तस्य विशेषबलेन भावरूपत्वोपपत्तेः । उक्तं चानुव्याख्याने । अभावस्य च भावाः स्युर्धर्मा इति । अभावस्य च भावोऽपि धर्म इति च । व्याख्यातं च सुधायाम् । अभावस्य च भावाः प्रमेयत्वादिधर्माः सन्तीति । नन्वभावस्स्वापेक्षया भिन्नधर्मयुक् न भवतीत्युक्तमयुक्तम् । अभावोऽस्तीति प्रतीतेरभावेऽस्तित्वरूपधर्मस्याभावभिन्नस्य सत्त्वादित्यत आह- **अभावस्येति** । सत्यमभावे अस्तिता नाम धर्मोऽस्तीति तथापि साऽभावरूपिण्येव अभावाभिन्नैव स्यात् । नतु ततो भिन्ना । नामेति प्रसिद्धिद्योतकमव्ययम् । तेनाभावेऽस्तित्वमभावस्वरूपमिति वैशेषिकादिमते प्रसिद्धमिति सूचयति । नन्वथाप्यभावेऽभावतारूपो धर्मोऽभावभिन्नोऽस्तीत्यतः सोऽप्यभावात्मक एव । नतु ततो भिन्नः अतो नोक्तानुपपत्तिरित्याह- **अभावतापीति** । सैवाभाववरूपिण्येव । एवकारव्यावर्त्यमाह- **नत्विति** । भावरूपिणीति अभावभिन्नेत्यर्थः । ननु किमर्थमयं भेदो विचार्यते । भगवज्ज्ञानस्यैव

मोक्षोपयोगित्वेन तद्विचारस्यैव कर्तव्यत्वात् । नहि भेदज्ञानस्य किञ्चित्प्रयोजनं पश्यामो नवा तदज्ञानेऽनर्थमित्यत आह- **अत इति** । भेदस्य धर्मिस्वरूपत्वादित्यर्थः । तु शब्दोऽवधारणार्थः । अन्यस्तु न मुच्यत इत्यर्थः । तथाच मोक्षाभाव एव तज्ज्ञानाभावेऽनर्थ इति भावः ।। २.२२ ।।

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमत्तैत्तिरीयोपनिषद्भाष्यस्य टीकायां श्रीमद्यदुपत्याचार्यपूज्यपादाराधकेन श्रीनिवासेन विरचितायां पदार्थदीपिकायां ब्रह्मवल्ली सम्पूर्णा ।। २ ।।**

**श्री.खं**- ततश्चायमर्थः । एवं विष्णोर्विदुषां नियमेन मोक्षदातृत्वरूपं मोक्षे च तरतमभावापन्नस्वरूपानन्दाविर्भावदातृत्वरूपमहिमानं चोक्त्वेदानीं उत्कृष्टापकृष्टसर्वजीवनियामकतयाऽवस्थितरूपाभेदरूपं महिमान्तरमाह - **स इति** । चशब्दौ परस्परसमुच्चयार्थौ । स प्रसिद्धो योऽयं पुरुषे तदुपलक्षितापकृष्टजीवेषु नियामकतया तिष्ठति । यश्चासावादित्ये तदुपलक्षितोत्कृष्टजीवेषु देवेषु नियामकतया तिष्ठति । स ब्रह्मादीनां स्वरूपानन्दाविर्भावाप्तिदाता विष्णुरेक एव । न तयोः परस्परं भेदो मन्तव्य इत्यर्थः । सर्वरूपेष्वभेदादिरूपभगवन्माहात्म्यवेत्तुर्मुक्तानन्द-तारतम्यवेत्तुश्च फलमाह- **स य इति** । यः एवं उक्तप्रकारेण सर्वरूपेष्वभिन्नत्वादिरूपभगवन्माहात्म्यस्य वित् वेत्ता तथा एवं नरादिब्रह्मान्तानां भगवत्प्रसादादाविर्भूततरतमभावोपेतानन्दस्य च वित् वेत्ता एवं भगवन्माहात्म्यज्ञानपूर्वकस्नेहरूपभक्त्युपासनादिजनितापरोक्ष-ज्ञानीति यावत् । सः भोगेन प्रारब्धं कर्म क्षपयित्वा अनन्तरं अस्मात् चरमत्वेन प्रसिद्धाल्लोकाच्छरीरात्प्रेत्य हृदयाग्रप्रज्वलनप्रकाशितनाडीद्वारा देहान्निष्क्रम्य अर्चिरादिद्वारा यथायोग्यं कार्यमकार्यं च ब्रह्म प्राप्यावस्थितः सन् कार्यात्यये तदध्यक्षेण ब्रह्मणा सह एतमन्नमयं तन्नामकं भूम्यब्जं आत्मानं अनिरुद्धं उप तत्समीपमिति यावत् । संक्रामति गच्छतीत्यर्थः ।

प्राणमयं अग्न्यादिषु स्थितं प्रद्युम्नम् । मनोमयं मनस्तत्वादिसंस्थं संकर्षणम् । विज्ञानमयं महति स्थितं वासुदेवम् । आनन्दमयं अव्यक्ततत्वगतं नारायणम् । एवं पञ्चरूपिणं भगवन्तं प्राप्य संसारभयरहितः सन् तिष्ठतीति शेषः ॥२.२१॥

अत्रार्थे संमतितया श्लोकमुदारहति- **तदपीति** । तत्रापि पञ्चरूपिणं भगवन्तं प्राप्तस्य भयराहित्ये एषः वक्ष्यमाणः श्लोको भवतीत्यर्थः । तमेव श्लोकं पठति- **यत इति** । यतो यस्मात् मनसा सह वाचः अप्राप्य निवर्तन्ते । आनन्त्यादिति शेषः । एतादृशं ब्रह्मण आनन्दं आनन्दरूपिणं आनन्दमयं नारायणाख्यं परब्रह्मेति यावत् । इदमुपलक्षणम् । अन्नमयादि-शब्दवाच्यानिरुद्धादिरूपचतुष्टयमपि ग्राह्यम् । विद्वान् तद्विषयकापरोक्षज्ञान-द्वारान्तं प्राप्त इति यावत् । कुतश्चन कुतोऽपि । न बिभेति संसारभयवान्न भवतीत्यर्थः । इति श्लोको भवतीति सम्बन्धः । श्लोकोक्तं भयाभयं विवृणोति- **एतऽहवावेति** । अहं किं किमर्थं साधुकर्म नाकरवं नाकार्षम् । किमर्थं पापमकरवं येनैतादृशं पापफलं भुञ्जे इत्येवं रूपं पश्चात्तापजनितं भयं एतं मुक्तं न तपति न सन्तापयति इत्येतत् ह वाव अतिप्रसिद्ध-मित्यर्थः । संसारे प्रसिद्धं एतादृशं भयं मुक्तस्य नास्तीति भावः । ननु ज्ञानिनः कथं भगवत्प्राप्तिः प्रारब्धकर्मणां भोगेन क्षयेऽपि पूर्वार्जितानामप्रारब्धानां पुण्यपापरूपाणां अनन्तकर्माणां भावात् । नच तेषामपि भोगेन क्षय इति वाच्यम् । आनन्त्यादेव । यथोक्तम् । नह्यानन्त्यात्कर्मणां भोगेन नाश इति- **तत्राह** । स य एवं विद्वान् इति । सः यः प्रसिद्धः एवमुक्तमाहात्म्योपेतत्वेन आत्मानं परमात्मानं विद्वान् तदपरोक्षज्ञानीति यावत् । एते अनिष्टं अप्रारब्धं यत्काम्यपुण्यं तथाऽप्रारब्धं पापं चेत्येवमेते पुण्यपापे स्पृणुते स्तृणुते । प्रियेष्वप्रियेषु च स्तृणोति विस्तारयति । धातूनामनेकार्थत्वात् । जहातीति यावत् । तथाच

तदीया प्रारब्धानभीष्टपुण्यपापभागिनः प्रियाप्रियाश्च भवन्तीत्यर्थः । 'सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति श्रुतेः । तथाच युक्ता ज्ञानिनो भगवत्प्राप्तिरिति भावः । उक्तप्रकारेण भगवज्ज्ञानी अनिष्टे पुण्यपापे प्रियाप्रियेषु जहातीत्युक्तं तन्नोपचरितमिति भावेन तथा वेत्तुरपि तदेवफलं भवतीत्याह- **उभे इति** । इदं वाक्यमावृत्त्या योज्यम् । तथाहि । य एवमुक्तप्रकारेण आत्मानं भगवन्तं वेद अपरोक्षतो जानाति स एष उभे अनिष्टे पुण्यपापे प्रियाप्रियेषु स्पृणुते इत्येवं यो वेद स एषोऽप्यधिकारी अपरोक्षज्ञानानन्तरं उभे अनिष्टे पुण्यपापे एव प्रियाप्रियेषु स्पृणुते स्तृणुते न प्रारब्धमर्पात्यर्थः । य एवं स य एवं विद्वानेते आत्मानꣳस्पृणुते इत्युक्तप्रकारेण वेद स एषोऽप्युभे स्पृणुत इति योजनायां आत्मानामित्ये-तदुर्वरितं भवतीति ज्ञातव्यम् । तदर्थमात्मशब्दो न भगवत्परो अपितु ज्ञानिपर इत्यंगीकृत्य य एवं स य एवं विद्वान् इत्युक्तरीत्या प्रियाप्रियेषु पुण्यपापहानकर्तृत्वेनात्मानं ज्ञानिनं वेद स एषोऽप्युभे स्पृणुत इति योजनायां तु नावृत्तिर्द्रष्टव्या । एवं वरुणं प्रत्युपदिश्योपसंहरति ब्रह्मा इत्युपनिषदिति । यदेव विद्यया करोति श्रद्धयोपनिषदा इत्यत्र उप निषीदति इत्युपनिषद्योग्येति टीकाकारैरुपनिषच्छब्दो योग्यार्थतया व्याख्यातः । तस्योपनिषच्छब्दस्य सत्यमितीत्यत्रोपनिषद्रहस्यं नामेति रहस्यार्थतया च व्याख्यातः । तथाच इति पूर्वोक्तप्रकारेण उपनिषत् त्वद्योग्या रहस्यभूता च ब्रह्मविद्या त्वां प्रति मयोपदिष्टेति शेषः ।।२.२२।।

**वरद-** ननु'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते' इत्यादिना परमात्मनि भेदो नास्तीति यदुक्तं, तन्न । तस्यापि स्थानभेदेन भेदादित्यत उच्यते 'स यश्चायं पुरुषे यश्चासावादित्ये' इत्यादि । तस्यार्थो-**यत्प्रसादादित्यादि** । एवं निरूपितोपनिषदर्थपरिज्ञानस्य फलमुच्यते 'स य एवं वित् । अस्माल्लोकात् प्रेत्य । एतमन्नमयमात्मानमुपसङ्क्रमति' इत्यादि ।

तद् व्याख्याति- **तमेवमिति** । परमेश्वरस्यानन्दं विद्वान् कुतश्चन न बिभेतीत्युक्तम् । तत्र किं कारणमित्यतो भयकारणपापादिराहित्यमेवेत्युच्यते 'एतं ह वाव न तपति' इत्यादि । तस्यार्थमाह- **न पुण्यपापेति** ।

ज्ञानिनोऽनिष्टपुण्यपापे कुतो न स्त इत्यत उच्यते 'स य एवं विद्वानेते आत्मानं स्पृणुते' इति । तस्यार्थः- **प्रियाप्रियेष्विति** । अन्नमयादिपञ्चरूपस्य विज्ञानान्मोक्षो भवतीत्यत्र श्लोकसम्मतिरुच्यते 'यतो वाचो निवर्तन्त' इत्यादि । तस्यार्थः- **अगोचरमिति** । अन्ये तु 'सोऽश्नुते सर्वान् कामान् सह । ब्रह्मण विपश्चिते' इत्यादिकं अन्यथा व्याचक्षते । कथम् । य उपासको गुहायां हृदयगुहायां परमे व्योम्नि, निहितं परं ब्रह्म वेद, सर्वान् कामान् सर्वजीवेषु स्थितान् कामान्, सह युगपदेव, अश्नुते प्राप्नोति । कथम् । ब्रह्मणा सह ब्रह्मभावेन इति । तन्निराकरोति- **न चेति** । कुतो न कल्प्यत इत्यत आह- **अप्रामाणिकत्वात् इति** ।

'ब्रह्मणा' इत्यस्य 'ब्रह्मभावेन' इत्यर्थाङ्गीकारे सर्वत्रानाश्वासश्च स्यात् । अश्नुतस्य ननु भगवत्पक्षेऽपि ओषधीत्यस्य लोकप्रसिद्धमन्नमर्थः 'स वा एष पुरुषोऽन्नरसमयः' इत्यत्रान्य इति सकृदुच्चारितस्यान्नशब्दस्यानेकार्थ-त्वाङ्गीकारो दोष इत्यत आह - **न चेति** । कुतो न विरोध इत्यत आह- **अन्नस्यान्नमिति** । यथा'अन्नस्यान्नम्' इति वाक्ये सकृदुच्चरितस्यान्नशब्दस्य अर्थभेदे ज्ञापकसद्भावादनेकार्थत्वमङ्गीक्रियते । एकस्य अन्नशब्दस्य सम्बन्धार्थषष्ठीविभक्त्यन्तत्वात् अन्यस्य च प्रथमान्तत्वात् । यथा च 'यो ह वै शिशुं, साधनं स प्रत्याधां सस्थूणं सदामपेदेति'' प्रकरणे सकृदुच्चारितस्यापि प्राणशब्दस्यानेकार्थत्वं अङ्गीक्रियते । एकस्य प्राणस्य मध्यमत्वेन विशेषितत्वात् । एवमत्रापि एकत्र रसशब्देन विशेषितत्वाद् 'ओषधीभ्योऽन्नम्' इत्यत्र तदभावात् । सकृदुच्चारितस्याप्यन्नशब्दस्या-नेकार्थत्वाङ्गीकारो न दोषायेति । मायी तु 'अन्नमयादयः पञ्चापि

कोशादय एवेति' वदति । तन्निराकरोति- **न चेति** । अन्नमयादीनाम-ब्रह्मत्वेऽपि तेषु शब्दप्रयोग उपपद्यते । ब्रह्मत्वेन तेषां भावनार्थमपि तेषु ब्रह्मशब्दप्रयोगोपपत्तेरित्यत आह- **येऽन्यथेति** । स्पष्टं वचनमाह- **नाविद्यमानमिति** । यच्चोक्तं मायावादिना 'आनन्दमयोऽपि न ब्रह्म किन्तु जीव एव । तत्र तर्हि ब्रह्मशब्दाभ्यास 'अनन्दमयोऽभ्यासात्' इति सूत्रकारवचनं च कथमुपपद्यत इत्यतः तदानन्दमयाख्यजीवस्य ब्रह्मैक्यविवक्षाया युज्यत इति । तन्निराकरोति- **स इति** । 'स यश्चायं पुरुषे','यश्चासावादित्ये' इत्यादिवाक्येन जीवेश्वरयोर्भेदस्यैवोक्तत्वादेवं व्यवस्था कल्पना न युक्तेत्यर्थः । 'स यश्चायं' इति वाक्ये देहाद्युपाधि-विशिष्टाकारादेवेश्वरस्य भेदः प्रतिपाद्येत न तु निष्कृष्टजीवस्वरूपादि-त्यात्राह- **एतस्मिन्नदृश्य इत्यादिना** । अत्र देहाद्युपाधिरहितायां जीवमुक्त्यवस्थायामपि जीवस्य ब्रह्मप्रतियोगिकभेदस्य स्पष्टमेव मोक्षगतभेदप्रतिपादकत्वात् ।

ननु एषां वाक्यानां मोक्षगतभेदप्रतिपादकत्वमेव कुत इत्यत आह- **अथेति** । मायावादिनस्तु 'सैषानन्दस्य मीमांसा' इत्यादिवाक्यसन्दर्भं केवलसांसारिकसुखतारतम्यप्रतिपादनपरतया व्याकुर्वन्ति । तत्स्वव्याख्या-स्थापनार्थं निराकरोति- **सैषेति** । पूर्वोक्तप्रमाणसमुच्चयार्थः चकारः । ननु श्रोत्रियत्वाकामहतत्वविशेषणाभ्यां कथं मुक्तत्वनिश्चय इत्यत आह- **न हीत्यादिना** । अकामहतत्वं श्रोत्रियत्वं च मुक्तादन्यस्य मुख्यतो न सम्भवतीत्येतत् कुत इत्यत आह- **यस्येति** । ननु मुक्तानां कामा एव न सन्ति । कुतः कामाहततेत्यत आह- **न ह्यकाम इति** । यच्चोक्तं 'श्रोत्रियस्य चाकामहतस्य' इत्यनेन तत्पदे विरक्तस्य तत्तत्प्रकाराद्विरक्त-स्यान्यस्यापि तत्तत्पदस्थितदेवैः समानानन्दत्वमुच्यत इति । तदपि निराकरोति- **न चेति** । देवपदाकामस्य सकाशादिन्द्रपदाकामस्य

शतगुणानन्दत्वघटनार्थं सति च प्राजापत्यादिकाम इत्युक्तम् । यदि चेन्द्रपदाकामी प्राजापत्यादिपदेऽप्यकामी स्यात् । तथात्वे प्राजापत्याद्यानन्दसमानानन्दप्राप्तेरस्य देवपदाकामवतः सकाशादिन्द्रपदाकामस्य शतगुणानन्दत्वमेवेति नियमो न स्यात् । तन्नियमसिद्ध्यर्थं प्राजापत्यादिकाम इत्युक्तम् ।

ननु इन्द्रपदाकामानामेव लोके अभावात् तेषां देवपदाकामेभ्यः शतगुणानन्दाधिक्यादर्शनं न दोषायेत्यत आह- **न चेति** । ननु भवत्पक्षेऽपि न सर्ववाक्यानां मुक्तामुक्तविषयत्वं युज्यते । चक्रवर्त्याद्यानन्द-प्रमाणमुच्यन्ते । अकामा इति ज्ञानिनः सर्वकामपरित्यागः श्रवणादित्यत आह- **यदेति** । भवेदेवं व्यवस्था । स्वरूपभूतकामस्य प्रामाणिकत्वे तदेव कुत इत्यतः स्वरूपभूतकामसद्भावे प्रमाणमाह- **यं यमिति** । मुक्तानां स्वरूपभूतकामादिसद्भावे स्पष्टवचनं चाह- **काम इति** । मुक्तानां कामसद्भावे सूत्रसम्मतिं चाह- **सङ्कल्पादिति** । सूत्रप्रस्तावादेव पूर्वोक्तजीवभेदेऽपि सूत्रसम्मतिमाह- **भेदव्यपदेशादिति** । ननु सूत्रसिद्धत्वेऽपि न भेदस्य पारमार्थिकत्वं युज्यते । अपि तु अविद्याविजृम्भितत्वमेव भेदज्ञानस्यैव उत्पत्तुमशक्यत्वात् । तथाहि । इदमस्माद्भिन्नमिति धर्मिप्रतियोगिभावापेक्षया भेदसिद्धिः भेदापेक्षश्च धर्मिप्रतियोगिभावः । तथा चान्योन्याश्रयत्वम् ।

अथवा अनयोर्भेद इति विशेषणविशेष्यतया भेदसिद्धिः । सा च भेदापेक्षेत्यन्योन्याश्रयग्रस्तत्वान्न भेदज्ञानं सुकरम् । अतः सूत्रसिद्धोऽपि भेदोऽज्ञानविजृम्भित एव न तु पारमार्थिक इत्याशङ्क्याह- **न चेति** । कुतो सुकरं न भवतीत्यत आह- **स्वरूपत्वादिति** । भेदस्य स्वरूपत्वमुपपादयति- **सर्वेति** । अयमर्थः । भेदस्य स्वरूपत्वं वदतामस्माकं अयमभिप्रायः । यत्सर्वव्यावृत्तं वस्तु स एव भेद इति वस्तुनश्च सर्वव्यावृत्तत्वमनुभवसिद्धमिति । अथवा सर्वस्य घटपटादेर्वस्तुनः स्वरूपं स्वप्रतीतौ

नियमेन सर्वप्रतियोगिकव्यावृत्त्या सहैवानुभूयते । अतश्च भेदस्य वस्तुस्वरूपत्वसिद्धिरित्यर्थः । एतदुक्तम् । 'स्वरूपं वस्तुनो भेदोऽयं न तस्य' इति । सर्वव्यावृत्तत्वेन वस्तु अनुभूत इत्यनङ्गीकारे बाधकमाह - **अन्यथेति** ।

ननु दृष्टपदार्थस्य पुरुषस्यादृष्टपदार्थे वस्त्वन्तरासङ्कीर्णत्वविषये सन्देहो न ज्ञायत इत्येतावता भेदस्य वस्तुस्वरूपत्वं कल्पयितुं शक्यम् । वस्तुदर्शनानन्तरं दृश्यमानेनापि भेदेन सन्देहाभावोपपत्तेरित्यत आह - **न चेति** । वस्तुदर्शनकाले तस्य सर्वस्माद्भेदो न ज्ञायत इत्यङ्गीकारे अहं वा दृष्टोऽन्यो वेति संशयः स्यादिति । यदापाद्यस्वरूपत्वमुक्तं तस्यानिष्टत्वं दर्शयति- **न हीति** । नन्वथापि सर्वव्यावृत्तत्वेन वस्त्वनुभूयत इति न युज्यते । सर्वज्ञानमन्तरेण सर्वव्यावृत्तताया एव ज्ञातुमशक्यत्वादिति । तत्राह- **न चेति** । किं सर्वव्यावृत्तिज्ञानार्थं सामान्यतः सर्वज्ञान-स्यापेक्षितत्वं ब्रूषे उत विशेषाकारेणापि । आद्ये तदस्तीत्याह- **सामान्यत इति** । अथ विशेषाकारेण सर्वज्ञानमापाद्यत इति । तदपि न । विशेषाकारेण सर्वप्रतियोगिभ्यो व्यावृत्तत्वेन वस्तु विज्ञानस्यास्माभि-रनङ्गीकारादित्याह- **यावत्त्विति** । इतोऽपि विशेषाकारेण सर्वप्रतियोगिभ्यो व्यावृत्तत्वेन वस्तु न ज्ञायत इत्याह- **न हीति** । यदि सर्ववस्तुभ्योऽपि विशेषाकारेण व्यावृत्तवस्तु ज्ञायते तर्हि स्थाणुर्वा पुरुषो वेत्यादि संशयो न स्यात् । सर्वविलक्षणत्वेन ज्ञाताद्वस्तुनोऽन्यस्याव्यावृत्तेः शङ्कितुमशक्यत्वात् इत्यर्थः ।

ननु यदि भेदो वस्तुनः स्वरूपं तर्हि वस्तुज्ञानसमये तद्भेदस्यापि ज्ञातत्वात् । पुनः स्थाणुर्वा पुरुषो वेत्यादि संशयो न स्यादित्यत आह- **यदा त्विति** । संशयसमयेऽपि सामान्यतः सर्वव्यावृत्तत्वेनैव वस्तु ज्ञायते । न सर्ववस्त्वात्मकत्वेन किन्तु प्रतियोगिविशेषेभ्य एव सादृश्यादिदोषवशाद्

विशेषतो भेदो न ज्ञायत इत्यर्थः । संशयसमयेऽपि सामान्यतः सर्वव्यावृत्तत्वेनैव वस्तु प्रतीयत इत्यनङ्गीकारे बाधकमाह- **न हीति** । भेदस्य वस्तुस्वरूपत्वमुपसंहरति- **अत इति** । व्यावृत्तिर्नाम भेदो वस्तुनः स्वरूपमेवेत्यर्थः । अथापि भेदस्य वस्तुस्वरूपत्वं न युज्यते । 'अस्य भेद' इति वस्तुविशेषणतया भेदस्य प्रतीयमानत्वादित्यत आह - **अस्येति** । नन्वस्तु नाम वस्तुस्वरूपत्वाद्भेदस्य धर्मिप्रतीत्यनन्तरप्रतीतिकत्वाभावः । तथाऽपि प्रतियोगिकप्रतीत्यनन्तरं भेदप्रतीतिः भेदप्रतीत्यनधीना च प्रतियोगिप्रतीतिः भेदाज्ञाने प्रतियोगिन एव ज्ञातुमशक्यत्वात् । तथा च अन्योन्याश्रय एवेत्यतो नान्योन्याश्रयः, भेदप्रतीतिसमय एव प्रतियोगिनोऽपि सामान्याकारेण प्रतीतेरित्येतमर्थं सदृष्टान्तमाह - **यथेति** । ननु भवतामभेदप्रतीतिसमय एव प्रतियोगिनो ज्ञातत्वादन्योन्याश्रयत्वाभावः । तथाऽपि वस्तुभेदयोरेकत्वं युक्तं भेदस्य प्रतियोगिप्रतीतिसापेक्षत्वात् वस्तुनश्च तदभावात् । सापेक्षनिरपेक्षयोश्च विरोधेनैकत्वायोगादित्यत आह- **न हीति** । यथा अस्ति वा ब्रह्म नास्ति वेति शून्यवादि-मतावलम्बनेन पृच्छन्तं शिष्यं प्रति अस्ति ब्रह्म इत्युपदेशवाक्येन वर्तमानकालापेक्षया प्रतीयमाना विद्यमानता न ब्रह्मस्वरूपादन्या, यथा च सामान्यादयः सन्तीति वैशेषिकमते सामान्यादीनां वर्तमानकालापेक्षया प्रतीयमाना विद्यमानता न सामान्यादिभ्योऽन्या एवं प्रतियोगिप्रतीति-सापेक्षस्यापि भेदस्य निरपेक्षवस्तुस्वरूपता न विरुद्ध्यत इत्यर्थः ।

ननु भवतु नाम शिष्यं प्रति अस्ति ब्रह्मेति परिहाराभिधाने कालसम्बन्धितया विद्यमानतायाः प्रतीतिः, यदा तु शिष्यं प्रति 'सत् ब्रह्म' इत्युत्तरमभिधीयते तदा न कालसम्बन्धितया विद्यमानतायाः प्रतीतिर्वर्तमानार्थकलट्प्रयोगाभावात् । ततश्च सापेक्षनिरपेक्षयोरभेदो नास्तीति व्याप्तेः कुत्र व्यभिचारदर्शनमित्यत आह- **सदिति** । यद्यप्यस्ति

वा ब्रह्म नास्ति वेति पृच्छन्तं शिष्यं प्रति 'सद् ब्रह्म' इति परिहारोऽभिधीयते, तथापि सच्छब्देन प्रतीतस्य कालसम्बन्धित्वं च निराकार्यम् । तत्कुत इत्यत आह - **शत्रन्तत्वादिति** । तत्र शत्रृप्रत्ययस्य लटः 'शतृशानचावप्रथमा समानाधिकरण' इति लडादेशरूपत्वात् । लडर्थ एवार्थ इति । तदन्तस्य सच्छब्दस्य च वर्तमानकालसम्बन्धिसत्तावाचित्वं अपरिहार्यमेवेत्यर्थः । अत्र दृष्टान्तमाह- **तिष्ठन्निति** ।

एवं दृष्टान्तमुक्त्वा दार्ष्टान्तिकं घटयति - **एवमन्यस्मादिति** । अन्येन सह प्रतीयमानमिति प्रतियोगिज्ञानेन सह ज्ञायमानव्यावृत्तत्वमित्यर्थः । ननु भेदो नामानेकवस्तुनिष्ठ एको धर्मः । तस्य च वस्तुस्वरूपत्वे अनेकेषामपि वस्तूनामभेद एव प्राप्नोतीत्यत आह- **अस्मादिति** ।

ननु भेदस्य वस्तुनश्चैकरसत्वे भेदो वस्तुस्वरूपं इत्यादि विशेषव्यवहारायोगः पर्यायत्वेन सहप्रयोगानुपपत्तेरित्यत आह- **ज्ञानेति** । अथापि भेदस्य वस्तुस्वरूपत्वं न युज्यते । विकल्पासहत्वात् । तथा हि । भेदस्य वस्तुस्वरूपत्वे भेदवस्तुनोरेकतरतावशेषः स्यात् । भेदस्य वस्तुनश्चोभयोः पृथगवस्थानाङ्गीकारे भेदस्य वस्तुस्वरूपत्वासम्भवात् । भेदमवशिष्य वस्तुनो भेदोऽङ्गीक्रियते वा वस्त्ववशेष्यभेदस्याभावो वा । न प्रथमः । कस्य भेद इति प्रश्नस्योत्तराभावप्रसङ्गात् । निराधारस्य भेदस्य निरूपयितुमशक्यत्वाच्च । नापि द्वितीयः । भेदो नास्ति वस्त्वेवास्ति इति पक्षे अद्वैतवादाश्रयप्रसङ्गादित्यत आह- **न चेति** । कुतो न भवतीत्यतो ज्ञानानन्दादिषु व्याप्त्यभावादित्याह- **ज्ञानेति** । तथा सति ज्ञानानन्दादीनामेकरसत्वेऽपि तेष्वेकस्यावशेषः एकस्याभाव इति नास्ति । एकस्य सत्त्वेऽपि विशेषबलेन उभयोरपि सद्भावोपपत्तेरित्यर्थः ।

ननु भेदस्य **वस्तुस्वरूपत्वे स्वस्मादपि स्वस्य** भेदः तदवयवस्यापि **स्वस्मिन्भेद** इत्यतः शून्यतापत्तिरित्यत आह- **अन्यप्रतियोगित्वादिति** । एवं तावदियत्ता प्रखण्डेन **भेदस्य** वस्तुस्वरूपत्वमुपपादितम् । इदनीं तु भेदमात्रस्य त्रैकालिकसत्त्वमिति येऽभ्युपगच्छन्ति तन्मतनिरासार्थमनुवदति- **भेदस्त्विति** । यो घटादिवस्तूनां भेदः स एषां स्वरूपमेव न तु धर्मभूतः । कुतः । **नैजम्** अनागन्तुकमिति यावत् । भेदस्याव्ययत्वं किं वस्तुनाशपर्यन्तं उत सर्वकालेऽपीत्यतः, सर्वकालेऽपीत्याह- **नष्टानामिति** । ननु **नष्टवस्तूनामपि चेद्भेदो** न नश्यति । तर्हि वस्तुनाशानन्तरं किमाश्रितोऽसौ तिष्ठतीत्यपेक्षायामाह- **अवस्तुन इति** ।

यथा वस्तुनाशात्पूर्वं वस्तुनो रूपं भेदः । एवं वस्तुनाशानन्तरं अवस्तुनो रूपं **नष्टस्य** वस्तुनो रूपमित्यर्थः । ननु यदि **नष्टस्यापि** वस्तुनो रूपं भेदः तर्हि भेदस्यापि **नष्टत्वात्** कथं वस्तुनाशानन्तरमपि भेदस्य अवस्थानमित्यत आह- **विशेषेति** । गुणक्रियाभेदाद्यनेकसमुदायात्मकं हि वस्तुनः **स्वरूपम्** । तत्र यत् पृथुबुध्नोदरत्वाद्याकारो विशेषः वस्तुनाशसमये तस्यैव नाशो भवति । न तु भेदाख्यविशेषस्यापि । अतो वस्तुनाशानन्तरमपि भेदस्यावस्थानं न विज्ञायत इत्यर्थः । सिद्धान्तमाह- **तत्राहुरिति** । भेदस्यापि न वस्तुस्वरूपत्वमिति यदुक्तं तत्रास्माकं संवाद एव न तु विप्रतिपत्तिः । यत्पुनरुक्तं वस्तुनाशानन्तरमपि भेदो न विनश्यतीति तत्तु न मृष्यामः इत्याह- **तस्मादिति** । यस्माद् भेदो न वस्तुनः स्वरूपमित्यङ्गीक्रियते । तस्मादेव कारणात् न वस्तुनाशानन्तरं भेदस्यावस्थानं युज्यते, न हि वस्त्वात्मको भेदो वस्तुनाशानन्तरमपि तिष्ठतीति युज्यते । तथात्वे वस्त्वभेदायोगादित्यर्थः । ननु यथा अनष्टवस्तुनः सकाशात् नष्टस्य वस्तुनो भेदाभावः तथा नष्टादनष्टस्यापि भेदो नास्त्येव किमिति नेत्याह- **अविनेष्टस्येति** ।

अविनष्टस्य तु पदार्थस्य तस्माद् विनष्टात् कटादेर्भेदोऽस्त्येव । कुतः । स्वरूपतः अविनष्टवस्तुनः स्वरूपस्य विद्यमानत्वेन तद्भेदस्यापि विद्यमानत्वोपपत्तेरित्यर्थः । एवं नष्टानष्टवस्तुनोर्भेदनिरूपणप्रसङ्गात् भावाभावयोरपि भेदोऽस्तु इति प्रकारं निरूपयति- **एवमिति** । यथा अवस्तुनो भेदोऽप्यवस्तुभूत एव । अवस्तुनः सकाशाद् वस्तुनो भेदस्तु वस्तुभूतः । एवं भावपदार्थादभावस्य यो भेदः स भावरूपवान्न भवति किन्तु सोऽप्यभावरूप एव । अभावात्तु भावस्य यो भेदः स भावरूप एव नाभावात्मक इत्यर्थः । एवं नष्टवस्तुना पश्चाद् भेदो नास्तीत्यभिहितम् ।

इदानीं तु यदि तद्भेदः सर्वथाप्यग्रहः तर्हि असावेवमुपपादनीय इत्याह- **नष्टभेद इति** । नष्टस्य घटादेर्यो भेदः अनष्टघटादेः स च विद्यत एव न त्वसत् । कथमभावात्मा नष्टस्य घटादेर्यः प्रध्वंसाभावः तदात्मा तद्रूपः स च भेदो भावरूपो न भवति । किन्त्वभावात्मक एवेत्याह- **विनाशत इति** । अभावरूपेणेत्यर्थः । नन्वयं भेदविषये विचार एव न युज्यते अन्योन्याश्रयादिदोषदुष्टत्वेन भेदस्यैव ज्ञातुमशक्यत्वादित्यत आह- **स्वरूपत्वादिति** । भेदस्य वस्तुस्वरूपत्वमुपपादयति- **सर्वमिति** । नन्वभावस्य निधर्मकत्वेन प्रतियोगित्वस्याप्यभावात् कथं तस्माद् भावस्य भेद इत्यत आह- **प्रतियोगितेति** । अत एवाभावोऽपि धर्माधर्मरहितो न स्यात् किन्तु भावधर्मरहित एव भवतीत्याह- **न हीत्यादिना** । नन्वभावस्य भावरूपा धर्मा न सन्तीति यदुक्तं, तन्न युक्तम् । अस्त्यभाव इत्यादिप्रतीतौ भावरूपधर्मस्य दर्शनादित्यत आह- **अभावस्येति** । यथा घटस्यास्तितामघटस्वरूपान्न व्यतिरिच्यते । एवमभावस्यास्तितापि अभावरूपान्न व्यतिरिच्यते किन्त्वभावरूपिण्येव भवति । एवं अभावता इत्यत्र अभावे यो भावधर्मः प्रतीयते । अभावस्य भावः अभावतेति साप्यभावताऽऽभावरूपैव न तु भावरूपिणी । यथाऽघटता इत्यत्र

प्रतीयमानाभावता न घटस्वरूपादतिरिच्यते । सैवेति प्रमाणवाक्ये प्रथमप्रकृतप्रमेयमुपसंहरति- **अत इति** । अथ 'ब्रह्मविदाप्नोति परम्' इत्युपक्रम्य आनन्दवल्लीसमाप्तिपर्यन्ते ग्रन्थसन्दर्भे यत्र क्वचित् भाष्यसिद्धोऽर्थः कथ्यते । तत्र प्रथमं यतिष्यमाणा साक्षाद् ब्रह्मविद्यानिरूपणस्य निर्विघ्नत्वसिद्ध्यर्थं देवता प्रार्थ्यते- **सह नौ इति** ।

तद्ब्रह्म नौ गुरुशिष्यौ सह युगपदेव अवतु प्रविशतु । तद्ब्रह्म नौ युगपद् भुनक्तु भोजयतु । 'भुजपालनाभ्यवहारयोरिति धातोः' । एवं लोके पाषण्डिनिराकरणादिवीर्यं सहैव करवावहै । तेजस्विनौ सामर्थ्यवन्तौ, भवावः आवयोरधीतं अध्ययनं अस्तु भवतु, मा विद्विषावहै परस्परविद्वेषयुक्तौ न भवेव । किन्तु सर्वोपद्रवाणां शान्तिरेवास्त्वित्यर्थः । 'ब्रह्मविदाप्नोति परम्' इत्युक्ते शंकात्रयमुदेति । किं लक्षणकं तद् ब्रह्म कथं च तस्य वेदनं, किं सोऽस्मीति, किं वा तदीयोऽस्मीति । कथं च नित्यसर्वगतस्य ब्रह्मणः प्राप्तिरिति । तत्र प्रथमचोद्यस्य परिहार उच्यते 'सत्यं ज्ञानमनन्तं' इत्यादिना । द्वितीयस्य 'यो वेद' इत्यादिना । तृतीयस्य 'सोऽश्नुते सर्वान्' इति । 'तस्माद्वा एतस्माद्' इत्यादिना तु सत्यादिशब्दानामर्था एव प्रपञ्चयन्ते । अन्नाख्यब्रह्मोपासकानां सर्वान्न-प्राप्तिर्भवतीत्येतत् कुत इत्यतो अन्नस्य पूर्वोक्तं माहात्म्यमनुवदति 'अन्नं हि भूतानां ज्येष्ठम्' इत्यादि । उत्तरवाक्ये 'पुच्छम्' इत्युक्ते लाङ्गूलमिति प्रतीयते । तां प्रतीतिं निवारयितुं 'प्रतिष्ठा इत्युक्तम् । सर्वत्रापि प्रतिष्ठाशब्दस्य पादार्थत्वात् । 'एतं ह वाव न तपति इति' अयं ब्रह्मज्ञानी कुतस्तत्प्राप्तो न भवतीत्यत उच्यते 'स य एवं विद्वानेते आत्मानं स्पृणुत' इति । अस्यार्थः । स यः कः अपि वा एवं उक्तप्रकारेण ब्रह्म विद्यात् स आत्मानं आत्मनः. एते पुण्यपापे, स्तृणुते आस्तृणोति सुहृज्जने पुण्यं असुहृज्जने पापं च निक्षिपतीत्यर्थः ।

